ॐ

प. पू. पंन्यासमणिविजयजीगणिवरग्रन्थमाला नं० ११

आचार्यश्रीअजितदेवसूरिगुम्फिता प्रथमश्रुतस्कन्धस्य

# श्रीआचाराङ्गसूत्रदीपिका ।

संशोधकः—आचार्यमहाराजश्रीविजयकुमुदसूरिः

प्रकाशिका :—

लींबवास्तव्य महेताकेवलदासात्मज धर्म्मप्रियौदार्यभृत् श्रेष्ठि पोपटलालेन वितीर्ण-
ज्ञानद्रव्ययुक्तपरिपूर्णद्रव्यसाहाय्येन पंन्यासश्रीमणिविजयजीगणिवरग्रन्थमाला ।

श्रीभावनगरे महोदयमुद्रणालये श्रेष्ठि गुलाबचन्द्रेण लल्लुचन्द्रात्मजेन मुद्रिता

वीर संवत् २४७५ मूल्यं रू. ६-०-० विक्रम संवत् २००५

# शुद्धिपत्रम् ।

| पृष्ठ लींटि | अशुद्ध | शुद्ध |
|---|---|---|
| २—३ | णस्य | णस्स |
| २—११ | तः— | तः, |
| २—१३ | तं जह | तंजह |
| ५—२ | तिव | तिर्च |
| ५—११ | सम्म | सन्म |
| १२—७ | लज्जा | लज्ज |
| १३—५ | पुथवि | पुढवि |
| १५—८ | पश्यति | पश्यन्ति |
| १९—६ | इखकई | इक्खइ |
| ३२—६ | विर्हिस | विर्हिसं |
| ३४-१३ | पादित्वात् | पादितत्वात् |
| ३५—२ | योग्गं | योगं |

| पृष्ठ लींटि | अशुद्ध | शुद्ध |
|---|---|---|
| ४९—८ | विह | विहा |
| ५५—१३ | दण्डयते | दंड्यन्ते |
| ५९—४ | कर्मण्वि | कर्म्मवि |
| ६२—६ | पैत्ति | पैति |
| ७३—५ | सैदुः | सैर्दुः |
| ७४—१२ | त्युपे | त्युत्पे |
| ७४ हेडींग- | रेका | रेक |
| ७८—३ | द्रष्ट | द्रष्ट |
| ८९—१ | घातक | घात |
| ९५—१२ | त्याख्पा | त्याख्या |
| ९६—१३ | पदश | पदेश |
| ११६—१२ | सव्वे | सर्व्वे |

| पृष्ठ लींटि | अशुद्ध | शुद्ध |
|---|---|---|
| ११९—६ | क्रोघ | क्रोध |
| १२७—३ | कट्ट | कट्टु |
| १२८—११ | वहु | वह्नु |
| १३७—४ | पचे | पञ्चे |
| १३७—७ | ग्राह | नाह |
| १४०—२ | वद्य | वद्या |
| १४०—१२ | येतृश | येत् श |
| १४३—१० | दीन्न | दीन |
| १६३ हेडींग- | नकम् | नम् |
| १६७—६ | राद्यो | रायोदया |
| १७४—४ | विधा | विदा |
| १७५—१ | तथास | तथा स |

| पृष्ठ लींटि | अशुद्ध | शुद्ध |
|---|---|---|
| १८२—९ | करुणा | करुणा— |
| २०९—३ | धृतजो | धृतरजो |
| २११—१ | वासो | वाऽसौ |
| २२२-हेडींग- | साढा | सोढा |
| २२३—१ | स्तौर्म | स्तैर्मि |
| २२३—७ | माण | माणं |
| २२५-हेडींग- | वरजीवा | जीवा |
| २२५—१४ | सर्व्वेशो | सर्व्वशो |
| २२६—२ | दशी | दर्शी |
| २२६—२ | दशी | दर्शी |
| २२८—३ | चीर्ण्ण | चीर्ण्णे |
| २३९—१२ | लब्ध | लब्धे |

# ॥ प्रस्तावना ॥

आ परमपुनित श्रीआचारांग सूत्रनी दीपिका मोक्षाभिलाषी, ज्ञानदर्शनचारित्रना आचारोने सेवनारा साधुभगवंतोना कर-कमलमां अर्पण करतां अमोने अत्यंत आह्लाद थाय छे, जे आचारांग सूत्र पूज्यपाद गणधरदेव श्रीसुधर्मास्वामिजीए रचेल छे, अने जेमां साधुओना आचारनुं स्वरूप बतावतां जीवसिद्धि, परलोकसिद्धि, द्रव्य अने भाव दिशाओनुं निरूपण–पृथ्वीकायादि षड्-जीवनिकायनी सिद्धि तथा तेनी दया पालनार पंचमहाव्रती सत्य साधुनुं स्वरूप, लोकनुं स्वरूप, क्रोध मद विगेरे अंतरंग शत्रुओनो विजय करवानो अमोघ उपाय–संयमनी निर्भयदशा विगेरे हकीकत बतावेल छे, तेमज छेल्ला अध्ययनमां परम आराध्य भगवान श्री महावीरदेवे आचरेल कडक आचारनुं निरूपण करेल छे.

ते श्री आचारांग सूत्रनी बृहद्वृत्ति पूज्यपाद श्री शीलांकाचार्यदेवे बहु विस्तारथी वादस्थलो बताववापूर्वक करी छे जे सामान्य बोधवाळा साधु साध्वीओने अभ्यासमां कठिण पडे छे, तेथी आचार्यश्री अजितदेवसूरिजीए ते श्रीशीलांकाचार्यकृत टीकामांथी फक्त सूत्रना शब्दार्थने प्रगट करनार पू० शीलांकाचार्यनी पंक्तिओ चुंटीने तेने दीपिकारूपे गुंथी छे, कोई कोई ठेकाणे ते शब्दार्थना पर्यायो वधार्या छे, एटले वस्तुतः आ चुंटेलो संक्षिप्त ग्रन्थ पण पू० शीलांकाचार्य महाराजनो ज गणाय, पण तेथी अल्प बोधवालाने लाभ ए थयो के सूत्रना शब्दार्थ समजवा सुलभ थई पड्या, संक्षिप्त चुंटणी करवी ते पण महेनतवाळुं कार्य छे, तेथी पू० श्री अजितदेवसूरिजीए अल्प बोधवालाओ उपर उपकार कर्यो छे तेनी ना पाडी शकाय ज नहि पण विद्वद्भोग्य तो बृहद्वृत्ति छे.

दीपिकानी आ प्रत पाटणना भंडारमांथी एक साहित्यप्रिय मुनिराजद्वारा मेळववामां आवी. तपास करतां उपर्युक्त बीना
जाणवामां आवी, तेथी शोधती वखते बृहद्वृत्तिनो आसरो लई शोधी प्रकाशित करवामां आवी छे, पण आ प्रत प्रथम श्रुतस्कंध
सुधीनी छे, बीजा श्रुतस्कंधनी पण ते प्रति मेळववा प्रयास करवामां आव्यो. पण कोई ठेकाणेथी मळी शकी नथी. हवे आ पुस्तक
बहार पडतां कोई भंडारमां बीजा श्रुतस्कंधनी ते प्रत होय तो तेने पंडित महाशयो जणावशे तो प्रकट कराववा अमो तरत लक्ष्य
उपर लईशुं अने आ दीपिका पण पूर्ण थशे.

आचार्य श्री अजितदेवसूरिजी कया समयमां थया ते जिज्ञासा पूर्ण करवा तेओश्रीए ज पोताने आ दीपिकामां चंद्रगच्छीय
महेश्वरसूरिजीना पट्टधर जणाव्या छे. ते विषे वधु तपास करतां श्रीयुत् मोहनलाल देशाइकृत जैन साहित्य संक्षेप इतिहासमां पाने
५८५ में लखेल छे के "सं. १६२९ मां चंद्रगच्छीय( पछीथी पल्लीवाल गच्छीय ) महेश्वरसूरिना पट्टधर अजितदेवसूरिए उत्तरा-
ध्ययन बालावबोधिनी टीका रची. तेमणे आचारांग उपर "दीपिका" नामनी वृत्ति तथा आराधना रची छे." आ उपरथी
तेओश्रीनो सत्ताकाल सत्तरमा सैकानो छे ते निर्विवाद वात छे. चोकस साल तो बीजा श्रुतस्कंधना अंते मळी आववा संभव गणाय;
परंतु ते प्रत मळी शकी नथी, तेथी चोकस वर्ष बताववानुं बनी शक्युं नथी. पण तेओश्रीए अल्प बोधवाला साधु साध्वी सूत्रना
शब्दार्थ जाणी मनन करे, आचारमां उतारे. मोक्षमार्गमां सतत उद्यमवंत रहे अने जन्म सफल करे ते रूपनो महान् उपकार
करेल छे, ते निःशय बीना छे. आ ग्रंथनो विषयानुक्रम हेडींग उपरथी समजी लेवा वांचकवर्गने भलामण करवामां आवे छे.

आवा सख्त मोंघवारीना कालमां अमारी ग्रंथमालाए पोतानुं कार्य त्रण वर्ष सुधी बंध राख्युं छतां समय तो तेवो ने तेवो मोंघ-

: प. पू. पंन्यासजी महाराज श्री मणिविजयजी गणिवर :



जन्म : १९२१ : कपडवंज : स्वर्गवास : १९७८ कार्तिक सुदी ३ : आपज :

दीक्षा : १९४५ : कासींद्रा : वडी दीक्षा : १९४६ महा सुदी ५ : राजनगर :
पंन्यासपदोपस्थापना : १९७० कारतक वदी २ : छाणी :

 

जन्म : १९३७ फागण सुदी ५ : खडसलीया : दीक्षा : १९५८ कार्तिक वदी २ अमदावाद.
गणिपद : १९७६ : सुरत : पंन्यासपद : १९७८ वैशाख सुदी ३ : पालीताणा :

: पूज्यपाद आचार्य श्री विजयकुमुदसूरीश्वरजी महाराज :



उपाध्यायपद : १९९१ चैत्र वदी ५ : कदंबगिरि :
आचार्यपद : १९९२ वैशाख सुदी ४ : पालीताणा :







દાનવીર

શેઠ પોપટલાલ કેવલદાસ મહેતા

મુ. લીંચ.



वारीनो चालतो ज रह्यो. बल्के मोंघवारी वधी पडी. तेथी विचार करवामां आव्यो के कोई सहायक मली जाय तो काम शरु राखवुं व्यर्थ टाइम गुमाववो नहि. एटलामां धर्मप्रेमी पुण्यात्मा शेठ पोपटलाल केवलदासभाई लींचवाला परमपूज्य पुण्यनामधेय आचार्यदेव श्री विजयकुमुदसूरीश्वरजी महाराजने अत्याग्रह करी लींच चोमासुं करवा लाव्या. अने पोतानी स्वाभाविक उदारताथी बहु उल्लासभावथी विधिविधान साचवी वडा आडम्बरपूर्वक श्री भगवती सूत्रनी वाचना शरु करावी. शेठ पोपटलाल केवलदास लींचमां प्रसिद्ध एक म्हेता कुटुंबना नबीरा छे. तेमणे पोतानी प्राथमिक अवस्था सामान्यपणे पसार करी वेपार अर्थे मुंबाइ जतां तेमना उपर लक्ष्मीदेवी प्रसन्न थया. प्राथमिक अवस्थामांथी ज उदारता, नम्रता, परोपकारिता, विगेरे गुणोना भाजन हता. तेथी लक्ष्मीदेवीनी प्रसन्नतानो लाभ उठाववानो समय आवी चूक्यो अने तेमणे ते समय ओळखी सारो द्रव्यव्यय नम्रताभावे शरु कर्यो. केळवणी विषयमां मेसाणा वीशाश्रीमाली जैन बोर्डींग कडी जैन बोर्डींग, विगेरेने लाखो रुपीआनुं दान कर्युं. कडी जैन बोर्डींगमां पोताना खर्चे एक जैनमंदिर करावी आप्युं साते क्षेत्रोमां पण दानप्रवाह वहेवराव्यो अने जे कोई पोताना घरे धार्मिक कार्य माटे आव्या तेने उल्लासभावे ते धर्मकार्य माटे द्रव्य अर्पण कर्युं. एम छेल्ला पांच वरसमां आठथी नव लाख रुपीआनुं दान कर्युं अने हजी पण दानप्रवाह वहेवरावी रह्या छे. समय सुधर्ये धार्मिक मोटा कार्यो करवा अभिलाषा राख्या करे छे पण ते भाविकालने आधीन छे. आ बधुं तेमनी वास्तविक समजणने लीधे बन्युं. संसारनी असारता तेमना जीवनमां बराबर समजाई गई छे, तेथी शक्य होय तेटलुं करी लेवुं ते जीवनने सफल करवा बराबर छे. कोईनी साथे लक्ष्मी गई नथी अने जवानी नथी. मोह–

ममतामां पडी जीव लाभथी वंचित रहे छे. पुण्योदये लक्ष्मी प्राप्त थई तो ते उपरथी ममत्व छोडी सन्मार्गे व्यय करवो अने हाथे ते साथे ए सूत्र चरितार्थ करवुं आवी तेमनी शुभ आत्मपरिणति रह्या करे छे. तेथी सादुं परिश्रमी जीवन कोई पण आडंबर विनानुं जीवी रह्या छे. ते धर्मप्रेमी दानवीर महाशये आ पुस्तक प्रगट करवामां भगवती वाचनाजन्य ज्ञानद्रव्य सहित संपूर्ण दान कर्युं तेथी अमो तेओश्रीना संपूर्ण टेकाथी आ ग्रंथ प्रकाशन करी शक्या.

अंतमां आ पुस्तक तैयार करी शोधी आपनार अमारा परम उपकारी पूज्यपाद आचार्यदेव श्री विजयकुमुदसूरीश्वरजी महाराजनो तथा शोधवामां मदद करनार मुनिराज निपुणविजयजीनो तथा पुस्तक मेळवी आपनार मुनिराजश्रीनो तथा उदारात्मा शेठ पोपटलालनो हार्दिकभावे आभार मानी धन्यवाद पाठवीए छीए अने इच्छीए छीए के–साधु महात्माओ आ ग्रंथने पठन–पाठन करी लाभ उठावी अमारी इच्छा पूर्ण करे.

लि० श्री. पं० मणिविजयजी गणिवर ग्रंथमाला,
कार्यवाहक–मास्तर नहालचंद ठाकरसी.
ता. २९–१०–४८.



प० पू० पं० मणिविजयजीगणिवरग्रन्थमाला नं० ११

श्रीचन्द्रगच्छीयाचार्यमहेश्वरसूरिपट्टधराजितदेवसूरिविरचिता

# श्रीआचाराङ्गसूत्रदीपिका

वर्द्धमानजिनो जीयाद्, भव्यानां वृद्धिदोऽनिशम्। बुद्धिवृद्धिकरोऽस्माकं भूयात् त्रैलोक्यपावनः ॥ १ ॥
श्रीआचारांगसूत्रस्य, बृहद्वृत्तिः सविस्तरा। दुर्विगाहाऽल्पबुद्धीनां, क्रियते तेन दीपिका ॥ २ ॥

अत्रेह द्वादशानामंगानां मध्ये प्रथमाङ्गं श्रीआचाराङ्गं, यतो ज्ञानाचारादीनां मोक्षाङ्गभूतानामिह प्ररूपणादाचाराङ्गम्। तस्य हि द्वौ श्रुतस्कंधौ, प्रथमश्रुतस्कंधे नवाऽध्ययनानि, द्वितीयश्रुतस्कंधे एकोनविंशत्यध्ययनानि। तत्र प्रथमश्रुतस्कंधे नवाऽध्ययनात्मके प्रथमं शस्त्रपरिज्ञाध्ययनं जीवसंयम इत्युच्यते, जीवेषु संयमः जीवसंयमः, यतः–जीवो छक्कायपरूवणा

मङ्गलादि।

॥ १ ॥

य तेसिं वहेण वंधोत्ति। विरईए अहिगारो सत्थपरिण्णाए णायव्वो ॥१॥ नवाऽध्ययनानि आचाररूपाणि, शेषाण्याचाराग्राणि।

यतः—अंगाण य किं सारो?, आयारो तस्स किं हवइ सारो? । अणुओगत्थो सारो, तस्सवि अ परूवणा सारो ॥ १ ॥ सारो परूवणाए चरणं, तस्सवि य होइ णिव्वाणं । णिव्वाणस्य य सारो अव्वावाहं जिणा विंति ॥ २ ॥ तस्यादिमं सूत्रम्—

" सुअं मे आउसंतेणं भगवया एवमक्खायं, इहमेगेसिं णो सण्णा भवइ, तंजहा–पुरत्थिमाओ वा दिसाओ आगओ अहमंसि, दाहिणाओ वा दिसाओ आगओ अहमंसि, पचत्थिमाओ वा दिसाओ आगओ अहमंसि, उत्तराओ वा दिसाओ आगओ अहमंसि, उड्ढाओ वा दिसाओ आगओ अहमंसि अहे दिसाओ वा आगओ अहमंसि, अण्णयरीओ वा दिसाओ अणुदिसाओ वा आगओ अहमंसि एवमेगेसिं णो णातं भवति "

'सुअं मे आउसंतेणं'त्ति–तत्र भगवान् श्रीसुधर्म्मास्वामी जम्बुस्वामिनं प्रतीदमाचष्टे। यथा 'मेत्ति' मया श्रुतमवधारितं कर्णाभ्यामित्यनेन स्वबुद्धेरौदासिन्यं दर्शितम् । किंभूतेन भगवता ? मया–आउसंतेणत्ति–आयुष्मता, वा शिष्यसंबुद्धौ हे आयुष्मन्–चिरंजीविन्। अथवा मयेति आमृशता भगवच्चरणारविन्दं इत्यनेन विनय आवेदितो भवति। अथवा आवसता वा समीपे इत्यनेन गुरुकुलवासः प्रतिपादितः–भगवतैवमाख्यातं–कथितम् । इह अस्मिन्नध्ययने इह अस्मिन् संसारे 'एगेसित्ति'–एकेषां ज्ञानावरणाद्यावृतानां प्राणिनां नो संज्ञा भवति–सम्यग् ज्ञानं संज्ञा स्मृतिरवबोधः सा नोपजायते । अत्र ज्ञानसंज्ञाधिकारः, प्रतिषिद्धसंज्ञाविशेषावगमार्थमाह–' तं जहत्ति ' तद्यथेतिप्रतिज्ञातार्थोदाहरणं दिशति । व्यपदिशति द्रव्यभागमिति दिक्, पूर्वस्या दिश आगतोऽहमस्मि, एवं दक्षिणस्या वा, अत्र वाशब्दो विकल्पार्थे, 'अन्नयरिओ दिसाओ वा अणुदिसाओ

वा आगओ अहमंसि' इत्यनेन दिग्ग्रहणात् प्रज्ञापकदिशश्चतस्रः ४ पूर्वादिका ऊर्द्धाऽधोदिशौ च परिगृह्यन्ते, अनुदिग्ग्रहणाच्च विदिशो द्वादश १२, तत्र दिशश्चतस्रो ४ विदिशश्चतस्रः ४ तासामन्तरा अष्टौ ८ अपरा विदिशः, एवं षोडश दिशः, ऊर्ध्वाऽधो द्वे दिशौ च एवं प्रज्ञापकदिशोऽष्टादश परिगृहीताः। एवमष्टादश भावदिशोऽप्यत्र ग्राह्याः। अथ भावदिशां परिज्ञानाय निर्युक्तिगाथामाह—

**मणुआ काया तिरिआ तहग्गबीया य चउक्कगा चउरो। देवा नेरइया वा, अट्ठारस हुंति भावदिसा ॥ १ ॥**

व्याख्या—मनुष्याश्चतुर्भेदाः, तद्यथा—कर्म्मभूमिजाः अकर्म्मभूमिजाः, अंतरद्वीपजाः सम्मूर्छजाः। कायाः पृथिव्यप्तेजोवायवश्चत्वारः ४ तिर्यञ्चो द्वीन्द्रियाः त्रीन्द्रियाः ( चतुरिन्द्रियाः पञ्चेन्द्रियाः ), तथाऽग्रमूलस्कन्धपर्व्वबीजाश्चत्वार एव, एताः षोडश दिशः १६। एतासां मध्ये देव-नारकप्रक्षेपादऽष्टादश १८। एभिर्भावैर्भवगता जीवो व्यपदिश्यते इति भावदिगऽष्टादशभेदेति। तत्राऽसञ्ज्ञिनां नैषोऽवबोधोऽस्ति, सञ्ज्ञिनामपि केषाञ्चिद् भवति, यथाऽहं मनुष्या दिशः समागत इहेति। एवमेगेसिं णो णायं भवतित्ति—एवमनेन प्रकारेण दिग्विदिगागमनं नैकेषां विदितं भवतीत्यर्थः। निर्युक्तिकृदाह—

**केसिंचि णाणसंण्णा अत्थि केसिंचि नत्थि जीवाणं। कोऽहं परम्मि लोए आसी कयरा दिसाओ वा ॥ १ ॥**

व्याख्या—केषाञ्चिज्जीवानां ज्ञानावरणीयक्षयोपशमवतां ज्ञानसंज्ञाऽस्ति, केषांचित् तदावृतिमतां न भवतीति। यादृशी संज्ञा न भवति तां दर्शयति—कोऽहं परस्मिन् भवे मनुष्यादिरासं, अनेन भावदिगुपात्ता। कतरस्या वा दिशः समायात इत्यनेन तु प्रज्ञापकदिग् गृहीता। यथा कश्चिन्नरो मदिराघूर्णितलोचनोऽव्यक्तमनाः अविज्ञातरथ्यापतितः छर्द्याकृष्टश्व-

गणावलिह्यमानवदनो गृहानीतो मदात्यये न जानाति कुतोऽहमागत इति, तथा प्रकृतो मनुष्यादिरपीति भावार्थः। न केवलमेषैव संज्ञा नास्ति, अपरापि नास्तीति सूत्रकृदाह—

" अत्थि मे आया उववाइए नत्थि मे आया उववाइए के अहं आसी ? के वा इओ चुओ इह पेचा भविस्सामि ? "

' अत्थि मे आयत्ति ' व्याख्या—अस्ति विद्यते ममाऽस्य शरीरस्यान्तर्वर्त्ती आत्मा जीवोऽस्ति, स किंभूतः ? औपपातिकः—उपपातो भवान्तरसंक्रान्तिस्तत्र भव औपपातिक इत्यनेन संसारिणः स्वरूपं दर्शयति, स एवंभूत आत्मा ममाऽस्ति नास्तीति चैवंभूता संज्ञा केषांचिदऽज्ञानावष्टब्धचेतसां न जायते। तथा कोऽहं नारकतिर्यग्मनुष्यादिरासं पूर्वजन्मनि, को वा देवादिरितो मनुष्यादेर्जन्मतश्च्युतो—विनष्ट इह संसारे—प्रेत्य—जन्मान्तरे भविष्यामि—उत्पत्स्ये इत्येषा च संज्ञा न भवतीति। इहमेगेसिं णो णायं इत्यनेन केषांचिदेव संज्ञानिषेधात् केषांचित्तु भवतीत्युक्तं भवति, तत्र सामान्यसंज्ञायाः प्रतिप्राणिप्रसिद्धत्वात् तत्कारणपरिज्ञानस्येहाऽकिञ्चित्करत्वाद्, विशिष्टसंज्ञायास्तु केषांचिदेव भावाद् विशिष्टसंज्ञायाः कारणं सूत्रकृद्दर्शयितुमाह—

" से जं पुण जाणेज्जा [ सोऽहं ] सह सम्मयाए परवागरणेणं अण्णेसिं वा अंतिए सोचा, तंजहा—पुरत्थिमाओ वा दिसाओ आगओ अहमंसि, जाव अन्नयरीओ दिसाओ अणुदिसाओ वा आगओ अहमंसि एवमेगेसिं जं णायं भवति अत्थि मे आया उववाइए जो इमाओ दिसाओ वा अणुदिसाओ वा अणुसंचरइ, सव्वाओवि दिसाओ सव्वाओ अणुदिसाओ, सोहं "—

सेजंत्ति—स इति प्राग् निरूपितो विशिष्टक्षयोपशमादिमान्, यदिति—प्राग्निर्दिष्टं दिग्विदिगागमनं, तथा कोऽहमभूवमतीतजन्मनि देवादिः, कोऽहं प्रेत्य देवादिर्भविष्यामीति परामृश्यते, जानीयादऽवगच्छेत्। इदमुक्तं भवति—न कश्चिदनादौ

संसृतौ पर्यटन्नसुमान् दिगागमनादिकं जानीयात्, यः पुनर्जानीयात् स एवाऽहं । 'सहसम्मत्ति'–सन्मत्या, कश्चिज्जानीते, आत्मना सह सदा या सन्मतिवर्तते तया सन्मत्या, सन्मतिश्चतुर्द्धा–अवधिमनःपर्यायकेवलज्ञानजातिस्मरणभेदात् । कश्चिच्च परः तीर्थकृत् सर्वज्ञस्तस्य व्याकरणमुपदेशस्तेन जीवांस्तद्भेदांश्च पृथिव्यादीन् गत्यागती च जानाति । अपरः पुनरन्येषां–तीर्थंकरव्यतिरिक्तानामतिशयज्ञानिनामन्तिके जानाति, यच्च जानाति तत्सूत्रावयवेन दर्शयति–तद्यथा–पूर्वस्या दिश आगतोऽहमस्मि, एवं दक्षिणस्याः पश्चिमाया उत्तरस्या उर्ध्वदिशोऽधोदिशोऽन्यतरस्या वा दिशोऽनुदिशो वाऽऽगतोऽहमस्मि, इत्येवमेकेषां विशिष्टक्षयोपशमादिमतां तीर्थंकराऽन्यातिशयज्ञानिबोधितानां च ज्ञातं भवति । तथा प्रतिविशिष्टदिगागमनपरिज्ञानानन्तरमेतेषां तदपि ज्ञातं भवति, यथाऽस्ति मे शरीरकस्याऽधिष्ठाता ज्ञानदर्शनोपयोगलक्षणः, उपपादको–भवान्तरसंक्रान्तिभाग् असर्वगतो भोक्ता मूर्तिरहितोऽविनाशी शरीरमात्रव्यापीत्यादिगुणवान् आत्मेति । तथाऽस्ति च ममाऽऽत्मा योऽमुष्या दिशोऽनुदिशश्च सकाशादनुसंचरति । एवं सर्वस्याश्चानुदिशोऽनुसंचरतीति सोऽहं–स एवाऽहमित्यर्थः । अनेन च पूर्वाद्याः प्रज्ञापकदिशः सर्वा गृहीताः, भावदिशश्चेति । सहसम्मत्यादिपरिज्ञाने सुखप्रतिपत्त्यर्थं त्रयो दृष्टान्ताः प्रदर्श्यन्ते–सम्मत्या जानीते वल्कलचीरीवत् श्रेयांस–करकण्डु–द्विमुख–नमिराजप्रभृतयः, परव्याकरणे त्विदमुदाहरणं–चिरसंसिट्ठोऽसि मे गोयमा चिरपरिचिओऽसि मे गोयमा, अथवा मेघकुमारवत् । अन्यश्रवणे त्विदमुदाहरणं–श्रीमल्लिस्वामिना षण्णां राज्ञां विवाहार्थागतानां प्रतिबोधो दत्तः । एभिर्दृष्टान्तैरयमात्मा गत्यागतिविशेषं जानीते, विशिष्टदिग्विदिगागमनं चेति भावार्थः । द्रव्यार्थतया नित्यं पर्यायार्थतयाऽनित्यमिति, स परमार्थतयाऽऽत्मवादीति सूत्रकृद्दर्शयति—

“ से आयावादी लोगावादी कम्मावादी किरियावादी ”

‘से आयावादी ’ति व्याख्या—से इति य एवं भ्रान्तः प्राग्नारकादिभावदिक्षु अमूर्त्तादिगुणोपेतं सर्वव्यापकलक्षणमात्मानं जानाति, स एवंभूत आत्मवादीति—आत्मानं वदितुं शीलमस्येत्यात्मवादी । यो विपरीतं मनुते नास्त्यात्मेति नास्तिकः । य एवाऽऽत्मवादी, स लोकः—षड्जीवनिकायरूपस्तं वदितुं शीलमस्येति लोकवादी, इत्यनेनाऽद्वैतवादिमतमपाकृतं, आत्मबहुत्वमङ्गीकृतम् । अथवा लोकश्चतुर्दशरज्ज्वात्मकः प्राणिगणो वा तत्रापतितुं शीलमस्येति । अनेन च विशिष्टाकाशखण्डस्य लोकसंज्ञा वेदिता । तत्र च जीवास्तिकायस्य संभवेन जीवानां गमनागमनमावेदितम् । य एवाऽऽत्मवादी लोकवादी च स एव कर्म्मवादी, कर्म्म—ज्ञानावरणीयादि, तद् वदितुं शीलमस्येति, प्राणिनो हि मिथ्यात्वादिसप्तपञ्चाशद्धेतुभिः कर्म्माण्याददते, पश्चात्तासु विरूपरूपासु योनिषूत्पद्यन्ते, अनेन कालवादिनो निरस्ताः । य एव कर्म्मवादी स एव क्रियावादी, योगनिमित्तं ( कर्म्म ) बध्यते योगश्च व्यापारः स च क्रियारूपोऽतः कर्म्मणः कार्यभूतस्य वदनात् क्रियावादी । क्रियायाश्च कर्म्मनिमित्तत्वमागमे, यतः—‘ जाव णं भंते ! एस जीवे सया समियं एयइ वेयइ चलति फन्दति घट्टति तिप्पति जाव तं तं भावं परिणमति ताव च णं अट्ठविहबंधए वा सत्तविहबंधए वा छविहबंधए वा एगविहबंधए वा णो णं अबंधएत्ति’, एवं य एव कर्म्मवादी स एव क्रियावादी, अनेन सांख्याऽभिमतमात्मनोऽक्रियावादित्वं निरस्तं भवति । साम्प्रतं त्रिकालस्पर्शिना मतिज्ञानेनैव तद्भवे एवात्मनः क्रियायास्त्रिकालगोचरतां दर्शयति—

“ अकरिस्सं च अहं काराविस्सं चाहं करओ आवि समणुन्ने भविस्सामि ”

अ-१ उ०-१ आत्मवादित्वादिसिद्धिः ।

‘ अकरिस्सं ’ति-व्या०–इह त्रिकालापेक्षया कृतकारितानुमतिभिर्नव विकल्पाः संभवन्ति, ते चामी–अहमकार्षं १ अचीकरमहं २ कुर्वन्तमन्यमन्वज्ञासिषमहं ३, करोमि १ कारयामि २ अनुजानाम्यहं ३ करिष्याम्यहं १ कारयिष्याम्यहं २ कुर्वन्तमन्यमनुज्ञास्याम्यहं, एते ९ नव मनोवाक्कायैः चिन्त्यमाना २७ भेदा भवन्ति । अकार्षमहमित्यनेन विशिष्टक्रियापरिणतिरूप आत्माऽभिहितः, ततश्च स एवाऽहं मयाऽस्य देहादेः पूर्वं यौवनावस्थायामिन्द्रियवशगेन विषयविमोहितान्धचेतसा तत्तदऽकार्यानुष्ठानपरायणेन आनुकूल्यमनुष्ठितम् । उक्तं च– विहवावलेवनडिएहिं जाइं कीरंति जोव्वणमएणं । वयपरिणामे सरियाइं ताइं हियए खुडुक्कंति ॥ १ ॥ तथाऽचीकरमहमित्यनेन परोऽकार्यादौ प्रवर्त्तमानो मया प्रवृत्तिं कारितः । तथा कुर्वन्तमन्यमनुज्ञातवानित्येवं कृतकारितानुमतिभिर्भूतकालाभिधानं करोमीत्यादिना वचनत्रिकेण वर्त्तमानकालोल्लेखः । तथा करिष्यामि कारयिष्यामि कुर्वतोऽन्यान्प्रति समनुज्ञापरायणो भविष्यामीत्यादिना वचनत्रिकेणाऽनागतकालोल्लेखः । अनेन कालत्रयसंस्पर्शेन देहेन्द्रियातिरिक्तस्यात्मनः कालत्रयपरिणतिरूपस्याऽस्तित्वावगतिरावेदिता । अथ किमेतावत्य एव क्रिया उताऽन्या अपि सन्तीत्याह—

“ एयावंति सव्वावंति लोगंसि कम्मसमारंभा परिजाणियव्वा भवंति ”

व्याख्या—एतावन्तः सर्वेऽपि लोके–प्राणिसंघाते कर्म्मसमारंभाः–क्रियाविशेषा ये प्रागुक्ताः कालत्रयभेदेन कृतकारितानुमतिभिश्च, सर्वक्रियानुयायिना च करोतिना सर्वेषां संग्रहात् एतावन्त एव परिज्ञातव्या नाऽन्ये । तत्र ज्ञपरिज्ञया सर्वेऽपि कर्म्मसमारम्भा ज्ञातव्याः, प्रत्याख्यानपरिज्ञया च सर्वेऽपि पापोपादानहेतवः कर्मसमारम्भाः प्रत्याख्यातव्याः । इयता

क्रियाभेदप्रकटनम् ।

सामान्येन जीवास्तित्वं प्रसाधितम्। अधुना तस्यैवात्मनो दिगादिभ्रमणहेतूनुपदर्शनपूर्वमपायान् दर्शयति, तत्सूत्रं—

" अपरिण्णायकम्मा खलु अयं पुरिसे जो इमाओ दिसाओ अणुदिसाओ अणुसंचरइ, सव्वाओ दिसाओ सव्वाओ अणुदिसाओ साहेति, अणेगरूवाओ जोणीओ संधेइ विरूवरूवे फासे पडिसंवेदेइ, तत्थ खलु भगवया परिण्णा पवेइया "

'अपरिण्णाय'त्ति व्याख्या—योऽयं पुरि—शरीरे शयनात् पूर्णः सुखदुःखानां वा पुरुषो जन्तुर्मनुष्यो वा, मनुष्यगतौ पुरुषप्राधान्यत्वेन पुरुषः, पालनात्पुरुष इति सर्वोऽपि चतुर्गत्यापन्नः प्राणी गृह्यते। दिशोऽनुदिशो वाऽनुसंचरति, सोऽपरिज्ञातकर्म्मा—अपरिज्ञातं कर्म्माऽनेनेत्यपरिज्ञातकर्म्मा, खलुरवधारणे, अपरिज्ञातकर्म्मैव दिगादौ भ्राम्यति नेतरः, सर्वा दिशः सर्वाश्चानुदिशः स साहेति स्वकृतकर्म्मणा सहानुसञ्चरति स्थानानि। अनेकरूपाश्च संवृत्तादिकाश्च चतुरशीतिलक्षसंख्याका वा योनयः। सन्धयति—संधानं मेलयति, एताश्चानेकरूपा योनीर्दिगादिषु पर्यटन्नपरिज्ञातकर्म्मा प्राणी सन्धिं करोति, तत्सन्धाने च विरूपाननिष्टान् रूपान् जातिकुलादिप्रसिद्धान् स्पर्शान् तेषु तेषु योन्यन्तरेषु संवेदयतीति। भावार्थः सविस्तरं वृत्तितोऽवसेयम्। तत्र कर्म्मणि—व्यापारे अकार्षमहं करोमि करिष्यामि इत्याद्यात्मपरिणतिस्वभावतया मनोवाक्कायरूपा भगवता श्रीवीरस्वामिना परिज्ञा प्रवेदिता, परिज्ञानं परिज्ञा, एतज्जम्बुनाम्ने सुधर्म्मस्वाम्यावेदयति। सा च परिज्ञा द्विधा—द्विप्रकारा, एका ज्ञपरिज्ञा १ अपरा प्रत्याख्यानपरिज्ञा २, तत्र ज्ञपरिज्ञया सावद्यव्यापारेण बन्धो भवतीति एवं भगवता परिज्ञा प्रवेदिता—प्रकर्षेण कथिता। प्रत्याख्यानपरिज्ञया च सावद्ययोगा बन्धहेतवः प्रत्याख्येया इत्येवंरूपा। अथ किं ? प्रयोजनमसौ प्राणी किम्पाकफलवद्दारुणविपाकेषु कर्म्माश्रवक्रियाविशेषेषु प्रवर्त्तत इत्याशंकयाऽऽह—

॥ ९ ॥

कर्म्म-समारम्भ-प्रदर्शनम् ।

" इमस्स चेव जीवियस्स परिवंदणमाणणपूअणाए, जाईजरामरणमोयणाए दुक्खपडिघायहेउं "

' इमस्स चेव 'त्ति–व्याख्या–अस्यैव तडिल्लताचंचलस्य जीवितस्यार्थे दीर्घसुखार्थं कर्म्माश्रवेषु प्राण्युपमर्दादिरूपेषु प्रवर्त्तन्ते, तथा अस्यैवाऽनित्यजीवितस्य परिवंदनमाननपूजनार्थं हिंसादिषु प्रवर्त्तन्ते । तत्र परिवन्दनं–प्रशंसा तदर्थमाचेष्टते, तथाऽहं मयूरपिशिताशनाद् बलीयान् तेजसा देदीप्यमानोऽपि साक्षाच्छक्र इव लोकानां प्रशंसास्थानं भविष्यामि । माननमभ्युत्थानासनदानादि, पूजनं–वस्त्रान्नपानप्रणामसेवाविशेषरूपं, तदर्थं च प्रवर्त्तमानः क्रियासु कर्म्माश्रवैरात्मानं संभावयति । न केवलं परिवन्दनाद्यर्थमेव कर्म्माऽऽदत्त, अन्यार्थमप्यादत्त इति दर्शयति–जातिजरामरणमोचनार्थं कर्म्माऽऽदत्ते, तत्र जात्यर्थं कार्त्तिकेयं वन्दते, ब्राह्मणेभ्यो भोगान् प्रयच्छत इत्यादिकुमार्ग्गोपदेशाद् हिंसादौ प्रवृत्तिं विदधाति । तथा मरणार्थं पितृपिण्डदानादिषु, तथा मरणनिवृत्त्यर्थमजादिना बलिं विधत्ते । मुक्त्यर्थं पञ्चाग्निं साधयति । एवं जातिमरणयोर्मोचनाय हिंसादिकाः क्रियाः कुर्वते । दुःखप्रतिघातार्थं व्याधिवेदनार्त्ता अनेकासु महारम्भचिकित्सासु प्रवर्त्तन्ते, तल्लाभपालनार्थं तासु तासु क्रियासु प्रवर्त्तमानाः कर्म्माऽऽसेवन्ते, कर्म्मोपादानाच्च नानायोनिषु विरूपरूपान् स्पर्शान् प्रतिसंवेदयन्तीत्येवं ज्ञात्वा क्रियाविशेषनिवृत्तिर्विधेयेति क्रियाविशेषान् दर्शयितुमाह—

" एयावंति सव्वावंति लोगंसि कम्मसमारंभा परिजाणियव्वा भवंति "

' एयावंति 'त्ति—एतावन्त एव सर्वस्मिन् लोके ये पूर्वं निवेदिताः कर्म्मसमारम्भाः क्रियाविशेषाः परि–सामस्त्येन ज्ञातव्याः, नैतेभ्योऽधिकाः, यथासंभवमायोज्याः, एवं सामान्येन जीवास्तित्वं प्रसाध्य तदुपमर्दकारिणां च क्रियाविशेषाणां

॥ ९ ॥

बन्धहेतुत्वं प्रदर्श्योपसंहारद्वारेण विरतिं प्रतिपादयन्नाह—

" जस्सेते लोगंसि कम्मसमारंभा परिण्णाया भवंति सेह्नु मुणी परिण्णायकम्मेत्ति वेमि ॥ सत्थपरिण्णाए पढमो उद्देसो सम्मत्तो ॥ "

' जस्सेते लोगंसित्ति ' व्याख्या—भगवान् समस्तवस्तुवेदी केवलज्ञानेन साक्षादुपलभ्यैवमाह—यस्य साधोरेते—पूर्वोक्ताः कर्म्मसमारम्भाः—क्रियाविशेषाः कर्म्मणो वा ज्ञानावरणाद्यष्टप्रकारस्य समारम्भाः—उपादानहेतवः, ते च परिसमन्तात् ज्ञाताः—कर्म्मबन्धहेतुत्वेन परिच्छिन्ना भवन्ति, हुरवधारणे, स एव मुनिः परिज्ञातकर्म्मा इति ब्रवीमि । अनेन च मोक्षाङ्ग-भूते ज्ञानक्रिये उपात्ते । यतो ज्ञानक्रियाभ्यां मोक्ष इत्येतदऽहं ब्रवीमि यत्प्रागुक्तं तत्सर्वं भगवदन्तिके साक्षात् श्रुत्वेति । श्रीआचाराङ्गे शस्त्रपरिज्ञाध्ययने प्रथमोद्देशकः ॥

साम्प्रतं द्वितीयोद्देशकः प्रतिपाद्यते, तस्य चायमभिसम्बन्धः । प्रथमोद्देशके जीवास्तित्वं प्रतिपादितं, द्वितीये पृथिव्याद्य-स्तित्वं प्रतिपादयति । यः पुनरपरिज्ञातकर्म्मा अविरतश्च पृथिव्यादिषु बम्भ्रमीति तत्र क्रमागतः पृथिव्युद्देशकः प्रारभ्यते, तचेदं सूत्रम्—

" अट्टे लोए परिजुण्णे दुस्संबोहे अविजाणए अस्सिं लोए पव्वहिए तत्थ तत्थ पुढो पास आतुरा अस्सिं परितावेंति "

' अट्टे लोए 'त्ति—व्याख्या—असौ लोकः शब्दादिविषयकषायैरार्त्तः, अथवा शब्दादिविषयेषु विषविपाकसदृशेषु तदाकांक्षित्वाद् हिताऽहितविचारशून्यमना भावार्त्तः, कर्म्म उपचिनोति । उक्तं च पंचमाङ्गे—' सोइंदियवसट्टेणं भंते ! जीवे किं बंधई ? किं चिणाइ ? किं उवचिणाइ ?, गोयमा ! अट्ठ कम्मपयडीओ सिढिलबंधणबद्धाओ धणियबंधणबद्धाओ पकरेइ,

परिद्यून-भेदाः ।

जाव अणादियं च णं अणवदग्गं दीहमद्धं चाउरंतसंसारकन्तारमणुपरियट्टइ ', एवं स्पर्शनादिष्वप्यायोजनीयम् । एवं क्रोधमानमायालोभदर्शनमोहनीयचारित्रमोहनीयादिभिर्भावार्त्ताः संसारिणो जीवा इति । यत उक्तं–रागद्दोसकसाएहिं इंदिएहि य पञ्चहिं । दुहा वा मोहणिज्जेण अट्टा संसारिणो जिया ॥ १ ॥ यदि वा ज्ञानावरणीयाद्यष्टप्रकारेण शुभाशुभेन कर्म्मणा आर्त्तः, कः ?, लोकः लोकयतीति लोकः, एकद्वित्रिचतुःपञ्चेन्द्रियजीवराशिः अप्रशस्तभावोदयवर्त्ती, यस्माद् यावानार्त्तः स सर्वोऽपि ' परिद्यूनो 'निःसारः–औपशमिकादिप्रशस्तभावहीनो मोक्षसाधनहीनो वा । स च द्विधा द्रव्यभावभेदात् । तत्र सचित्तद्रव्यपरिद्यूनो जीर्णशरीरः स्थविरको जीर्णवृक्षो वा । अचित्तद्रव्यपरिद्यूनो–जीर्णपटादिः । भावपरिद्यून औदयिकभावोदयात् प्रशस्तज्ञानादिभावविकलः । कथं विकलः ? अनन्तगुणपरिहाण्या । तथाहि–पञ्चचतुस्त्रिद्विएकेन्द्रियाः क्रमेण ज्ञानविकलाः । तत्र सर्वनिकृष्टज्ञानाः सूक्ष्मनिगोदापर्य्याप्तकाः प्रथमसमयोत्पन्नाः । स च विषयकषायार्त्तः प्रशस्तज्ञानद्यूनः किमवस्थो भवति ?, ' दुस्सम्बोधः ' दुःखेन धर्म्मे प्रतिपत्तिं कार्यत इति दुःसम्बोधो ब्रह्मदत्तचक्रिवत्, यदिवा दुस्सम्बोधो यो बोधयितुमशक्यः कालिकसूर्यवत् । किमित्येवं ? यतः ' अविजाणए त्ति ' विशिष्टावबोधरहितः । स चैवंविधः किं विदध्यादित्याह—' अस्सिं लोए त्ति '–अस्मिन् पृथिवीकायलोके प्रव्यथिते–प्रकर्षेण पीडिते सर्वस्यारम्भस्य तदाश्रयत्वादिति प्रकर्षार्थः, ' तत्थ तत्थ त्ति '–तेषु तेषु कृषिकरणगृहादिषु ' पुढो त्ति '–पृथग् विभिन्नेषु कार्येषु उत्पन्नेषु भो शिष्य ! पासेति पश्य इति विनेयस्य लोकाऽकार्यप्रवृत्तिः प्रदर्श्यते, आतुरा विषयकषायादिभिः पृथिवीकायं परितापयन्ति–परिसमन्तात् पीडयन्तीतिप्रश्नार्थः । ननु चैकदेवताविशेषावस्थिता पृथिवी इति शक्यं प्रतिपत्तुं, न पुनरसंख्येयजीवसंघातरूपा इत्येतत्

बन्धहेतुत्वं प्रदर्श्योपसंहारद्वारेण विरतिं प्रतिपादयन्नाह—

" जस्सेते लोगंसि कम्मसमारंभा परिण्णाया भवंति सेहु मुणी परिण्णायकम्मेत्ति वेमि ॥ सत्थपरिण्णाए पढमो उद्देसो सम्मत्तो ॥ "

' जस्सेते लोगंसित्ति ' व्याख्या—भगवान् समस्तवस्तुवेदी केवलज्ञानेन साक्षादुपलभ्यैवमाह—यस्य साधोरेते—पूर्वोक्ताः कर्म्मसमारम्भाः—क्रियाविशेषाः कर्म्मणो वा ज्ञानावरणाद्यष्टप्रकारस्य समारम्भाः—उपादानहेतवः, ते च परिसमन्तात् ज्ञाताः—कर्म्मबन्धहेतुत्वेन परिच्छिन्ना भवन्ति, हुरवधारणे, स एव मुनिः परिज्ञातकर्म्मा इति ब्रवीमि। अनेन च मोक्षाङ्गभूते ज्ञानक्रिये उपात्ते। यतो ज्ञानक्रियाभ्यां मोक्ष इत्येतदऽहं ब्रवीमि यत्प्रागुक्तं तत्सर्वं भगवदन्तिके साक्षात् श्रुत्वेति।

श्रीआचाराङ्गे शस्त्रपरिज्ञाध्ययने प्रथमोद्देशकः ॥

साम्प्रतं द्वितीयोद्देशकः प्रतिपाद्यते, तस्य चायमभिसम्बन्धः। प्रथमोद्देशके जीवास्तित्वं प्रतिपादितं, द्वितीये पृथिव्याद्यस्तित्वं प्रतिपादयति। यः पुनरपरिज्ञातकर्म्मा अविरतश्च पृथिव्यादिषु बम्भ्रमीति तत्र क्रमागतः पृथिव्युद्देशकः प्रारभ्यते, तच्चेदं सूत्रम्—

" अट्टे लोए परिजुण्णे दुस्संबोहे अविजाणए अस्सिं लोए पव्वहिए तत्थ तत्थ पुढो पास आतुरा अस्सिं परितावेंति "

' अट्टे लोए 'त्ति—व्याख्या—असौ लोकः शब्दादिविषयकषायैरार्त्तः, अथवा शब्दादिविषयेषु विषविपाकसदृशेषु तदाकांक्षित्वाद् हिताऽहितविचारशून्यमना भावार्त्तः, कर्म्म उपचिनोति। उक्तं च पंचमाङ्गे—' सोइंदियवसट्टेणं भंते ! जीवे किं बंधई ? किं चिणाइ ? किं उवचिणाइ ?, गोयमा ! अट्ठ कम्मपयडीओ सिढिलबंधणबद्धाओ धणियबंधणबद्धाओ पकरेइ,

परिद्यून-भेदाः।

जाव अणादियं च णं अणवदग्गं दीहमद्धं चाउरंतसंसारकन्तारमणुपरियट्टइ ’, एवं स्पर्शनादिष्वप्यायोजनीयम्। एवं क्रोधमानमायालोभदर्शनमोहनीयचारित्रमोहनीयादिभिर्भावार्त्ताः संसारिणो जीवा इति। यत उक्तं–रागद्दोसकसाएहिं इंदिएहि य पञ्चहिं। दुहा वा मोहणिज्जेण अट्टा संसारिणो जिया ॥ १ ॥ यदि वा ज्ञानावरणीयाद्यष्टप्रकारेण शुभाशुभेन कर्म्मणा आर्त्तः, कः ?, लोकः लोकयतीति लोकः, एकद्वित्रिचतुःपञ्चेन्द्रियजीवराशिः अप्रशस्तभावोदयवर्त्ती, यस्माद् यावानार्त्तः स सर्वोऽपि ‘ परिद्यूनो ’निःसारः–औपशमिकादिप्रशस्तभावहीनो मोक्षसाधनहीनो वा। स च द्विधा द्रव्यभावभेदात्। तत्र सचित्तद्रव्यपरिद्यूनो जीर्णशरीरः स्थविरको जीर्णवृक्षो वा। अचित्तद्रव्यपरिद्यूनो–जीर्णपटादिः। भावपरिद्यून औदयिकभावोदयात् प्रशस्तज्ञानादिभावविकलः। कथं विकलः ? अनन्तगुणपरिहाण्या। तथाहि–पञ्चचतुस्त्रिद्विएकेन्द्रियाः क्रमेण ज्ञानविकलाः। तत्र सर्वनिकृष्टज्ञानाः सूक्ष्मनिगोदापर्याप्तकाः प्रथमसमयोत्पन्नाः। स च विषयकषायार्त्तः प्रशस्तज्ञानद्यूनः किमवस्थो भवति ?, ‘ दुस्सम्बोधः ’ दुःखेन धर्म्मे प्रतिपत्तिं कार्यत इति दुःसम्बोधो ब्रह्मदत्तचक्रिवत्, यदिवा दुस्सम्बोधो विशिष्टावबोधरहितः। स चैवंविधः किं विद्यो बोधयितुमशक्यः कालिकसूर्यवत्। किमित्येवं ? यतः ‘ अविजाणए त्ति ’ विशिष्टावबोधरहितः। स चैवंविधः किं विद्यादित्याह—‘ अस्सिं लोए त्ति ’–अस्मिन् पृथिवीकायलोके प्रव्यथिते–प्रकर्षेण पीडिते सर्वस्यारम्भस्य तदाश्रयत्वादिति प्रकर्षार्थः, ‘ तत्थ तत्थ त्ति ’–तेषु तेषु कृषिकरणगृहादिषु ‘ पुढो त्ति ’–पृथग् विभिन्नेषु कार्येषु उत्पन्नेषु भो शिष्य ! पासेति पश्य इति विनेयस्य लोकाऽकार्यप्रवृत्तिः प्रदर्श्यते, आतुरा विषयकषायादिभिः पृथिवीकायं परितापयन्ति–परिसमन्तात् पीडयन्तीति सूत्रार्थः। ननु चैकदेवताविशेषावस्थिता पृथिवी इति शक्यं प्रतिपत्तुं, न पुनरसंख्येयजीवसंघातरूपा इत्येतत्

॥ ११ ॥

परिहर्त्तुकाम आह—

" संति पाणा पुढो सिया, लज्जमाणा पुढो पास अणगारा मोत्ति एगे पवयमाणा जमिणं विरूवरूवेहिं सत्थेहिं पुढवीकम्मसमारंभेण पुढविसत्थं समारंभेमाणा पाणे विहिंसइ "

' संति पाणे 'त्ति–व्याख्या—' सन्ति '–विद्यन्ते प्राणाः सत्त्वाः ' पृथक् '–पृथग्भावेन अङ्गुलासंख्येयभागस्वदेहावगाहनया पृथिव्याश्रिताः, सिता वा सम्बद्धा इत्यर्थः । अनेनैतत्कथयति–नैकदेवता पृथिवी, अपि तु प्रत्येकशरीरपृथिवीकायात्मिकेति । तदेवं सचेतनत्वमनेकजीवाधिष्ठितत्वं च पृथिव्या आविःकृतं भवतीति । एतच्च ज्ञात्वा तदारम्भनिवृत्तान् दर्शयितुमाह–' लज्जामाणत्ति ', लज्जा द्विधा–लौकिकी लोकोत्तरा च, तत्र लौकिकी स्नुषासुभटादेः श्वशुरसंग्रामविषया, लोकोत्तरा सप्तदशप्रकारः संयमः, यदुक्तं–' लज्जादयासंजमबंभचेर ' मित्यादि । ' लज्जमानाः '–संयमानुष्ठानपराः, यदि वा पृथिवीकायसमारम्भरूपादऽसंयमानुष्ठानाल्लज्जमानाः, ' पृथगित्ति ' प्रत्यक्षाऽनुमानज्ञानिनः, अतस्तान् लज्जमानान् पश्येत्यनेन शिष्यस्य कुशलानुष्ठानप्रवृत्तिविषयः प्रदर्शितो भवतीति । कुतीर्थिकास्त्वन्यथावादिनोऽन्यथाकारिण इति दर्शयितुमाह–' अणगारा ' इत्यादि–न विद्यतेऽगारं–गृहमेषामित्यनगाराः स्म इत्येवं प्रवदमाना इत्येके–शाक्यादयो ग्राह्याः, ते च वयमेव जन्तुरक्षणपराः क्षपितकषायाज्ञानतिमिराश्चेति, एवमादिप्रतिज्ञामात्रमनर्थकमारटन्ति, न चानगारगुणेषु मनागपि वर्त्तन्ते, न च गृहस्थचर्यां मनागप्यतिलङ्घन्तीति दर्शयति–' जमिणंति '–यद् यस्मादिममिति सर्वजनप्रत्यक्षं पृथिवीकायरूपं विरूपरूपैः शस्त्रैः–हलकुद्दालखनित्रादिभिः पृथिव्याश्रयं ' कर्म्म '–क्रियां समारभमाणा विहिंसन्ति, तथाऽनेन च पृथिवीकर्मसमा-

शाक्यादी-
नां पृथ्वि-
जीवविरा-
धना ।

रम्भेण पृथिवीशस्त्रं समारंभमाणो—व्यापारयन् पृथिवीकायं नानाविधैः शस्त्रैर्व्यापादयन् ' अणेगेत्ति ' अनेकरूपान् तदाश्रि-
तान् उदकवनस्पत्यादीन् विविधं हिनस्ति, नानाविधैरूपायैर्व्यापादयतीत्यर्थः । एवं शाक्यादीनां पार्थिवजन्तुवैरिणामऽय-
तित्वं प्रतिपाद्य साम्प्रतं सुखाभिलाषितया कृतकारिताऽनुमतिभिर्मनोवाक्कायलक्षणां प्रवृत्तिं दर्शयितुमाह—

" तत्थ खलु भगवया परिण्णा पवेइया इम्मस्स चेव जीवियस्स परिवंदणमाणणपूयणाए जाइमरणमोयणाए दुक्खपडिघायहेउं
से सयमेव पुढविसत्थं समारंभइ अण्णेहिं पुथविसत्थं समारंभावेइ अण्णे वा पुढविसत्थं समारंभंते समणुजाणइ "

' तत्थ खलु 'त्ति व्याख्या—'तत्र'–पृथिवीकायसमारम्भे खलुशब्दो वाक्यालङ्कारे भगवता श्रीवर्द्धमानस्वामिना परि-
ज्ञानं परिज्ञा सा प्रवेदितेति, इदमुक्तं भवति–भगवतेदमाख्यातं–यथैभिर्वक्ष्यमाणैः कारणैः कृतकारितानुमतिभिः सुखैषिणः
पृथिवीकायं समारभन्ते, तानि चामूनि–अस्यैव जीवितस्य परिपेलवस्य परिवन्दनमाननपूजनार्थं तथा जातिमरणमोचनार्थं
दुःखप्रतिघातहेतुं च स सुखलिप्सुर्दुःखद्विट् स्वयमात्मनैव पृथिवीशस्त्रं समारभते, तथाऽन्यैश्च पृथिवीशस्त्रं समारम्भयति
पृथिवीशस्त्रं समारभमाणानन्यांश्च स एव समनुजानीते, एवमतीतानागताभ्यां मनोवाक्कायकर्म्मभिरायोजनीयम् । तदेवं–
प्रवृत्तमतेर्यद् भवति तद्दर्शयितुमाह—

" तं से अहियाए, तं से अबोहीए, से तं संबुज्झमाणे आयाणीयं समुट्ठाय सोचा खलु भगवओ अणगाराणं इहमेगेसिं णायं
भवति–एस खलु गंथे, एस खलु मोहे, एस खलु मारे, एस खलु णरए, इच्चत्थं गड्ढिए लोए जमिणं विरूवरूवेहिं सत्थेहिं पुढवि–
कम्मसमारंभेण पुढविसत्थं समारंभमाणे अण्णे अणेगरूवे पाणे विहिंसइ, से बेमि–अप्पेगे अंधमब्भे अप्पेगे अंधमच्छे अप्पेगे

॥ १३ ॥

अप्पेगे जाणुमब्भे २ अप्पेगे ऊरुमब्भे २ पायमब्भे अप्पेगे पायमच्छे अप्पेगे गुप्फमब्भे अप्पेगे गुप्फमच्छे अप्पेगे जंघमब्भे २ अप्पेगे कडिमब्भे २ अप्पेगे णाभिमब्भे २ अप्पेगे उदरमब्भे २ अप्पेगे पासमब्भे २ अप्पेगे पिट्ठिमब्भे २ अप्पेगे उरमब्भे २ अप्पेगे हियमब्भे २ अप्पेगे थणमब्भे २ अप्पेगे खंधमब्भे २ अप्पेगे बाहुमब्भे २ अप्पेगे हत्थमब्भे २ अप्पेगे अंगुलिमब्भे २ अप्पेगे णहमब्भे २ अप्पेगे गीवमब्भे २ अप्पेगे हणुमब्भे २ अप्पेगे होट्ठमब्भे २ अप्पेगे दंतमब्भे २ अप्पेगे जिब्भमब्भे २ अप्पेगे तालुमब्भे २ अप्पेगे गलमब्भे २ अप्पेगे गंडमब्भे २ अप्पेगे कण्णमब्भे २ अप्पेगे णासमब्भे २ अप्पेगे अच्छिमब्भे २ अप्पेगे भमुहमब्भे २ अप्पेगे णिडालमब्भे २ अप्पेगे सीसमब्भे २ अप्पेगे संपमारए अप्पेगे उद्दवए इत्थं सत्थं समारंभमाणस्स इच्चेते आरंभा अपरिण्णाता भवंति ”

पृथ्वीकायसमारम्भणं से-तस्य कृतकारितानुमतिभिः पृथ्वीशस्त्रमसमारम्भमाणस्यागामिनि काले अहिताय भवति, तदेव च अबोधिलाभाय। न हि प्राणिगणोपमर्दनप्रवृत्तानामणीयसाऽपि हितेनोत्तरकाले योगो भवति। यः पुनर्भगवतः सकाशात्तच्छिष्यानगारेभ्यो वा विज्ञाय पृथ्वीसमारम्भं पापात्मकं भावयति, स एवं मन्यते,–‘से तं संबुज्झमाणे’त्ति–स ज्ञातपृथ्वीजीवत्वेन विदितपरमार्थः पृथिवीशस्त्रसमारम्भमहितं सम्यगवबुध्यमानः आदानीयं–ग्राह्यं–सम्यग्दर्शनादि, सम्यगुत्थाय–अभ्युपगम्य, केन प्रत्ययेनेति दर्शयति– श्रुत्वा– अवगम्य साक्षाद् भगवतोऽनगाराणां वा समीपे, ततः ‘इहमेगेसि’त्ति– इह मनुष्यावतारे एकेषां प्रतिबुद्धतत्वानां साधूनां ज्ञातं भवतीति। यद् ज्ञातं भवति तद्दर्शयितुमाह– ‘एस खलु गंथे’त्ति– य एषः पृथ्वीकायसमारम्भः, खलुरवधारणे ग्रन्थः– अष्टप्रकारकर्मबन्धः, तथैष एव मोहहेतुत्वान्मोहोऽष्टा-



पृथ्वीजीववधो नरकादिहेतुः।

विंशतिविधः, दर्शनचारित्रभेदात्, तथैष एव मरणहेतुत्वान्मारः-आयुष्यकक्षयलक्षणः, तथैष एव नरकहेतुत्वान्नरकः। कथं पुनरेकप्राणिव्यापादनप्रवृत्तो अष्टविधकर्मबन्धं करोति ? इत्युच्यते- मार्यमाणजन्तुज्ञानावरोधित्वात् ज्ञानावरणीयं बध्नाति, एवमन्यत्राप्यायोजनीयमिति, अन्यदपि तेषां ज्ञातं भवतीति दर्शयितुमाह- 'इच्चत्थमित्यादि'- इत्येवमर्थं- आहारभूषणोपकरणार्थं, तथा परिवन्दनमाननपूजनार्थं दुःखप्रतिघातहेतुं च 'गृद्धो'- मूर्च्छितो 'लोकः'-प्राणिगणः एवंविधेऽप्यतिदुरितनिचयविपाकफले पृथिवीकायसमारम्भे अज्ञानवशान्मूर्च्छितस्तु एतद् विधत्त इति दर्शयति- यद्-यस्माद् इमं-पृथ्वीकायं विरूपरूपैः शस्त्रैः पृथिवीकायसमारम्भमाणो हिनस्ति, पृथिवीकायसमारम्भेण च पृथिव्येव शस्त्रं स्वकायादि पृथिव्या वा शस्त्रं हलकुद्दालादि तत् समारभते, पृथिवीशस्त्रं समारभमाणश्चान्यान् अनेकरूपान् प्राणिनो द्वीन्द्रियादीन् विविधं हिनस्तीति। स्यादारेका, ये हि न पश्यति न शृण्वन्ति न जिघ्रन्ति न गच्छन्ति कथं पुनस्ते वेदनामनुभवन्तीति गृहीतव्यं ?, अमुष्यार्थस्य प्रसिद्धये दृष्टान्तमाह-'से वेमी'त्यादि- सोऽहं पृष्टो भवता पृथिवीकायवेदनां ब्रवीमि, अथवा यत्त्वया पृष्टस्तदहं ब्रवीमि, अपिशब्दो यथानामशब्दार्थे, यथा नाम कश्चिज्जात्यन्धो बधिरो मूकः कुष्ठी पङ्गुः अनभिनिवृत्तपाण्याद्यवयवविभागो मृगापुत्रवत् पूर्वकृताशुभकर्मोदयाद् हिताहितप्राप्तिपरिहारविमुखोऽतिकरुणां दशां प्राप्तः, तमेवंविधमन्धादिगुणोपेतं कश्चित् कुन्ताग्रेण 'अब्भे' इति आभिन्द्यात्, तथाऽपरः कश्चिदन्धमाच्छिन्द्यात्, स च भिद्यमानावस्थायां न पश्यति न शृणोति मूकत्वान्नोच्चैरारटीति, किमेतावता तस्य वेदनाऽभावो जीवाभावो वा शक्यो विज्ञातुं ?। एवं पृथिवीजीवा अप्यव्यक्तचेतना जात्यन्धबधिरमूकपङ्ग्वादिगुणोपेतपुरुषवदिति। यथा वा पञ्चेन्द्रियाणं परिस्पष्टचेतनानां 'अप्पेगे पायमब्भे' इति यथा कश्चित् पादमाभिन्द्याद्

आछिन्द्याद् वेति, एवं जङ्घाजानूरुकटीनाभ्युदरपार्श्वपृष्ठोरोहृदयस्तनस्कन्धबाहुहस्ताङ्गुलिनखग्रीवाहनुकोष्ठौष्ठदन्तजिह्वाताल्गलगण्डकर्णनासिकाऽक्षिभ्रूललाटशिरःप्रभृतिष्ववयवेषु भिद्यमानेषु छिद्यमानेषु वा वेदनोपपत्तिर्लक्ष्यते, एवमेषामुत्कटमोहाज्ञानभाजां स्त्यानर्द्ध्याद्युदयादव्यक्तचेतनानामव्यक्तैव वेदना भवतीति ग्राह्यम् । तत्रैव दृष्टान्तान्तरमाह–'अप्पेगे संपमारए' त्ति– यथा नाम कश्चित् समेकीभावेन प्रकर्षेण प्राणानां मारणं अव्यक्तत्वापादनं कस्यचित् कुर्यात्, मूर्च्छामापादयेदित्यर्थः, तथावस्थं च यथा नाम कश्चिदऽपद्रापयेत्– प्राणेभ्यो व्यपरोपयेत्, न चासौ तां वेदनां स्फुटमनुभवति, अस्ति चाव्यक्ता तस्यासौ वेदनेति, एवं पृथिवीजीवानामपि द्रष्टव्यमिति । पृथिवीकायिकानां जीवत्वं प्रसाध्य तथा नानाविधशस्त्रसम्पाते वेदनां चाविर्भाव्याधुना तद्वधे बन्धं दर्शयितुमाह—

" एत्थ सत्थं असमारभमाणस्स इच्चेते आरंभा परिण्णाता भवंति, तं परिण्णाय मेहावी नेव सयं पुढविसत्थं समारंभेज्जा णेवण्णेहिं पुढविसत्थं समारंभावेज्जा णेवण्णे पुढविसत्थं समारंभंते समणुजाणेज्जा, जस्सेते पुढविकम्मसमारंभा परिण्णाता भवंति से हु मुणी परिण्णातकम्मेत्ति बेमि "

अत्र पृथ्वीकाये शस्त्रं द्रव्यभावभेदभिन्नं, तत्र द्रव्यशस्त्रं स्वकायपरकायोभयरूपं, भावशस्त्रं त्वऽसंयमो दुष्प्रणिहितमनोवाक्कायलक्षणः । एतद् द्विविधमपि शस्त्रं समारम्भमाणस्य इत्येते कृष्याद्यात्मकाः समारम्भाः बन्धहेतुत्वेनाऽपरिज्ञाता अविदिता भवन्तीति दर्शयितुमाह– 'एत्थे'त्यादि, 'अत्र' पृथिवीकाये द्विविधमपि शस्त्रं असमारंभमाणस्य–अव्यापारयत इत्येते प्रागुक्ताः कर्मसमारम्भाः परिज्ञाता विदिता भवन्ति, अनेन च विरत्यधिकारः प्रतिपादितो भवति, तामेव विरतिं स्वनाम-

ग्राहमाह–' त ' मित्यादि– तं पृथिविकायसमारम्भे बन्धं परिज्ञाय, असमारम्भे चाऽबन्धमिति ज्ञात्वा, मेधावी–कुशल एतत्कुर्यादिति दर्शयति–नैव पृथिवीशस्त्रं द्रव्यभावभिन्नं समारभेत, नापि तद्विषयोऽन्यैः समारम्भः कारयितव्यः, न चान्यान् पृथिवीशस्त्रं समारभमाणान् समनुजानीयाद् इति, एवं मनोवाक्कायकर्म्मभिरतीतानागतकालयोरप्यायोजनीयमिति। ततश्चैव कृतनिवृत्तिरसौ मुनिरिति व्यपदिश्यते न शेष इति दर्शयन्नुपसंजिहीर्षुराह–यस्य–विदितपृथिवीजीववेदनास्वरूपस्य ' एते ' पृथिवीविषयाः कर्म्मसमारम्भाः खननकृष्याद्यात्मकाः कर्म्मबन्धहेतुत्वेन परिज्ञाता भवन्ति ज्ञपरिज्ञया, तथा प्रत्याख्यानपरिज्ञया च परिहृता भवन्ति, हुरवधारणे, स एव मुनिः–स एव परिज्ञातकर्म्मा, नापरः शाक्यादिः। ब्रवीमीति पूर्ववदिति।
श्री आचारांगे पृथिवीकायोद्देशकः समाप्तः ॥

अथ गतः पृथिव्युद्देशकः, साम्प्रतमप्कायोद्देशकः प्रारभ्यते, तत्रेदं सूत्रम्—

" से वेमि से जहावि अणगारे उज्जुकडे नियायपडिवण्णे अमायं कुव्वमाणे वियाहिए "

' से वेमि ' इत्यादि–व्याख्या—अस्य चायमभिसम्बन्धः, इहाऽनन्तरोद्देशके परिसमाप्तिसूत्रे पृथिवीकायसमारम्भव्यावृत्तो मुनिरित्युक्तं, न चैतावता सम्पूर्णो मुनिर्भवति, यथा च भवति तथा दर्शयति। तथाऽऽदिसूत्रेणायं सम्बन्धः—सुधर्म्मस्वामी इदमाह–श्रुतं मया भगवदन्तिके यत्प्राक् प्रतिपादितं, अन्यच्चेदं ' से वेमि से जहे'त्ति–स यथा पृथिवीकायसमारम्भान्निवृत्तः सम्पूर्णोऽनगारव्यपदेशभाग्भवति, तदहं ब्रवीमि। अपि समुच्चये, स यथाऽनगारो भवति तथा ब्रवीमि। ' अणगारे 'त्ति–न विद्यते अगारं–गृहमस्येत्यनगारः, अनेन गृहत्यागप्रधानं मुनित्वकारणमिति दर्शयति। ' उज्जुकडे 'त्ति–ऋजुरकुटिलः संयमस्तं

सम्पूर्णमुनित्वकारणप्रदर्शनम्।

संयोगं त्यक्त्वा श्रद्धायाः परि-पालना।

करोतीति ऋजुकृत्-ऋजुकारी, इत्यनेनेदमुक्तं भवति-अशेषसंयमानुष्ठायी सम्पूर्णोऽनगारः। एवंविधश्चेदृग्भवति-'णियाग-पडिवण्णे'-यजनं-यागः, नियतो निश्चितो वा यागो नियागः-सम्यग्ज्ञानदर्शनचारित्रतात्मको मोक्षमार्गस्तं प्रतिपन्नो नियागप्रतिपन्नः निकायप्रतिपन्नो वा, निर्गतः काय औदारिकादिर्यस्मात् स निकायो-मोक्षमार्गस्तं प्रतिपन्नः, तत्कारणस्य सम्यग्दर्शनादेः स्वशक्त्याऽनुष्ठानात्, स्वशक्त्याऽनुष्ठानं चामायाविनो भवतीति, 'अमायं कुव्वमाणे'त्ति-स्ववीर्यनिगूहनं-माया कथ्यते, न माया अमाया, तां कुर्वाणोऽनिगूहितबलवीर्यः संयमानुष्ठाने पराक्रममाणोऽनगारो व्याख्यातः। उद्धृतसकल-मायावल्लीवितानः किं कुर्यादित्याह—

"जाए सद्धाए निक्खंतो तमेव अणुपालिज्जा वियहित्ता विसोत्तियं"

'जाए सद्धाए'त्ति-व्याख्या—यया श्रद्धया निष्क्रान्तः प्रव्रज्यां गृहीतवान्, तामेव श्रद्धां यावज्जीवमनुपालयेद्-रक्षयेत् वर्द्धमानवैराग्यरङ्गेनेत्यर्थः। कथमनुपालयेत्?, 'वियहित्तु'त्ति-विहाय-परित्यज्य विश्रोतसिकां-शंकां सन्मार्गे, पाठान्तरे तु 'विजहित्ता पूव्वसंयोगं'-पूर्वसंयोगं मातापित्रादिकं पश्चात्संयोगं-श्वशुरादिकं, तं त्यक्त्वा श्रद्धामनुपालयेदिति। अयमुप-देशो महासत्त्वैः कृतपूर्वमिति दर्शयितुमाह—

"पणया वीरा महावीहिं"

प्रणता-नम्रीभूताः, वीराः परीषहकषायादिसेनाविजयाद् वा वीराः, 'महावीहि'त्ति-महावीथिश्च मोक्षमार्गः, जिने-न्द्रादिभिः सत्पुरुषैश्चासेवितः, तं प्रति प्रह्वा वीर्यवन्तः संयमानुष्ठानं कुर्वन्ति। ततश्चोत्तमपुरुषाराधितोऽयं मोक्षमार्ग इति

प्रदर्श्य तज्जनितमार्गविश्रम्भो विनेयः संयमानुष्ठाने सुखेनैव प्रवर्तयिष्यते । उपदेशान्तरमाह—

" लोगं च आणाए अभिसमेच्चा अकुओभयं "

'लोगं आणाए' त्ति–अत्राऽप्कायलोकं च, चशब्दादन्यांश्च जीवादीन् पदार्थांश्च आज्ञया–मौनीन्द्रवचनेन सम्यग् ज्ञात्वा यथा अप्कायादयो जीवा इत्येवमवगम्य 'अकुतोभयं'ति–न विद्यते कुतश्चिद्धेतोः केनाऽपि प्रकारेण जन्तूनां भयं यस्मात् सोऽकुतोभयः–संयमः तमनुपालयेत् । अप्कायलोकमाज्ञया अभिसमेत्य–ज्ञात्वा यत्कर्त्तव्यं तदाह—

" से बेमि णेव सयं लोगं अब्भाइक्खिज्जा, णेव अत्ताणं अब्भाइक्खिज्जा, जे लोयं अब्भाइक्खइ, से अत्ताणं अब्भाइक्खइ, जे अत्ताणं अब्भाइक्खइ से लोयं अब्भाइक्खइ "

'से बेमी'त्ति–सोऽहं ब्रवीमि, सेशब्दस्य युष्मदर्थत्वात् त्वां वा ब्रवीमि, 'नेव सय' मिच्चाइ–न स्वयमात्मना लोकोऽप्कायमयो लोकोऽभ्याख्यातव्यो अभ्याख्यानमसदभियोगः–अयथार्थकथनं, यथाऽचौरं चौरमिति । इह तु आपो जीवा न भवन्ति, केवलमुपकरणमात्रं घृततैलादिवत् । हस्त्यादीनामपि जीवानामुपकरणत्वात् । नन्वेतदेवाऽभ्याख्यानं यदऽजीवानां जीवत्वापादनं, नैतदस्ति, अपां सचेतनत्वं प्रागेव साधितम् । 'णेव अत्ताणं'ति–नैवात्मनः शरीराधिष्ठातुरभ्याख्यानं कर्त्तव्यं, तत्क्रियमाणं न घटामियर्त्ति, नैवात्मानं शरीराधिष्ठातारमहंप्रत्ययसिद्धं ज्ञानाद्यभिन्नगुणप्रत्यक्षमपह्नुवीत । जे 'अत्ताणं'ति–यो हि अज्ञानोपहतचक्षुरप्कायलोकमभ्याख्याति, स एवात्मानमभ्याख्याति शेषं प्रतीतं, इत्यालोच्य साधवो नाप्कायविषयमारम्भं कुर्वन्तीति । शाक्यादयस्त्वन्यथोपस्थिता इति निवेदयन्नाह—

संयमे भयाभावः।

" लज्जमाणा पुढो पास अणगारा मोत्ति एगे पवयमाणा जमिणं विरूवरूवेहिं सत्थेहिं उदयकम्मसमारंभेणं उदयसत्थं समारंभमाणे अणेगरूवे पाणे विहिंसइ। तत्थ खलु भगवता परिण्णा पवेदिता। इमस्स चेव जीवियस्स परिवंदणमाणणपूयणाए जाइ-मरणमोयणाए दुक्खपडिघायहेउं से सयमेव उदयसत्थं समारभति, अन्नेहिं वा उदयसत्थं समारंभावेति, अण्णे उदयसत्थं समारंभंते समणुजाणति। तं से अहियाए तं से अबोहिए। से तं संबुज्झमाणे आयाणीयं समुट्ठाय सोच्चा भगवओ अणगाराणं अंतिए इहमेगेसिं णायं भवति—एस खलु गंथे एस खलु मोहे एस खलु मारे एस खलु नरए इच्चत्थं गढिए लोए जमिणं विरूवरूवेहिं सत्थेहिं उदयकम्मसमारंभेण उदयसत्थं समारंभमाणे अण्णे अणेगरूवे पाणे विहिंसइ। से बेमि संति पाणा उदयनिस्सया जीवा अणेगे "

'लज्जमाणा पुढो पास'त्ति व्या— लज्जमानाः स्वकीयं प्रव्रज्याभासं कुर्वाणाः, यदि वा सावद्यानुष्ठानेन लज्जमाना— लज्जां कुर्वाणाः पृथग् विभिन्नाः शाक्योलूकशिष्याः तान् पश्येति शिष्यनोदना, ततश्चायमर्थः—शाक्यादीन् गृहीतप्रव्रज्यानपि सावद्यानुष्ठानरतान् पश्य, किं तैरसदाचरितं ? येनैवं प्रदर्श्यन्त इति दर्शयति—'अणगारा मोत्ति'—अनगारा वयमित्येके शाक्यादयः प्रवदन्तो यदिदं विरूपरूपैः— उत्सेचनाग्निविध्यापनादिशस्त्रैः स्वकायपरकायभेदभिन्नैरुदककर्मसमारम्भेण च उदकशस्त्रं समारभन्ते, तच्च समारम्भमाणोऽनेकरूपान् द्वीन्द्रियादीन् विविधं हिनस्तीत्यर्थः। 'तत्थ'त्ति—तत्र खलु भगवता परिज्ञा प्रवेदिता। यथाऽस्यैव जीवितस्य परिवन्दनमाननपूजनार्थं जातिमरणमोचनार्थं दुःखप्रतिघातहेतुं, सुगमार्थोऽयं पूर्वं व्याख्यातः। तच्चोदकसमारम्भणं तस्याऽहिताय भवति, तथैवाऽबोधिलाभाय भवति, स एतत्सम्बुध्यमान आदानीयं सम्यग्दर्शनादि सम्यगुत्थाय—अभ्युपगम्य श्रुत्वा भगवतोऽनगाराणां वाऽन्तिके, इहैकेषां साधूनां यद् ज्ञातं भवति, तद्दर्शयति—एषो-

उ० ३
जलजीव-
विनाशो
जन्म-
मरणादि-
हेतुः।

ऽप्कायसमारम्भो ग्रन्थः, एष खलु मोहः, एष खलु मारः, एष खलु नरकः, इत्येवमर्थं गृद्धो लोकः, यदिदं विरूपरूपैः शस्त्रैः उदककर्म्मसमारम्भेणोदकशस्त्रं समारभमाणोऽन्याननेकरूपान् प्राणिनो विविधं हिनस्ति । 'से बेमी'ति सोऽहमेवमुपलब्धानेकाप्कायतत्ववृत्तान्तो ब्रवीमि–'संतिपाण'त्ति–सन्ति विद्यन्ते प्राणिन उदकनिश्रिताः–पूतरकमत्स्यादयो यान् उदकारम्भप्रवृत्तौ हन्यात् । कियन्तः पुनस्ते इति दर्शयति–'जीवा अणेगा' पुनर्जीवोपादानमुदकनिश्रितप्रभूतजीवभेदज्ञापनार्थं । एकैकस्मिन् जीवभेदे उदकाश्रिता अनेके–असंख्येयाः प्राणिनो भवन्ति, एवं चाप्कायविषयारम्भभाजः पुरुषास्ते तन्निश्रितप्रभूतसत्त्वव्यापत्तिकारिणो द्रष्टव्याः । शाक्यादयस्तूदकनिश्रितानेव द्वीन्द्रियादीन् जीवानिच्छन्ति, नोदकमित्येतदेव दर्शयति–

"इहं च खलु भो ! अणगाराणं उदयजीवा वियाहिया"

इहैव ज्ञातपुत्रीये प्रवचने अनगाराणां उदकं जीवा व्याहृताः–प्रतिपादिताः । च शब्दात् तदाश्रिताश्च पूतरकमत्स्यादयो जीवा व्याख्याताः । यद्येवमुदकमेव जीवास्ततोऽवश्यं तत्परिभोगे सति प्राणातिपातभाजः साधव इत्यत्रोच्यते, नैतदेवं, यतो वयं त्रिविधमप्कायमाचक्ष्महे–सचित्तं मिश्रमचित्तं च, तत्र योऽचित्तोऽप्कायस्तेनोपयोगविधिः साधूनां, नेतराभ्यां । कथं पुनरसौ भवत्यचित्तः ? किं स्वभावात् उत शस्त्रसम्बन्धात्, उभयथापीति ?, तत्र यः स्वभावादेवाऽचित्तीभवति न बाह्यशस्त्रसम्पर्कात्, तमचित्तं जानाना अपि केवलमनःपर्यायावधिश्रुतज्ञानिनो न परिभुञ्जते, अनवस्थाप्रसंगभीरुतया । यतो नु श्रूयते भगवता किल वर्द्धमानस्वामिना विमलसलिलसमुल्लसत्तरङ्गः शैवलपटलत्रसादिरहितो महाह्रदो व्यपगताऽशेषजन्तुकोऽचित्तवारिपूर्णः स्वशिष्याणां तृड्बाधितानामपि पानाय नानुजज्ञे । तथा अचित्ततिलशकटस्थण्डिलपरिभोगानुज्ञा चानवस्थादोषसंरक्षणाय

जलस्य जीवत्व-सिद्धिः ।

भगवता न कृतेति श्रुतज्ञानप्रामाण्यज्ञापनार्थं च। अतो यद् बाह्यशस्त्रसम्पर्कात् परिणामान्तरापन्नं वर्णादिभिस्तदऽचित्तं साधुपरिभोगाय कल्पते। किं पुनः तच्छस्त्रमित्यत आह—

" सत्थं चेत्थं अणुवीइ पास, पुढो सत्थं पवेइयं "

व्याख्या—शस्यन्ते–हिंस्यन्ते प्राणिन इति शस्त्रं, तच्चोत्सेचनधावनादि, स्वकायादि च। वर्णादयो वा पूर्वावस्था-विलक्षणाः शस्त्रं, एवमेतत् त्रिविधं शस्त्रं मत्वाऽन्यतमशस्त्रसम्पर्कविध्वस्तमेव ग्राह्यं नान्यथेति। 'एत्थं' ति एतस्मिन्नप्काये 'अणुवीइ' त्ति– अनुविचिन्त्य–विचार्य इदमस्य शस्त्रमित्येवं पश्य, इत्यनेन शिष्यनोदना। तदेवं नानाविधं शस्त्रं अप्काय-स्याऽस्तीति प्रतिपादितमेतदेव दर्शयति–'पुढो सत्थं' ति–पृथक् शस्त्रं उत्सेचनकचवरगोमयादि प्रवेदितं–कथितम्। अतोऽचित्त-पयसा परिभोगोऽन्यथा प्राणातिपातव्रतभङ्गः स्यात् शाक्यादिवत्। न केवलं प्राणातिपातापत्तिरेव, किन्तु अन्यदपीति—

" अदुवा अदिन्नादाणं "

अपि तु अदत्तादानमपि, स्वपरिगृहीतशरीरस्याऽदानात् स्वाम्यदत्तं च लगति। अत्र शाक्याः प्राहुः—

" कप्पइ णे कप्पइ णे पाउं, अदुवा विभूसाए "

'कप्पइ' त्ति–णोऽस्माकं पातुं कल्पते विभूषार्थं स्नानाद्यर्थं च, एवं स्नादिशौचानुष्ठायिनां नास्ति कश्चिद्दोषः।

" पुढो सत्थेहिं विउट्टन्ति "

'पुढो सत्थेहिं' ति–पृथक् शस्त्रैरप्कायजीवान् व्यवर्तयन्ति–व्यपरोपयन्तीत्यर्थः। अथ तेषामागमासारत्वमाह—

" एत्थऽवि तेसिं नो निकरणाए "

'एत्थवि तेसिं'ति–एतस्मिन्नपि प्रस्तुते निजागमानुसारेणाङ्गीकारे सति कप्पइ णो पाणे विभूसाएत्ति एवंरूपस्तेपामयमागमो यद्बलादऽप्कायपरिभोगे ते प्रवृत्ताः, स आगमः स्याद्वादयुक्तिभिरभ्याहतः सन् नो निकरणाएत्ति–नो निश्चयं कर्त्तुं समर्थो भवति। न केवलं तेषां युक्तयो, न निश्चयायाऽलमागमोऽपीत्यपिशब्दः। यत आप्तवचनं आगमः, भवदागमप्रणेता अनाप्तः, अप्कायजीवाऽपरिज्ञानात्–इत्येवं पृष्टाः प्रत्युत्तरं दातुं न समर्थाः। यतियोग्यं स्नानं न भवति, कामाङ्गत्वान्मण्डनवत्। भावशौचमेव कर्म्मक्षयाय समर्थं, तच्च वारिसाध्यं न भवति। यदि पानीयशौचात्कर्म्मक्षयो भवति, तदा मत्स्यादयस्तत्र स्थिताः कर्म्मक्षयकर्त्तारो भविष्यन्ति, महर्षयो विविधतपोभिः कर्म क्षपयन्ति, तस्मात्तेषां सिद्धान्तोऽपि न निश्चयाय समर्थो भवति।

" एत्थ सत्थं समारभमाणस्स इच्चेए आरंभा अपरिण्णाया भवंति, एत्थ सत्थं असमारभमाणस्स इच्चेते आरंभा परिण्णाया भवंति, तं परिण्णाय मेहावी णेव सयं उदयसत्थं समारभेज्जा, नेवन्नेहिं उदयसत्थं समारंभावेज्जा, उदयसत्थं समारंभंतेऽवि अण्णे ण समणुजाणेज्जा, जस्सेते उदयसत्थसमारंभा परिण्णाया भवंति से हु मुणी परिण्णातकम्मेत्ति बेमि "। सत्थपरिण्णाए तइओ उद्देसो सम्मत्तो. ३

एतस्मिन् अप्काये शस्त्रं समारभमाणस्येत्येते आरम्भा ज्ञपरिज्ञया अपरिज्ञाता भवन्ति, येषां ज्ञपरिज्ञया ज्ञाता भवन्ति प्रत्याख्यानपरिज्ञया च परिहृता भवन्ति तद्दर्शयति–' तं परिण्णाय 'त्ति–तदुदकारम्भणं बन्धायेत्येवं परिज्ञाय मेधावी–मर्यादावान् नैव स्वयमुदकशस्त्रं समारभेत, नैवाऽन्यैः समारम्भयेत्, नैवाऽन्यान् समनुजानीयात्, यस्यैते उदकशस्त्रसमारम्भा

उदक-जीवशस्त्र-वर्जको मुनिः स्यात्।

॥ २३ ॥

द्विधा परिज्ञाता भवन्ति स एव मुनिः परिज्ञातकर्म्मा भवति । ब्रवीमि पूर्ववदिति शस्त्रपरिज्ञायां तृतीयोद्देशकः समाप्तः । गतः तृतीयोद्देशकः, अथ चतुर्थोद्देशकः प्रारभ्यते, तस्येदं सूत्रम् ।

" से वेमि णेव सयं लोगं अब्भाइक्खेज्जा, णेव अत्ताणं अब्भाइक्खेज्जा, जे लोयं अब्भाइक्खइ से अत्ताणं अब्भाइक्खइ, जे अत्ताणं अब्भाइक्खइ से लोयं अब्भाइक्खइ "

' से वेमी 'त्याइ–व्याख्या—सोऽहं सद्यो ब्रवीमि, किं ?, ' नेव सयं लोय 'त्ति–नैव स्वयं लोकं–अत्राग्निकायलोकं जीवत्वेनाऽभ्याचक्षीत–नैवापह्नुवीतेत्यर्थः । अग्निलोकाऽभ्याख्याने हि आत्मनोऽपि ज्ञानचेतनामयस्याऽभ्याख्यानमवाप्नोति । ' णेव अत्ताण '–ति नैव स्वयं आत्मानं शरीराधिष्ठातारं प्रत्याचक्षीत । योऽग्निलोकमभ्याख्याति, स आत्मानमभ्याख्याति । अधुनाऽग्निजीवप्रतिपत्तौ सत्यां तद्विषयसमारम्भकटुकफलपरिहारोपन्यासाय सूत्रमाह—

" जे दीहलोगसत्थस्स खेयण्णे से असत्थस्स खेयण्णे, जे असत्थस्स खेयन्ने से दीहलोगसत्थस्स खेयण्णे "

' जे दीहलोय 'त्ति, व्याख्या—यः साधुर्दीर्घलोको–वनस्पतिः, यस्मादसौ परिमाणशरीरोच्छ्रयाभ्यां शेषैकेन्द्रियेभ्यो दीर्घो वर्त्तते, तथा कायस्थित्याऽनन्तं कालं तिष्ठति, सातिरेकं योजनसहस्रशरीरोच्छ्रयत्वं, अत एव दीर्घलोको वनस्पतिरेव निगदितः । अस्य च दीर्घलोकस्य शस्त्रमग्निः । यस्मात् स हि प्रवृद्धज्वालाकलापाकुलः सकलतरुवृन्दप्रध्वंसनाय भवति, अतोऽसौ तदुत्सादकत्वाच्छस्त्रं, वनस्पतिदाहप्रवृत्तस्तु बहुविधसत्त्वसंहतिविनाशकारी विशेषतः स्यात् । यतो वनस्पतौ कृमि-पिपीलिकाभ्रमरकापोतश्वापदादयः संभवन्ति । अथवा बादरतेजःकायाः पर्याप्तजीवाः स्तोकाः, शेषाः पृथिव्यादयो

अग्निस्सर्व-शस्त्रमिति तद्वर्जनो-पदेशः ।

जीवकाया बहवः, भवस्थितिरपि तेजःकायस्याल्पा, इतरेषां पृथिव्यादीनां दीर्घा, अतो दीर्घलोको पृथिव्यादिः, तस्य शस्त्रमग्निकायः, अथ च षट्कायस्यापि शस्त्रं, सर्वत्र भस्मीकरणात् । तस्य 'खेयण्णो'त्ति– क्षेत्रज्ञो– निपुणः, अग्निकायं वर्णादितो जानाति । खेदज्ञो वा–खेदस्तद्व्यापारः सर्वसत्वानां दहनात्मकः, पाकादिकरत्वेनोपचितो यतीनां बह्वारम्भकत्वेनाऽनारम्भणीयः, तमेवंविधं खेदव्यापारं जानातीति खेदज्ञः, स एव अशस्त्रस्य–सप्तदशभेदसंयमस्य खेदज्ञः, संयमो हि न कञ्चिज्जीवलोकं व्यापादयत्यतोऽशस्त्रम् । 'जे असत्थस्स'त्ति– योऽशस्त्रस्य– संयमस्य खेदज्ञो– निपुणः, स खलु दीर्घलोकशस्त्रस्याऽग्नेः क्षेत्रज्ञः खेदज्ञो वा, संयमपूर्वकं हि अग्निविषयखेदज्ञत्वं, अग्निविषयखेदज्ञतापूर्वकं च संयमानुष्ठानं, अन्यथा तदसम्भव एवेत्येतत् गतप्रत्यागतफलमाविर्भावितं भवति । कैः पुनरिदमेवमुपलब्धमित्यत आह––

" वीरेहिं एयं अभिभूय दिट्ठं, संजयेहिं सया जत्तेहिं सया अपमत्तेहिं "

'वीरेहि'मिच्चाइ,–व्या– वीरैस्तीर्थकरैरर्थतो दृष्टमेतत्, गणधरैश्च सूत्रतो दृष्टमग्निशस्त्रं असंयमस्वरूपं चेति । किं पुनरनुष्ठायेदं तैरुपलब्धमित्युच्यते– 'अभिभूय'त्ति, तत्राभिभवो नामादिश्चतुर्द्धा, द्रव्याभिभवो रिपुसेनादिपराजयः, सूर्यतेजसा वा चन्द्रग्रहनक्षत्रादितेजोऽभिभवः । भावाभिभवस्तु परीषहोपसर्गानीकजयात्, अष्टविधकर्म्मनिदलनं वा । तथा परीषहोपसर्गसेनाजयात्कर्म्मक्षयः, कर्म्मक्षयान्निरावरणमप्रतिहताऽशेषज्ञेयग्राहिकेवलज्ञानमुपजायते, तदुत्पाद्य तैरुपलब्धमिति । यथाभूतैस्तैरिदमुपलब्धं तद्दर्शयति– 'संजएहि'त्ति– संयतैः प्राणातिपातादिविरतैः, किम्भूतैः ? सदा– सततमप्रमत्तैः, अनवरतं मद्यविषयकषायविकथाविकलैरेवम्भूतैर्म्महावीरैरिदं दीर्घलोकशस्त्रं दृष्टं, अशस्त्रं– संयममपि दृष्टम् । तदेवं प्रधान-

वयमनगारा इत्येके प्रवदमानाः, किं तैर्विरूपमाचरितम् ?, गुरुराह– यदिदं विरूपरूपैः शस्त्रैरग्निकर्म्मसमारम्भेण अग्निशस्त्रं समारभमाणः सन्नन्याननेकरूपान् प्राणिनो विहिनस्ति, 'तत्थ खलु'त्ति– तत्र खलु भगवता परिज्ञा प्रवेदिता । अस्यैवाऽसारजीवितस्य परिवन्दनमाननपूजनार्थं जातिमरणमोचनार्थं दुःखप्रतिघातहेतुं, एवंविधः सन् अग्निशस्त्रं समारभते, अन्यैश्चाग्निशस्त्रं समारम्भयति तथाऽन्यांश्चाग्निशस्त्रं समारभमाणान् समनुजानीते । एवमग्निकायं समारभमाणस्य किं ? फलं स्यादित्याह– तच्चाग्नेः समारम्भणं से–तस्य सुखलिप्सोरमुत्राऽन्यत्र चाऽहिताय भवति, तथा तस्याऽबोधिलाभाय भवति । 'से तं संबुज्झमाणे'त्ति– स तु शिष्यस्तदऽग्निसमारम्भणं पापायेत्येवं संबुध्यमानः आदानीयं– सम्यग्दर्शनादि सम्यगुत्थाय– अभ्युपगम्य सोच्चा– श्रुत्वा भगवदन्तिके अणगाराणामन्तिके च 'इहमेगेसिं'–इहैकेषां साधूनां ज्ञातं भवति । किं ?, तद्दर्शयति– एषोऽग्निसमारम्भो ग्रन्थः कर्म्मबन्धहेतुत्वात्, एष एव मोहः, एष एव मारः, एष एव नरकः । इत्येवमर्थं च गृद्धो लोको यत्करोति, तद्दर्शयति– यदिदं विरूपरूपैः शस्त्रैरग्निकायकर्म्म समारभते, अग्निशस्त्रं समारभमाणोऽन्याननेकरूपान् प्राणिनो विहिनस्ति । कथं ? तत्र प्रवृत्ताः पुनर्नानाविधान् प्राणिनो हिंसन्तीत्याह–

अन्यतीर्थिका अग्निहिंसाजन्यानेकजीवहिंसकाः ।

" से बेमि–संति पाणा पुढवीनिस्सिया तणनिस्सिया कट्ठनिस्सिया गोमयनिस्सिया कयवरनिस्सिया, संति संपातिमा पाणा आहच्च संपयंति, अगणिं च खलु पुट्ठा एगे संघायमावज्जंति, जे तत्थ संघायमावज्जंति, ते तत्थ परियावज्जंति, जे तत्थ परियावज्जंति ते तत्थ उद्दायंति "

तदहं ब्रवीमि यथा नानाविधजीवहिंसनमग्निकायसमारम्भेण भवति । सन्ति–विद्यन्ते प्राणा जन्तवः पृथ्वीकाय-

॥ २७ ॥

निश्रिताः पृथ्वीकायत्वेन परिणताः, तदाश्रिता वा कृमिकुन्थुपिपीलिकाऽहिभेकवृश्चिकादयः, तथा वृक्षगुल्मलतादयः, तथा तृणपत्रनिश्रिताः पतङ्गेलिकादयः, तथा काष्ठनिश्रिता घुणोद्देहिकादिनामण्डादयः गोमयनिश्रिताः कुन्थुपनकादयः, कचवरनिश्रिताः कीटकृम्यादयः। 'संति संपातिम'त्ति– सन्ति–विद्यन्ते सम्पातिमाः प्राणाः सम्पतितुं– उत्प्लुत्योत्प्लुत्य पतनं येषां ते सम्पातिनः। पृथ्व्यादिनिश्रितानां च अग्न्यारम्भे किं भवति ?, तद्दर्शयति– 'अगणिं च'त्यादि– अग्निना स्पृष्टा एके शलभादयः संघातं– समेकीभावेनाधिकं गात्रसंकोचमापद्यन्ते– प्राप्नुवन्ति, ते च तत्राग्नौ पतिताः संघातमापद्यन्ते ते प्राणिनस्तत्राग्नौ 'पर्यावज्जंति'– पर्यापद्यन्ते– उष्माभिभूता मूर्च्छामापद्यन्ते, ते प्राणिन एकद्वित्रिचतुःपञ्चेन्द्रियादयः, तत्राग्नावुपद्रावन्ति– प्राणान् मुञ्चन्तीत्यर्थः। तदेवमग्निसमारम्भे न केवलमग्निजन्तूनां विनाशः, किन्त्वन्येषामपि पृथ्वीतृणपत्रकाष्ठगोमयकचवराश्रितानां सम्पातिमानां च व्यापत्तिरवश्यं भवतीति। भगवत्यामुक्तं च– "दो पुरिसा सरिसवया अन्नमन्नेहिं सद्धिं अगणिकायं समारंभंति, तत्थ णं एगे पुरिसे अगणिकायं समुज्जालेति, एगे विज्झवेति, तत्थ णं के पुरिसे महाकम्मयराए? के पुरिसे अप्पकम्मयराए?, गोयमा! जे उज्जालेति से महाकम्मयराए, जे विज्झवेति से अप्पकम्मयराए" ॥ तदेवं प्रभूतप्राण्युपमर्दनकरमग्न्यारम्भं ज्ञात्वा त्रिकरणशुद्धिभिस्तत्परिहारः कार्य इत्याह—

"एत्थ सत्थं समारंभमाणस्स इच्चेते आरंभा अपरिण्णाया भवन्ति, एत्थ सत्थं असमारंभमाणस्स इच्चेते आरंभा परिण्णाया भवन्ति, तं परिण्णाय मेहावी णेव सयं अगणिसत्थं समारंभेज्जा नेवऽण्णेहिं अगणिसत्थं समारंभावेज्जा अगणिसत्थं समारंभमाणे अण्णे न समणुजाणेज्जा, जस्सेते अगणिकम्मसमारंभा परिण्णाया भवंति से हु मुणी परिण्णायकम्मेत्ति बेमि।" चउत्थोद्देसो समत्तो ॥

उ० ४ अग्निहिंसानिवारको मुनिर्भवति।

'एत्थ सत्थं'ति- अत्राग्निकाये शस्त्रं स्वकायपरकायभेदभिन्नं समारम्भमाणस्य तस्यैते आरम्भाः- पचनपाचनादिका अपरिज्ञाता भवन्ति। तथाऽत्रैवाऽग्निकायशस्त्रमसमारभमाणस्येत्येते आरम्भाः परिज्ञाता भवन्ति। ज्ञपरिज्ञया च प्रत्याख्यानपरिज्ञया च परिहृता भवन्ति, स एव मुनिः परमार्थतः परिज्ञातकर्म्मेति। ब्रवीमि पूर्ववत् इति शस्त्रपरिज्ञायां चतुर्थोद्देशकः परिसमाप्तः ॥

वनस्पतिवधनिवारको मुनिः

उक्तश्चतुर्थोद्देशकः साम्प्रतं पञ्चम आरभ्यते, अस्य चायमभिसम्बन्धः। इहानन्तरोद्देशके तेजस्कायः प्रतिपादितः। साम्प्रतं वायुकायावसरे वनस्पतिकायजीवस्वरूपमाविर्भाव्यते, तत्र को हेतुः? क्रमोल्लङ्घनस्य। श्रीगुरुराह- एष हि वायुरचाक्षुषो दुःश्रद्धानोऽल्पमेधसां, अत एव वनस्पतिकायः प्रत्यक्षपरिस्फुटजीवलिङ्गकलापोपेतः, अतः स एव तावत्प्रतिपाद्यते। तस्येदं सूत्रम्—

"से बेमि, तं णो करिस्सामि समुट्ठाए मत्ता मइमं, अभयं विदित्ता, तं जे णो करए, एसोवरए एत्थोवरए, एस अणगारेत्ति पवुच्चई"

'से बेमि'ति- व्या०- उक्तं प्राक्, सातान्वेषिणो जन्तूनां दुःखमुदीरयन्ति, ततश्च दुःखगहने संसारसागरे भ्राम्यन्ति सत्त्वा इत्येवं विदितकटुकविपाकः समस्तवनस्पतिसत्त्वविषयमर्द्दननिवृत्तिमात्यन्तिकामात्मनि दर्शयन्नाह- 'तन्नो करिस्सामि' त्ति- तद् वनस्पतीनां दुःखमहं न करिष्ये किं कृत्वा?, 'समुट्ठाए'त्ति- समुत्थाय- सम्यक् प्रव्रज्योत्थानेनोत्थाय- प्रव्रज्यामङ्गीकृत्येत्यर्थः। इत्यनेन संयमक्रिया दर्शिता, न च क्रियात एव मोक्षावाप्तिः, किं तर्हि?, ज्ञानक्रियाभ्यां मोक्षः,

॥ २९ ॥

अतो ज्ञानप्रतिपादनायाह–' मत्ता मइमं 'ति– मत्वा– ज्ञात्वा अवबुध्य यथावद् जीवान्, मतिरस्याऽस्तीति मतिमान् तस्य सम्बोधनं क्रियते हे मतिमन्! प्रव्रज्यां प्रतिपद्य जीवादिपदार्थांश्च ज्ञात्वा मोक्षमवाप्नोति, सम्यग्ज्ञानपूर्विका हि क्रिया फलवतीति दर्शितम्। पुनरत्रैवाह– अभयं विदित्ता– अभयं– सप्तदशधा संयमस्तं विदित्वा– ज्ञात्वा ' तं जे णो 'त्ति तद् वनस्पत्यारम्भं नो कुर्यात्, ' एसो 'त्ति– एष एवोपरतः, किमन्यतीर्थिकः ? न हि, ' एत्थो 'त्ति–जैनप्रवचने नान्यत्र, एष एवाऽनगारः प्रोच्यते। अथ शब्दादिविषया वनस्पतिभ्यः संजायंते तद्दर्शयितुमाह—

" जे गुणे से आवट्टे जे आवट्टे से गुणे "

यो गुणः–शब्दरूपरसगन्धस्पर्शलक्षणः स एवावर्त्तः–संसारः, आवर्त्तन्ते–परिभ्रमन्ति प्राणिनो यत्र स आवर्त्तः, यश्चावर्त्ते वर्त्तते स शब्दादिगुणेषु वर्त्तते इति भावः। कथं पुनर्गुणभूयस्त्वं वनस्पतिभ्य इत्याह–वेणुवीणापटहातोद्यादीनां वनस्पतेरुत्पत्तिः, ततश्च मनोहराः शब्दा निष्पद्यन्ते, पुनः काष्ठकर्म्मस्त्रीप्रतिमादिषु गृहतोरणवेदिकास्तम्भादिषु च चक्षु-रमणीयं रूपं भवति। गन्धोऽपि हि कर्प्पूरपाटललवङ्गकेतकीसरसचन्दनागरुकक्कोलजातीचम्पकैलाजातिफलादीनाम्। जिह्वे-न्द्रियप्रह्लादिनोऽनेके रसाः तेभ्यो निष्पद्यन्ते। तथा स्पर्शाः पद्मिनीपत्रकमलदलमृणालवल्कलदुकूलशाटकोपधानतूलीप्रच्छद-पटादीनां स्पर्शेन्द्रियसुखाः प्रादुष्यन्ति। एवमेतेषु वनस्पतिनिष्पन्नेषु शब्दादिगुणेषु यो वर्त्तते स आवर्त्ते वर्तते। यश्चावर्त्ती स रागद्वेषात्मकत्वात् गुणेषु प्रवर्त्तते। अथ ये एते गुणाः संसारावर्त्तकारणभूताः शब्दादयो वनस्पतिनिष्पन्नास्ते किं नियत-दिग्भाजः ?, किं सर्वदिक्षु वर्त्तिन ?, इत्यत आह—

उ० ५ वनस्पति-जन्याः श-ब्दादिगुणा इति प्रद-र्शनम्।

" उड्ढं अधं तिरियं पाईणं पासमाणे रूवाइं पासति सुणमाणे सद्दाइं सुणेति, उड्ढं अधं तिरियं पाईणं मुच्छमाणे रूवेसु मुच्छति, सद्देसु आवि एस लोए वियाहिए "

' उड्ढं अधं तिरियं 'ति-व्या-प्रज्ञापकदिगङ्गीकरणात् उर्ध्वदिक्स्थितं रूपगुणं पश्यति प्रासादतलहर्म्यादिषु, 'अधं'ति-अधस्तात् गिरिशिखरारूढोऽधो व्यवस्थितरूपगुणं पश्यति, गृहभित्त्यादिव्यवस्थितं रूपगुणं तिर्यक् पश्यति, तिर्यक्शब्देन चात्र दिशोऽनुदिशो द्रष्टव्याः, एतासु दिक्षु पश्यंश्चक्षुर्ज्ञानपरिणतो रूपादिद्रव्याणि-चक्षुर्ग्राह्यतया परिणतानि पश्यति-उपलभते। तथा तासु च शृण्वन् शृणोति, ऊर्द्ध्वादिदिक्षु रूपादिषु मूर्छति, एवं गन्धरसस्पर्शा गृह्यन्ते। ' एस लोए '-एष लोकः शब्दादिविषयाख्यो ' वियाहिए 'त्ति-व्याख्यातः। अथ विषयलोकमनुभावयन् किं कुरुते?, तद्दर्शयितुमाह—

सर्वदिक्-सत्ताकाः शब्दादि-गुणा लोक इति प्रकाशनम्।

" एत्थ अगुत्ते अणाणाए "

' एत्थ अगुत्ते 'ति व्या०-अस्मिंश्च पूर्वाख्याते शब्दादिविषयलोके अगुप्तो मनोवाक्कायैः-मनसा द्वेष्टि रज्यते वा, वाचा प्रार्थयते, कायेन तद्देशं व्रजति। एवं योऽगुप्तो भवति सोऽनाज्ञायां वर्त्तते-भगवत्प्रवचनानुगामी न भवति। एवंगुणश्च यत्कुर्यात् तदाह—

" पुणो पुणो गुणासाए वंकसमायारे पमत्तेऽगारमावसे "

' पुणो पुणो 'त्ति-शब्दादिगुणलुब्धः पुनः पुनः वारंवारं शब्दादिगुणानास्वादयतीत्यर्थः। एवंविधो गुणास्वादी ' वंकसमायारे 'त्ति-वक्रः समाचारो यस्याऽसौ, असंयमानुष्ठायीत्यर्थः, अवश्यमेव शब्दादिविषयाभिलाषी भूतोपमर्दकारी, इत्यतो

॥ ३१ ॥

वक्रसमाचारः। एवंविधो गृद्धः प्रमत्तः अपथ्याम्रभोजिराजवद् विनाशं प्राप्नोति, अथवाऽरहन्नकवत् तदागारमावसेत्, पश्चान्मात्रा प्रबोधितः सुगतिं जगाम। एवं प्रमत्तो विषयमूर्छितो अगारं-गृहवासं वसति। एवं योऽपि द्रव्यलिङ्गसहितः शब्दादिविषयप्रमादवान् असावपि विरतिरूपभावलिङ्गरहितत्वाद् गृहस्थ एवेति। अन्यतीर्थिकाः पुनः सर्वदा सर्वथाऽन्यथावादिनोऽन्यथाकारिण इति दर्शयितुमाह—

" लज्जमाणा पुढो पास अणगारा मोत्ति एगे पवदमाणा जमिणं विरूवरूवेहिं सत्थेहिं वणस्सइकम्मसमारंभेण वणस्सइसत्थं समारभमाणा अण्णे अणेगरूवे पाणे विहिंसति, तत्थ खलु भगवया परिण्णा पवेदिता, इमस्स चेव जीवियस्स परिवंदणमाणणपूयणाए जातिमरणमोयणाए दुक्खपडिघायहेउं से सयमेव वणस्सइसत्थं समारंभइ अण्णेहिं वा वणस्सइसत्थं समारंभावेइ अण्णे वा वणस्सइसत्थं समारभमाणे समणुजाणइ, तं से अहियाए तं से अबोहिए से तं संबुज्झमाणे आयाणीए समुट्ठाय सोच्चा भगवओ अणगाराणं वा अन्तिए इहमेगेसिं णायं भवति—एस खलु गंथे एस खलु मोहे एस खलु मारे एस खलु नरए इच्चत्थं गढिए लोए जमिणं विरूवरूवेहिं सत्थेहिं वणस्सइकम्मसमारंभेण वणस्सइसत्थं समारंभमाणे अण्णे अणेगरूवे पाणे विहिंसंति।"

'लज्जमाण'त्ति व्या०– इति प्राग्वद् ज्ञेयं, नवरं वनस्पत्याभिलापो विधेयः। साम्प्रतं वनस्पतिजीवास्तित्वे लिङ्गमाह—

" से बेमि, इमंपि जाइधम्मयं एयंपि जाइधम्मयं, इमंपि वुड्ढिधम्मयं एयंपि वुड्ढिधम्मयं, इमंपि चित्तमंतयं एयंपि चित्तमंतयं, इमंपि छिन्नं मिलाइ एयंपि छिन्नं मिलाइ, इमंपि आहारगं. एयंपि आहारगं, इमंपि अणिच्चयं एयंपि अणिच्चयं, इमंपि असासयं एयंपि असासयं, इमंपि चयोवचइयं एयंपि चओवचइयं, इमंपि विपरिणामधम्मयं एयंपि विपरिणामधम्मयं"

‘ से बेमि ’त्ति– सोऽहमुपलब्धो ब्रवीमि, अथवा वनस्पतिचैतन्यप्रमाणमधिगम्य ब्रवीमि– कथयामि । यथाप्रतिज्ञा- तमर्थं दर्शयति– ‘इमंपि जाइधम्मयं’ति– सन्निहितसत्पुरुषस्योपदेशेन त्वत्प्रत्यक्षशरीरतुल्यत्वेन दर्शयति । यथा हि मनुष्य ! ‘ इमं ’त्ति– इदमपि ते तव शरीरं जातिधर्म्मकं– जननं-जातिरूत्पत्तिस्तद्धर्म्मकं, एतदपि वनस्पतिशरीरकं तद्धर्म्मकं– तत्स्वभा- वमेवेति । एवं सर्वत्र योज्यं । यथा मनुष्यशरीरं बालकुमारयुववृद्धतापरिणामविशेषवत् चेतनावत् सदाधिष्ठितं प्रस्पष्टचेतना- कमुपलभ्यते, तथेदमपि वनस्पतिशरीरं बालवृद्धतरुणजरामृत्युधर्म्मकं दृश्यते । तथैतदऽपि ज्ञेयं– ‘ इमंपि वुड्ढिधम्मयं ’ति– अथेदं मनुष्यशरीरं बालकुमाराद्यवस्थाविशेषैरनवरतं वर्द्धते, तथैतदपि वनस्पतिशरीरं- अंकुरकिशलयशाखाप्रशाखादिभिर्वर्द्धते । तथा इमंपि चित्त’त्ति– यथेदं मनुष्यशरीरं चित्तवत्, तथैतदपि ज्ञेयम् । चेतयति येन तच्चित्तं– ज्ञानं, यथा मनुष्यशरीरं ज्ञाना- नुगतं, एवं वनस्पतिशरीरमपि, यतो धात्रीप्रपुन्नाटादीनां स्वापविबोधसद्भावः । आहारादिदशसञ्ज्ञोपलब्धितश्चित्तवत्त्वं प्रतिपादितम् । ‘इमंपि छिन्नं’ति– इदं मनुष्यशरीरं छिन्नं-छेदितं म्लायते– म्लानिं भजते मिलते वा, तथैतदपि जानीहि । ‘ इमंपि आहर ’त्ति इदं मनुष्यशरीरं स्तनक्षीराद्याहारकं, तथेदमपि वनस्पतिशरीरं भूजलाद्याहाराभ्यवहारकम् । ‘ एअं अ- णिच्चयं’ति–यथेदं मनुष्यशरीरमनित्यकं न सर्वदा स्थायि, तथैतदपि वनस्पतिशरीरकमनित्यं, नियतायुष्यकत्वाद्, वनस्पते- र्दशवर्षसहस्रोत्कृष्टमायुः । तथा ‘ इमंपि असासयं ’ति– यथेदं मनुष्यशरीरमशाश्वतं, प्रतिक्षणमावीचीमरणेन मरणात्, तथेद- मपि वनस्पतिशरीरमिति । ‘ इमं चओवचयं ’ति–यथेदं मनुष्यशरीरमिष्टाहारादिप्राप्त्या चयापचयिकं–वृद्धिहान्यात्मकं तथैत- दपि । तथा ‘ विपरिणाम ’त्ति–यथेदं मनुष्यशरीरं विपरिणामधर्म्मकं–विविधपरिणामः–तत्तद्रोगसम्पर्कात् पाण्डुत्वोदरवृद्धि-



॥ ३३ ॥

शोफकृशत्वाङ्गुलिनासिकाप्रवेशादिरूपो बालादिरूपो वा, तथा रसायनाद्युपयोगाद् विशिष्टकान्तिबलोपचयादिरूपो विपरिणा-
मस्तद्धर्मकं-तत्स्वभावकं । तथैतदपि वनस्पतिशरीरकं तथाविधरोगोद्भवात् पत्रपुष्पफलाद्यपचयादिरूपो विपरिणामः तथा
विशिष्टदोहदप्रदानेन पत्राद्युपचयित्वं विपरिणामस्तद्धर्म्मकमित्यर्थः । एवं मनुष्यशरीरवत् सचेतनास्तरवः । एवं वनस्पते-
श्चेतनां प्रदर्श्य तदारम्भे बन्धं तत्परिहाररूपविरत्यासेवनेन मुनित्वं प्रतिपादयन्नुपसञ्जिहीर्षुराह—

एत्थ सत्थं समारभमाणस्स इच्चेते आरंभा अपरिण्णाता भवंति, एत्थ सत्थं असमारभमाणस्स इच्चेते आरंभा परिण्णाया भवंति,
तं परिण्णाय मेहावी णेव सयं वणस्सइसत्थं समारंभेज्जा णेवण्णेहिं वणस्सइसत्थं समारंभावेज्जा णेवण्णे वणस्सइसत्थं समारंभंते सम-
णुजाणेज्जा, जस्सेते वणस्सतिसत्थसमारंभा परिण्णाया भवंति से हु मुणी परिण्णायकम्मेति बेमि । सत्थपरिण्णाए पंचमोद्देसो
सम्मत्तो- ५ ॥

‘ एत्थ सत्थं ’ति व्या– एतस्मिन् वनस्पतौ शस्त्रं द्रव्यभावाख्यं आरम्भमाणस्यैते आरम्भा अपरिज्ञाता– अप्रत्याख्या-
ता भवन्ति । एतस्मिन् वनस्पतौ शस्त्रासमारम्भमाणस्यैते आरम्भाः परिज्ञाताः– प्रत्याख्याता भवन्ति । पूर्ववच्च सर्वोऽप्यर्थो
व्याख्येयो यावत्स एव मुनिः परिज्ञातकर्म्मा इति ब्रवीमि– कथयामीति पूर्ववत् । शस्त्रपरिज्ञाध्ययने पञ्चमोद्देशकटीका ।
उक्तः पञ्चमोद्देशकः, साम्प्रतं षष्ठ आरभ्यते । इहानन्तरोद्देशे वनस्पतिकायः प्रतिपादितः, तदनन्तरं त्रसकायस्यागमे प्रति-
पादित्वात् तत्स्वरूपाधिगमायायमुद्देशकः समारभ्यते । तस्यादिसूत्रम्—

" से बेमि संतिमे तसा पाणा, तं जहा–अंडया १ पोयया २ जराउआ ३ रसया ४ संसेयगा ५ संमुच्छिमा ६ उब्भियया

७ उववाइया ८, एस संसारेत्ति पव्वुच्चई मंदस्सावियाणओ ”

‘ से वेमि ’त्ति–सोऽहं ब्रवीमि संति–विद्यन्ते त्रस्यन्तीति त्रसाः, किंविधाः ? पाणा त्ति–यथायोग्गं प्राणधारणं विद्यते येषां ते प्राणिनो द्वीन्द्रियादयः। ते च कियद्भेदाः–किंप्रकाराश्चेति दर्शयति–तद्यथा–‘ अंडय ’त्ति–अण्डाज्जाता अण्डजाः–पक्षिगृहकोकिलादयः। पोता एव जायन्ते पोतजाः–हस्तिवल्गुल्यादयः। जरायुवेष्टिता जायन्ते इति जरायुजाः–गोमहिष्य-जाविकमनुष्याः। रसाद् जाता रसजाः–तक्रारनालदधितीमनादिषु कृम्याकृतयोऽतिसूक्ष्मा भवन्ति। संस्वेदाद् जाताः संस्वेदजाः–मत्कुणयूकाशतपदिकादयः। संमूर्छनाज्जाताः संमूर्छजाः शलभपिपीलिकादयः। उद्भेदनं–उद्भिद् भुवमुद्भिद्य जाता उद्भिजाः पतङ्गखंजरीटादयः। उपपाताज्जाता उपपातजाः, अथवोपपाते भवा औपपातिकाः देवा नारकाश्च। एवमष्टविधे जन्मनि सर्व्वे त्रसजन्तवः संसारिणो निपतन्ति नैतद्व्यतिरेकेणान्ये सन्ति। च शब्देन त्रिकालाऽस्तित्वं प्रतिपाद्यते त्रसानां, न कदाचिदेतैर्विरहितः संसारः संभवतीति दर्शयति–‘ एस संसारेत्ति ’–एषो अण्डजादिप्राणिकलापः संसारः प्रोच्यते। कस्य पुनरष्टविधभूतग्रामे उत्पत्तिर्भवतीत्याह–‘ मंदस्सेत्ति ’–मन्दो द्विधा, द्रव्यभावभेदात्, तत्र द्रव्यमन्दोऽतिस्थूलोऽतिकृशो वा, भावमन्दोऽप्यनुपचितबुद्धिर्बालः कुशास्त्रवासितमतिर्वा, अयमपि सद्बुद्धेरभावाद् बाल एव, इह भावमन्देनाधिकारः एवं मन्दस्य विशिष्टबुद्धिविकलस्य संसारो भवतीत्याह—

“ निज्झाइत्ता पडिलेहित्ता पत्तेयं परिनिव्वाणं सव्वेसिं पाणाणं सव्वेसिं भूयाणं सव्वेसिं जीवाणं सव्वेसिं सत्ताणं अस्सायं अपरिनिव्वाणं महब्भयं दुक्खंति वेमि, तसंति पाणा पदिसो दिसासु य ”

त्रसजीव-प्रकाराः।

सर्वजीवा-
नां सुख-
दुःखे
प्रियाऽप्रिये।

'निज्झाय'त्ति–इमं त्रसकायं निश्चयेन ध्यात्वा–चिन्तयित्वा ब्रवीमि, पडिलेहित्ता–प्रत्युपेक्ष्य–दृष्ट्वा, किं तत्? पत्तेयंति–
एकमेकं त्रसकायं प्रति, परिनिर्वाणं–सुखं प्रत्येकसुखभाजः सर्वेऽपि प्राणिनो, नान्यदीयमन्य उपभुंक्ते सुखमित्यर्थः। एष च
सर्वप्राणिधर्म्म इति दर्शयति–सव्वेसिंति–सर्वेषां प्राणिनां द्वित्रिचतुरिन्द्रियाणां, सर्वेषां भूतानां सर्वेषां जीवानां सर्वेषां सत्वानां,
तदेवं विचिन्त्य–प्रत्युपेक्ष्य च सर्वेषां जीवानां प्रत्येकं परिनिर्वाणं सुखं तथा प्रत्येकमसातं अपरिनिर्वाणं, न परिनिर्वाणं अपरि-
निर्वाणं समन्तात् शरीरमनःपीडाकरम्। तथा महाभयं सर्वेऽपि प्राणिनः शारीरमानसाच्च दुःखादुद्विजन्त इति, एवमहं
ब्रवीमीति। एवंविधेनासातादिविशेषेण विशिष्टेनाभिभूतास्त्रस्यन्तीति त्रसाः प्राणा इति प्राणिनः। कुतः पुनरुद्विजन्तीति
दर्शयति–'पदिसो'त्ति–प्रगता दिक् प्रदिक् विदिक् इत्यर्थः, ततः प्रदिशः सकाशादुद्विजन्ति, तथा प्राच्यादिषु दिक्षु
व्यवस्थिताः त्रस्यन्ति कोशकारकीटवत्, कोशकारकीटो हि सर्वदिग्भ्योऽनुदिग्भ्यश्च बिभ्यदात्मसंरक्षणार्थं वेष्टनं करोति
शरीरस्येति। भावदिगपि न काचित्तादृश्यस्ति, यस्यां वर्त्तमानो जन्तुर्न त्रस्येत्, शारीरमानसाभ्यां दुःखाभ्यां सर्वत्र नरका-
दिषु जंघन्यन्ते प्राणिनोऽतस्त्रासपरिगतमनसः सर्वदाऽवगन्तव्याः। एवं दिक्षु विदिक्षु च त्रसाः सन्तीति गृह्णीमः। यस्मात्
तदारम्भवद्भिस्ते व्यापाद्यन्ते। किं पुनः कारणं? ते तानारम्भन्त इत्याह—

"तत्थ तत्थ पुढो पास आतुरा परितावंति, संति पाणा पुढो सिया"

तत्र तत्र तेषु तेषु कारणेषुत्पन्नेषु वक्ष्यमाणेषु शरीरचर्मशोणितादिषु पुढो–पृथक् विभिन्नेषु प्रयोजनेषु पश्येति शिष्यनो-
दना। किं तत्पश्येति दर्शयति– मांसभक्षणादिगृद्धा– आतुरा अस्वस्थमनसः परिसमन्तात्तापयन्ति, येन केनचिदारम्भेण

प्राणिनां संतापनं भवतीति दर्शयति—'संति पाणा'— सन्ति विद्यन्ते प्राणाः— प्राणिनः प्रायः सर्वत्रैव पृथग्—विभिन्ना द्वित्रिचतुःपञ्चेन्द्रियाः पृथिव्यादिनिश्रिताः, एतच्च ज्ञात्वा निरवद्यानुष्ठायिना भवितव्यमित्यभिप्रायः। अन्ये पुनरन्यथावादिनोऽन्यथाकारिण इति दर्शयति—

"लज्जमाणा पुढो पास अणगारा मो त्ति एगे पवयमाणा जमिणं विरूवरूवेहिं सत्थेहिं तसकायसमारंभेण तसकायसत्थं समारभमाणा अण्णे अणेगरूवे पाणे विहिंसंति, तत्थ खलु भगवया परिण्णा पवेदिता, इमस्स चेव जीवियस्स परिवंदणमाणणपूयणाए जाईमरणमोयणाए दुक्खपडिग्घायहेउं से सयमेव तसकायसत्थं समारंभति, अन्नेहिं वा तसकायसत्थं समारंभावेइ, अण्णे वि तसकायसत्थं समारंभमाणे समणुजाणइ, तं से अहियाए तं से अबोहिए से तं संबुज्झमाणे आयाणीयं समुट्ठाय सोच्चा भगवओ अणगाराणं अंतिए इहमेगेसिं णायं भवइ— एस खलु गंथे एस खलु मोहे एस खलु मारे एस खलु नरए, इच्चत्थं गढ्ढिए लोए जमिणं विरूवरूवेहिं सत्थेहिं तसकायसमारंभेण तसकायसत्थं समारंभमाणे अण्णे अणेगरूवे पाणे विहिंसंति"

व्याख्या पूर्ववत्। यानि कानिचित्कारणान्युद्दिश्य त्रसवधः क्रियते तानि दर्शयितुमाह—

"से बेमि अप्पेगे अच्चाए हणंति, अप्पेगे अजिणाए वहंति, अप्पेगे मंसाए वहंति, अप्पेगे सोणियाए वहंति, एवं हिययाए पित्ताए वसाए पिच्छाए पुच्छाए वालाए सिंगाए विसाणाए दंताए दाढाए णहाए ण्हारुणीए अट्ठीए अट्ठिमिंजाए अट्ठाए अणट्ठाए अप्पेगे हिंसिंसु मेत्ति वा वहंति अप्पेगे हिंसंति मेत्तिवा वहंति अप्पेगे हिंसिस्संति मेत्ति वा वहंति"

तदहं ब्रवीमि—यदर्थं प्राणिनस्तदारम्भप्रवृत्तैर्व्यापाद्यन्त इति। अप्येकेऽर्चायै घ्नन्ति, अर्च्यते पूज्यतेऽसावाहारालङ्कार-

अज्ञानिनां त्रसकाय-जीववध-प्रकाराः प्रदर्शिताः।



॥ ३७ ॥

तथा लक्षणवत्पुरुषं अक्षतमव्यंगं व्यापाद्य तच्छरीरेण विद्यामन्त्रसाधनानि
विधानैरिति अर्च्चा—देहस्तदर्थं व्यापादयन्ति । तथा अजिनार्थं चित्रकव्याघ्रादीन् व्यापादयन्ति, एवं मांसशोणितहृदय-
कुर्व्वन्ति, उपयाचितं वा यच्छन्ति दुर्गादीनामग्रतः, तथा पित्तवसापिच्छपुच्छवालशृंगविषाणदन्तदंष्ट्रानखस्नाय्वस्थ्यस्थिमिञ्जादिष्वपि वाच्यं, तत्र मांसार्थं शूकरादयः, त्रिशूलाले-
पित्तवसापिच्छपुच्छवालशृंगविषाणदन्तदंष्ट्रानखस्नाय्वस्थ्यस्थिमिञ्जादिष्वपि वाच्यं, तत्र मांसार्थं शूकरादयः, त्रिशूलाले-
खार्थं शोणितं गृह्णन्ति, हृदयानि साधका गृहीत्वा मथ्नन्ति, पित्तार्थं मयूरादयः, वसार्थं व्याघ्रमकरादयः, पिच्छार्थं मयूर-
गृध्रादयः, पुच्छार्थं रोझादयः, बालार्थं चमर्यादयः, शृङ्गार्थं रुरुखड्ग्यादयः, तत् किल शृंगं याज्ञिकाः पवित्रमिति गृह्णन्ति,
विषाणार्थं शृगालादयः, दन्तार्थं हस्त्यादयः, दंष्ट्रार्थं वराहादयः, नखार्थं केचिज्जातीया जन्तवः । एवमेके यथोपदिष्टप्र-
योजनकलापापेक्षया घ्नन्ति । अपरे तु कृकलासगृहकोकिलादीन् विना प्रयोजनेन व्यापादयन्ति । अन्ये पुनः 'हिंसिंसु मे'-
त्ति—हिंसितवानेषोऽस्मत्स्वजनान् सिंहः सर्प्पोऽरिर्वाऽतो घ्नन्ति, मम वा पीडां कृतवन्त इत्यतो घ्नन्ति । तथाऽन्ये वर्त्तमा-
नकाले एव हिनस्ति अस्मान् सिंहोऽन्यो वेति घ्नन्ति । तथाऽन्येऽस्मानयं हिंसिष्यति इत्यनागतमेव सर्प्पादिकं व्यापाद-
यन्ति । एवमनेकप्रयोजनोपन्यासेन हननं त्रसविषयं प्रदर्श्य उद्देशकार्थमुपसञ्जिहीर्षुराह—

" एत्थ सत्थं समारभमाणस्स इच्चेते आरंभा अपरिण्णाया भवंति, एत्थ सत्थं असमारभमाणस्स इच्चेते आरंभा परिण्णाया
भवन्ति, तं परिण्णाय मेहावी णेव सयं तसकायसत्थं समारंभेज्जा, णेवन्नेहिं तसकायसत्थं समारंभावेज्जा, णेवऽण्णे तसकायसत्थं
समारंभंते समणुजाणेज्जा, जस्सेते तसकायसमारंभा परिण्णाया भवंति, से हु मुणी परिण्णायकम्मेत्ति बेमि । " सत्थपरिण्णाए
छट्ठोद्देसो सम्मत्तो ॥

व्या०–प्राग्वत् भावनीयं, यावत् स एव मुनिः त्रसकायसमारम्भनिवृत्तत्वात् प्रत्याख्यातकर्म्मत्वात् इति ब्रवीमि भगवतस्त्रैलोक्यबन्धोर्जगज्जीववात्सल्यकारिणः परमकेवलालोकसाक्षात्कृतसकलभुवनप्रपञ्चस्योपदेशात् । इति शस्त्रपरिज्ञायां षष्ठोद्देशकः समाप्तः ।

उक्तो षष्ठोद्देशकः, साम्प्रतं सप्तमः प्रारभ्यते, अस्य चायं सम्बन्धोऽभिनवधर्म्मणां दुःश्रद्धानत्वात् अल्पपरिभोगत्वादुत्क्रमायातस्योक्तशेषस्य वायोः स्वरूपनिरूपणार्थमिदमुपक्रम्यते । तच्चेदं सूत्रम्—

" पहू एजस्स दुगुंछणाए "

वायुकाय-जीवविराधनानिवृत्तिकारण-दर्शनम् ।

व्या०–अस्य चायमभिसम्बन्धः । अनन्तरोद्देशके त्रसकायपरिज्ञानं तदारम्भवर्जनं च मुनित्वकारणमभिहितम् । इहापि तदेव द्वयं वायुकायविषयं मुनित्वकारणमेवोच्यते । तच्च 'पहू एजस्स'त्ति–एजृ कम्पने एजतीति एजो–वायुः कम्पनशीलत्वात् तस्यैजस्य जुगुप्सा–निन्दा तदासेवनपरिहारो निवृत्तिः, तस्यां तद्विषये प्रभुर्भवतीति । अर्थात् यदि श्रद्धाय जीवतया जुगुप्सते ततः । योऽसौ वायुकायसमारम्भनिवृत्तौ प्रभुरुक्तस्तं दर्शयति—

" आयंकदंसी अहियंति णच्चा, जे अज्झत्थं जाणइ, से बहिया जाणइ, जे बहिया जाणइ से अज्झत्थं जाणइ एयं तुलमन्नेसिं "

' आयंके'त्ति–आतंको–दुःखं, तच्च द्विविधं–शारीरं मानसं च, एतदुभयमातङ्कः, आतङ्कं–भयं पश्यतीति आतंकदर्शी, अवश्यमेतदुभयमपि दुःखं मयि अनिवृत्तकायसमारम्भे आपतति । एतद्वायुकायारम्भणं आतंकहेतुभूतं 'अहियं'ति–अहितमिति ज्ञात्वैतस्मान्निवर्त्तने प्रभुर्भवति । वायुकायारम्भनिवृत्तेः कारणमाह–'जे अज्झत्थं'ति–आत्मानमधिकृत्य यद् वर्त्तते

तदऽध्यात्मं, तच्च सुखदुःखादि, तद् यो जानाति–स्वरूपतोऽवगच्छति, स बहिरपि प्राणिगणं वायुकायादिकं जानाति । यथै-
पोऽपि सुखाभिलाषी दुःखाच्चोद्विजते, यथा मयि दुःखमापतितमतिकटुकमसद्वेद्यकर्म्मोदयादऽशुभफलं स्वानुभवसिद्धं, एवं
यो वेत्ति, स्वात्मनि सुखं च सद्वेद्यकर्म्मोदयात् शुभफलं, एवं योऽवगच्छति, स खलु अध्यात्मं जानाति । एवं च योऽध्या-
त्मवेदी स बहिर्व्यवस्थितवायुकायादिप्राणिगणस्यापि नानाविधोपक्रमजनितं स्वपरसमुत्थं च शरीरमनःसमाश्रयं दुःखं सुखं
वा वेत्ति, यस्यैवंविधं विज्ञानं नास्ति, कुतस्तस्य बहिर्व्यवस्थितवायुकायादिषु अपेक्षा ?। यश्च बहिर्जानाति, सोऽध्यात्मं वेत्ति ।
परात्मज्ञानाच्च यच्च विधेयं तदाह– 'एयं तुलमन्नेसि'मित्यादि–एतां तुलामन्वेषयेत्–गवेषयेदिति । का पुनरसौ तुला ?, यथा-
ऽऽत्मानं सर्वथा सुखाभिलाषितया रक्षसि, तथा परमपि रक्ष, कथमिति ? दर्शयति—

"इह संतिगया दविया णावकंखंति जीविउं"

'इह संति'त्ति– इह एतस्मिन् दयैकरसे जिनप्रवचने शमनं शांतिरुपशमः, एवंविधां शान्तिं गताः शान्तिगताः । शमसंवेदनिर्वेदानुकम्पास्तिक्याभिव्यक्तिलक्षणसम्यग्दर्शनज्ञानचरणकलापः शान्तिरुच्यते, निराबाधमोक्षाख्यशान्तिप्राप्ति-कारणत्वात् । एवंविधां शान्तिं गताः–प्राप्ताः शान्तिगताः, द्रविका नाम रागद्वेषविनिर्मुक्ताः, द्रवः–संयमः कर्म्मकाठिन्य-द्रवकारित्वात्, स विद्यते येषां ते द्रविकाः, नावकांक्षन्ति, किं ?, 'जीविउं'ति– प्राणान् धारयितुं, केनोपायेन जीवितुं नाभिकांक्षन्ति ?, वायुजीवोपमर्द्दनेन, शेषजीवनिकायरक्षणं तु प्रागुक्तमेव । समुदायार्थस्त्वयं– इह प्रवचने यः संयमस्तद्व्यव-स्थिता एवोन्मूलितातितुङ्गरागद्वेषद्रुमाः परप्राणिप्राणापहरणे निरभिलाषाः साधवः, नान्ये, एवंविधक्रियावबोधाऽभावात् ।

उ० ७
वायुकाय-
जीवविरा-
धनां कृत्वा
जीवितुं
नेच्छन्ति
मुनयः ।

वायुकाय-हिंसायामनेकजीवविनाशो भवति ।

एवं व्यवस्थिते सति—

" लज्जमाणे पुढो पास अणगारा मोत्ति एगे पवयमाणा जमिणं विरूवरूवेहिं सत्थेहिं वाउकम्मसमारंभेण वाउसत्थं समारंभमाणे अण्णे अणेगरूवे पाणे विहिंसंति । तत्थ खलु भगवया परिण्णा पवेइया । इम्मस्स चेव जीवियस्स परिवंदणमाणणपूयणाए जाईमरणमोयणाए दुक्खपडिघायहेउं से सयमेव वाउसत्थं समारभति, अण्णेहिं वा वाउसत्थं समारंभावेइ, अण्णे वाउसत्थं समारंभंते समणुजाणंति, तं से अहियाए तं से अबोहिए से तं संबुज्झमाणे आयाणीयं समुट्ठाए सोच्चा भगवओ अणगाराणां अंतिए इह मेगेसिं णायं भवति– एस खलु गंथे एस खलु मोहे एस खलु मारे एस खलु णिरए इच्चत्थं गड्डिए लोए जमिणं विरूवरूवेहिं सत्थेहिं वाउकम्मसमारंभेण वाउसत्थं समारंभमाणे अण्णे अणेगरूवे पाणे विहिंसंति, से वेमि संति संपाइमा पाणा आहच्च संपयंति य फरिसं च खलु पुट्ठा एगे संघायमावज्जंति, जे तत्थ संघायमावज्जंति ते तत्थ परियावज्जंति, ते तत्थ उद्दायंति, एत्थ सत्थं समारभमाणस्स इच्चेते आरंभा अपरिण्णाया भवंति, एत्थ सत्थं असमारभमाणस्स इच्चेते आरंभा परिण्णाया भवंति, तं परिण्णाय मेहावी णेव सयं वाउसत्थं समारंभेज्जा, णेवन्नेहिं वाउसत्थं समारंभावेज्जा, णेवऽण्णे वाउसत्थं समारंभंते समणुजाणेज्जा, जस्सेते वाउसत्थसमारंभा परिण्णाया भवंति, से हु मुणी परिण्णायकम्मेत्ति वेमि " । व्याख्या पूर्ववदिति ।

सम्प्रति षड्जीवनिकायविषयवधकारिणामपायदर्शनाय तन्निवृत्तिकारिणां च सम्पूर्णमुनिभावदर्शनाय सूत्राणि प्रारभ्यंते—

" एत्थंपि जाणे उवादीयमाणा जे आयारे न रमंति आरंभमाणा विणयं वयंति छंदोवणीया अज्झोववन्ना आरंभसत्ता पक-

रंति संगं ”

‘एत्थंपि जाण’ इच्चाइ-व्या०-एतस्मिन् वायुकाये अपिशब्दात् पृथिव्यादिषु समाश्रितमारम्भं ये कुर्वन्ति, ते उपादीयन्ते-कर्म्मणा बध्यन्त इत्यर्थः । एतस्मिन् जीवनिकाये वधप्रवृत्ताः शेषनिकायवधजनितेन कर्म्मणा बध्यन्ते । किमिति ?, यतो न हि एकजीवनिकायविषयारम्भः शेषजीवनिकायोपमर्द्दनमन्तरेण कर्तुं शक्यते । अतस्त्वमेवं जानीहि । अनेन श्रोतुः परामर्शः । ततश्चैवमन्वयो लगयितव्यः—पृथिव्याद्यारम्भिणः शेषकायारम्भकर्मणा उपादीयमानान् जानीहि । के शेषकायारम्भकर्मणोपादीयन्ते ?, इत्याह—‘जे आयारे’त्ति—ये अविज्ञातपरमार्था एवंविधाचारे न रमन्ते—न धृतिं कुर्वन्ति, तदधृत्या च तदेवोपादीयमानान् जानीहि । ते के ? शाक्यदिगम्बरपार्श्वस्थादयः । किमिति ? यत आह—आरम्भमाणा अपि विनयं—संयमं वदन्ति—कथयन्ति । कर्म्माष्टकविनयनाद् विनयः । किम्भूताश्च ते ?, ‘छंदोवणीय’त्ति—छंदः—स्वाभिप्रायः इच्छामात्रं अनालोचितपूर्वापरं विषयाभिलाषो वा, तेन छंदसा उपनीताः-प्रापिता इत्यर्थः । ते किंविधाः ?, ‘आरंभ’त्ति-आरम्भसक्ताः, ते किं कुर्युः ?, आरम्भे—सावद्यानुष्ठाने सक्ताः तत्पराः, सङ्गं—सज्यंते येन संसारे जीवाः स सङ्गः—अष्टविधं कर्म्म विषयसङ्गो वा तं कुर्वन्ति, सङ्गाच्च पुनरपि संसारः । अथ सङ्गाद् यो निवृत्तस्तदारम्भात् सङ्गो किंविशिष्टो भवतीत्याह—

“ से वसुमं सव्वसमण्णागयपण्णाणेणं अकरणिज्जं पावं कम्मं णो अण्णेसिं, तं परिण्णाय मेहावी णेव सयं छज्जीवनिकाय-सत्थं समारंभेज्जा, णेवऽण्णेहिं छज्जीवनिकायसत्थं समारंभावेज्जा, णेवण्णे छज्जीवनिकायसत्थं समारंभंते समणुजाणेज्जा, जस्सेते छज्जीव-निकायसत्थसमारम्भा परिण्णाया भवंति से हु मुणी परिण्णायकम्मे त्ति वेमि ।” सत्तमोद्देसः ॥

उ० ७
अनाचारे रमन्ता जीवाः षट्काय-जीवविराधकाः, सर्व-जीवहिंसा-वर्जको मुनिः ।

'से वसुमं'ति—स षट्कायहननिवृत्तत्वाद् वसुमान्—भावद्रव्योपेतः। 'सव्वगय'त्ति—प्रज्ञानानि यथावस्थितविषयग्राहीणि ज्ञानानि प्रज्ञानानि, सर्वाणि समन्वागतानि यस्यात्मनः स सर्वसमन्वागतप्रज्ञानः—सर्वावबोधविशेषानुगतः। एवंविधेनात्मना अकरणीयं—अकर्त्तव्यं इहपरलोके विरुद्धत्वादकार्यमिति मत्वा नान्वेषयेत्। किं पुनस्तदकरणीयं नान्वेषयितव्यं?, उच्यते, 'पावं'ति—पापं कर्म्म अधःपतनकारित्वात् पापं प्राणातिपाताद्यष्टादशभेदभिन्नं नान्वेषयेत्—न कुर्यात् स्वयं, न चाऽन्यं कारयेत् न कुर्वाणमन्यमनुमोदयेत्। एतदेवाह—'तं परिण्णाय'त्ति—तत्पापमष्टादशधा परिः—सर्वतो ज्ञात्वा मेधावी—मर्यादावान् नैव स्वयं षड्जीवनिकायशस्त्रं स्वपरकायशस्त्रादिभेदं समारभेत्, नैवान्यैः समारम्भयेत्, न चान्यान् समारम्भमाणान् समनुजानीयात्। एवं यस्यैते सुपरीक्ष्यकारिणः षड्जीवनिकायशस्त्रसमारम्भाः परिज्ञाता ज्ञपरिज्ञया प्रत्याख्यानपरिज्ञया परिहृता भवन्ति, स एव मुनिः, प्रत्याख्यातकर्म्मत्वात्, इति शब्दोऽध्ययनसमाप्त्यर्थः। ब्रवीमीति श्रीसुधर्म्मस्वाम्याह स्वमनीषिकाव्यावृत्तये श्रीवर्द्धमानस्वामिन उपदेशात् सर्वमाख्यातं मयेति। इदं चाध्ययनं साधुना यदा ध्यातं भवति अर्थतश्च शिष्यकेणावधृतं भवति तदाऽस्योपस्थापना—विधिना महाव्रतारोपणं कार्यं चेति। इतिश्रीचन्द्रगच्छाम्भोजदिनमणीनां श्रीमहेश्वरसूरिसर्वसूरिशिरोमणीनां पट्टे श्रीअजितदेवसूरिणा विरचितायां श्रीमदाचाराङ्गस्य दीपिकायां प्रथमाध्ययनं समाप्तमिति ॥

अथोक्तं प्रथमाध्ययनं, साम्प्रतं द्वितीयमारभ्यते। अस्य चायमभिसम्बन्धः। अधिगतशस्त्रपरिज्ञासूत्रार्थस्य तत्प्रतिपादितैकेन्द्रियादिश्रद्धानस्य सम्यक्तद्रक्षापरिणामवतः तद्योग्यतयारोपितमहाव्रतभारस्य साधोर्यथा रागादिकषायलोकस्य

सर्वजीवज्ञानक्रियायुक्तस्य साधोरुपस्थापनाकरणप्रदर्शनम्।

शब्दादिविषयलोकस्य वा विजयो भवति, तथाऽनेनाध्ययनेन प्रतिपाद्यते। अस्योद्देशाधिकारो यथा– तत्र प्रथमोद्देशके– माता-पित्रादिस्वजनाभिसङ्गो न कार्यः, द्वितीयोद्देशके– संयमे अदृढत्वं न कार्यं, तृतीयोद्देशके– जात्याद्युपेतेन मानो न कार्यः, चतुर्थे– भोगेऽभिष्वङ्गो न कार्यः, पञ्चमे– तु त्यक्तस्वजनादिनापि साधुना संयमदेहप्रतिपालनार्थं लोकनिश्रया विहर्त्तव्यं, षष्ठे तु लोकनिश्रया विहरताऽपि लोके ममत्वं न कार्यम्। अथेदं सूत्रम्—

" जे गुणे से मूलट्ठाणे, जे मूलट्ठाणे से गुणे, इति से गुणट्ठी महया परियावेणं पुणो पुणो वसे पमत्ते– माया मे पिया मे भज्जा मे पुत्ता मे धूआ मे ण्हुसा मे सहिसयणसंगंथसंथुआ मे विवित्तुवगरणपरिवट्टणभोयणच्छायणं मे इच्चत्थं गढिए लोए वसे पमत्ते अहो य राओ य परितप्पमाणे कालाकालसमुट्ठाई संजोगट्ठी अट्ठालोभी आलुंपे सहसाकारे विणिविट्ठचित्ते एत्थ सत्थो पुणो पुणो अप्पं च खलु आउअं इहमेगेसिं माणवाणं तंजहा "—

'जे गुणे से मूलट्ठाणे' त्ति– व्याख्या—यो गुणः– शब्दादिविषयरूपः कषायादिको वा स मूलं, यन्मूलं कारणं कषायास्तेषां तिष्ठतीति स्थानं– आश्रयो वर्त्तते। एवं शब्दादिको यो गुणः, स एव मूलस्थानं– संसारस्य आद्यं कारणम्। एवं बीजाङ्कुरन्यायेन परस्परतः कार्यकारणभावं सूत्रेणैव दर्शयति– 'जे मूलट्ठाणे से गुणे' त्ति– यदेवं संसारमूलानां कषायानां स्थानमाश्रयः शब्दादिको, गुणोऽप्यसावेवेत्यर्थः। ततः किमित्याह– 'इति से गुणट्ठी' त्ति इति हेतोर्यस्मात् शब्दादिगुणपरीत आत्मा कषायमूलस्थाने वर्त्तते। सर्वोऽपि च प्राणी गुणार्थी–गुणप्रयोजनी, अतो गुणाऽप्राप्तौ प्राप्तिविनाशे च आकांक्षाशोकाभ्यां स प्राणी महता परितापेन शारीरमानसादिदुःखेनाभिभूतः सन् पौनःपुन्येन तेषु स्थानेषु वसेत् तिष्ठेत्।

उ० १ संसारकारणमूलगुणादीनां व्याख्यानं, तदासक्तानां संसारे परिभ्रमणम्

संसारकारणममत्वपरिवर्जनोपदेशः ।

किम्भूतः सन् ? प्रमत्तः अनादिभवाभ्यासात्, शेषं प्रतीतम् । रागः प्रथममुत्पत्तौ मातापित्रादिविषयो भवतीति दर्शयति–
'माता मे'त्ति–मातृविषयो रागः, यथा मदीया माता तीर्थतुल्या मा दुःखं प्राप्नुयात्, एवं पितापि । यथा वर्द्धमानस्वा-
मिना गर्भस्थेनाऽभिग्रहो गृहीतः, कृष्णबलभद्रावपि द्वारिकादाहे किं कृतवन्तौ ? । तस्यामप्यम्बायामकार्यप्रवृत्तायां द्वेष
उपजायते, तद्यथा–अनन्तवीर्यप्रसक्तायां रेणुकायां रामस्येति, यथा रामेण पितरि रागात् तदुपहन्तरि च द्वेषात् सप्तकृत्वः
क्षत्रिया व्यापादिताः, सुभूमेनापि त्रिसप्तकृत्वो ब्राह्मणा इति । भगिन्यर्थं क्लेशमनुभवति प्राणी, भार्यानिमित्तं चाणाक्येनाव-
ज्ञातभार्यानोदितेन नन्दान्तिकं द्रव्यार्थमुपगतेन कोपान्नन्दकुलं क्षयं निन्ये । कोणिकेनापि पद्मावतीप्रेरणान्महासंग्राम आर-
ब्धः । पुत्रा मे–पुत्रार्थं श्रेष्ठिना दमनकमारणाय चण्डालः प्रार्थितः, अथवा वरदत्तश्रावकेण शुभंकरपुत्राय द्रव्योपार्जनाय
शिक्षा दत्ता, यथा–कृतज्ञस्वामिसंसेवी उत्तमस्त्रीपरिग्रहः । कुर्वन् मित्रमलोभं च नरो नैवावसीदति ॥१॥ सुता मे–तदर्थं जरा-
सन्धेन स्वकुलं क्षयं नीतम् । स्नुषा मे न जीवन्तीत्यारम्भादौ प्रवर्त्तते । सखिस्वजनसंग्रन्थसंस्तुता मे–सखा–मित्रं, स्वजनः
पितृव्यादिः, संग्रन्थः–स्वजनस्यापि स्वजनः पितृव्यपुत्रशालकादिः, संस्तुतो भूयोभूयो दर्शनेन परिचितः, अथवा पूर्वसंस्तुतो
मातापित्रादिरभिहितः, पश्चात्संस्तुतः शालकादिः स इह ग्राह्यः, स च मे दुःखितो भवतीति परितप्यते । 'विवित्त'त्ति–
शोभनं प्रचुरं वा, उपकरणं–हस्त्यश्वरथासनमञ्चकादि, परिवर्तनं–द्विगुणत्रिगुणादिभेदभिन्नं, तदेव भोजनं–मोदकादि, आच्छा-
दनं–पट्टयुग्मादि, तच्च मे भविष्यति नष्टं वा । 'इच्चत्थं'ति–इत्येवमर्थं गृद्धो लोकः मातापित्र्यादिपूर्वोक्तनिमित्तेषु आमरणं प्रमत्तो
ममेदमहमस्य स्वामी पोषको वेति मोहितमना वसेत्–तिष्ठेत् तदर्थमहोरात्रं परितप्यमानः । उक्तं च–पुत्रा मे भ्राता मे स्वजना

मे गृहकलत्रवर्गो मे । इति कृतमेमेशब्दं पशुमिव मृत्युर्जनं हरति ॥१॥ स च परितप्यमानः किंभूतो भवतीत्याह–'कालाकालसमुट्ठाई'त्ति–कालः कर्त्तव्यावसरः, तद्विपरीतोऽकालः, सम्यगुत्थातुं शीलमस्येति समुत्थायीति पदार्थः । यथा कर्त्तव्यावसरे न करोति अन्यदा च करोति, यथा वा काले करोति एवमकालेऽपि, यथा वाऽनवसरे न करोत्येवमवसरेऽपीति, अपगतकालाकालविवेक इति भावना । यथा चण्डप्रद्योतेन मृगावतीग्रहणार्थं कालमतिक्रमणं न ज्ञातम् । यः पुन सम्यक्कालोत्थायी भवति स यथाकालं परस्परानाबाधया सर्वाः क्रियाः करोति । यदुक्तम्– मासैरष्टभिरह्ना च, पूर्वेण वयसाऽऽयुषा । तत् कर्त्तव्यं मनुष्येण, येनान्ते सुखमेधते ॥ १ ॥ धर्मानुष्ठानस्य च न कश्चिदकालो मृत्योरिवेति । किमर्थं पुनः कालाकालसमुत्थायी भवतीत्याह– 'संजोगट्ठी'त्ति– संयोजनं संयोगः, तस्य योऽर्थः संयोगार्थः, सोऽस्यास्तीति संयोगार्थी– धनधान्यादिनवविधपरिग्रहार्थी कालाकालसमुत्थायी भवतीत्याह– 'अट्ठालोभी'– अर्थो–रत्नकुप्यादिः, तत्रासमन्ताद् लोभो अर्थालोभः, स विद्यते यस्येति स तथा, असावपि कालाकालसमुत्थायी भवति, मम्मणवणिग्वत् । पुनरपि लोभिनोऽशुभव्यापारान्नाह– 'आलुंप' आ– समन्तात् लुम्पतीत्यालुम्पः, स हि लोभाभिभूतान्तःकरणोऽपगतकर्त्तव्यविवेकोऽर्थलोभैकदत्तदृष्टिरैहिकामुष्मिकविपाककारिणीर्निर्लाञ्छनगलकर्त्तनचौर्यादिकाः क्रियाः करोति । अन्यच्च– 'सहसाकारि'त्ति– करणं– कारः, असमीक्षितपूर्वापरदोषं सहसाकरणं सहसाकारः, तथाहि– लोभाभिभूतोऽर्थमेव पश्यति, नापायान् शस्त्रादिछेदनादिकानित्यर्थः । आह च– 'विणिविट्ठ'त्ति– विविधमनेकधा विनष्टं चित्तमन्तःकरणं यस्याऽसौ स विनिविष्टचित्तः । एवंविधश्च किं भवतीत्याह– 'एत्थ सत्थि'– अत्राऽस्मिन् मातापित्रादौ शब्दादिविषयसंयोगे वा विनिविष्टचित्तः सन् पृथिवीकायादिजन्तूनां यत् शस्त्र-

उ० १ : ममत्वे पतितानां स्वरूप-प्रकाशनम् ।

मुपघातकारि तत्र पुनः पुनः प्रवर्त्तते । एतच्च साम्प्रतेक्षिणामपि युज्येत यद्यजरामरत्वं दीर्घायुष्यकं वा स्यात्, तच्चोभयमपि नास्तीत्याह– ' अप्पं च खलु आउ 'त्ति– अल्पं– स्तोकं च– पुनः खलु– निश्चितं आयुरिति– भवस्थितिहेतवः कर्म्मपुद्गलाः । इहेति– संसारे मनुष्यभवे वा, एकेषां– मानवानां– मनुजानां सर्वतोऽल्पायुरन्तर्मुहूर्तमात्रं भवति, उत्कृष्टं पल्योपमत्रयं, तथापि संयमजीवितमन्तर्मुहूर्तादारभ्य देशोनपूर्वकोटिं यावत्संयमायुष्यकं, तच्चाल्पमेवेति । अथवा त्रिपल्योपमस्थितिकमप्यायुरल्पमेव, यतस्तदप्यन्तर्मुहूर्तमपहाय सर्वमपवर्त्तते । येऽपि दीर्घायुष्यकस्थितिका उपक्रमकारणाभावे आयुःस्थितिमनुभवन्ति, तेऽपि जराभिभूतविग्रहा मरणादप्यधिकां जघन्यतमामवस्थामनुभवन्तीति तद्यथेत्यादिना दर्शयति—

" सोयपरिण्णाणेहिं परिहायमाणेहिं चक्खुपरिण्णाणेहिं परिहायमाणेहिं घाणपरिण्णाणेहिं परिहायमाणेहिं रसनापरिण्णाणेहिं परिहायमाणेहिं फासपरिण्णाणेहिं परिहायमाणेहिं अभिकंतं च खलु वयं स पेहाए तओ से एगदा मूढभावं जणयंति "

' सोयपरिण्णाणे 'ति–शृणोति भाषापरिणतान् पुद्गलानिति श्रोत्रं, तच्च कदम्बपुष्पाकारं द्रव्यतो, भावतो भाषाद्रव्यग्रहणलब्ध्युपयोगस्वभावमिति, तेन श्रोत्रेण परिः–समन्तात् घटपटशब्दादिविषयाणि ज्ञानानि परिज्ञानानि, तैः श्रोत्रपरिज्ञानजैः जराप्रभावात्परिहीयमानैः सद्भिस्ततोऽसौ प्राणी एकदा–वृद्धावस्थायां रोगोदयावसरे वा विवेकशून्यतामापद्यते । एवं चक्षुरादिविज्ञानेष्वपि योज्यम् । श्रोतादिविज्ञानानि च वयोऽतिक्रमे परिहीयन्ते, तदेवाह—अभिकंतं चेति–तत्र प्राणिनां कालकृता शरीरावस्था यौवनादिर्वयः, तज्जरामभि मृत्युं वा क्रान्तमभिक्रान्तम् । तत्राद्यवयोद्वयातिक्रमे जराभिमुखमतिक्रान्तं च वयो भवति । च समुच्चये, । न केवलं श्रोत्रचक्षुर्घ्राणरसनस्पर्शनविज्ञानैर्व्यस्तसमस्तैर्देशतः सर्वतो वा परिहीयमानैर्मौ-

वृद्धभावे श्रोत्रादिविज्ञानहानिः ।

ढ्यमापद्यते, वयश्चातिक्रान्तं प्रेक्ष्य स–प्राणी खलुरिति विशेषणे विशेषेण मौढ्यमापद्यते इत्याह–'तओ से मूढ'त्ति–ततस्त-
स्मादिन्द्रियविज्ञानापचयाद् वयोऽतिक्रमणाद् वा स प्राणी किं कर्त्तव्यतामूढो भवति। वार्द्धक्ये मूढभावं गतः सन् लोका-
वगीतो भवतीत्याह—

"जेहिं वा सद्धिं संवसति तेवि णं एगदा णियगा पुव्विं परिवयंति, सोवि ते णियए पच्छा परिवएज्जा णालं ते तव ताणाए वा सरणाए वा, तुमंपि तेसिं णालं ताणाए वा सरणाए वा, से ण हासाय ण किड्डाए ण रतीए ण विभूसाए"

'जेहिं वा सद्धिं'ति–स एव वृद्धो यैः पुत्रकलत्रादिभिः सार्द्धं–सह संवसति, त एव भार्यापुत्रादयो, णं वाक्यालङ्कारे, एकदा–वृद्धावस्थायां नियगा–निजका आत्मीया ये तेनातिकठिनारम्भकर्तृत्वेन पोषिताः समर्थावस्थायां ते पुत्राः, तं वृद्धं परिवदन्ति–यथाऽयं न म्रियते, किमनेन वृद्धेन ? वयं विगोपिताः, न केवलमेषां, तस्यात्माऽपि तस्यामवस्थायामवगीतो भवति। आह च–वलिसन्ततमस्थिशेषितं, शिथिलस्नायुधृतं कडेवरम्। स्वयमेव पुमान् जुगुप्सते किमु कान्ता कमनीयविग्रहा ? ॥१॥ कोशाम्ब्यां धनसार्थवाहवत्। बृहद्वृत्तितोऽवसेयं तस्य कथानकं, तत्र सविस्तरमस्ति। सोऽपि जराभिभूतोऽपि पुत्रपौत्रैः स्नुषादिकैः कदर्थितः। एवमन्योऽपि जराभिभूतजर्जरिताङ्गः परिभवमाप्नोति। तदेवं जराभिभूतं 'णियग'त्ति–निजाः परिवदन्ति। असावपि पराभवमापन्नस्तदपवादान् जनायाऽऽचष्टे। सो वा इति–वाशब्दः पूर्वापेक्षया पक्षान्तरं दर्शयति–ते वा तं परिवदन्ति–स च वृद्धः तान् दोषोद्घट्टनतया परिवदेत्–निन्देत्। येऽपि पूर्वकृतधर्मवशात्तं वृद्धं न परिवदन्ति, तेऽपि दुःखापनयनसमर्था न भवन्ति। आह च–'नालं ते तव ताणाए'त्ति–हे वृद्ध ! ते भक्तिनिर्भरनिपुणा निजाः पुत्राः तव त्राणाय

नाऽलं—असमर्थाः, न च ते शरणाय भवन्ति, त्वमपि तेषां मृत्युमुखपतितानां न त्राणाय न शरणायेति भावार्थः। तत्रापत्तरणसमर्थं त्राणं, यथा महाश्रोतोभिरुह्यमानः सुकर्णधाराधिष्ठितं प्लवमासाद्यापत्तरतीति, शरणं पुनर्यदवष्टम्भान्निर्भयैः स्थीयते तदुच्यते, तत्पुनर्दुर्गं पर्वतः पुरुषो वेति। उक्तं च—जन्मजरामरणभयैरभिद्रुते व्याधिवेदनाग्रस्ते। जिनवरवचनादन्यत्र नास्ति शरणं क्वचिल्लोके ॥१॥ स तु तस्यामवस्थायां किम्भूतो भवतीत्याह—'से ण हस्साए' त्ति—स जराजीर्णविग्रहो न हास्याय भवति, न च क्रीडायै, नापि रत्यै, न विभूषायै, एभिर्हास्यादिप्रकारैरसौ योग्यो न भवतीत्यर्थः। गतमप्रशस्तं मूलस्थानं, साम्प्रतं प्रशस्तमुच्यते—

संयमस्थितेन प्रमादो न कार्य इति सूचनम्।

" इच्चेवं समुट्ठिए अहोविहाराए अंतरं च खलु इमं सपेहाए धीरे मुहुत्तमवि णो पमायए वओ अच्चेति जोव्वणं व "

'अहो विहाराए' त्ति—विहरणं विहारः, अहो इत्याश्चर्ये, आश्चर्यभूतो विहारो अहोविहारो—यथोक्तं संयमानुष्ठानं, तस्मै अहोविहारायोत्थितः सन् क्षणमपि नो प्रमादयेत् इत्युत्तरेण सम्बन्धः। किञ्च—'अंतरं' ति—अन्तरमवसरं, तच्चार्यक्षेत्रसुकुलोत्पत्तिबोधिविरत्यादिकं, चः समुच्चये, खलुरवधारणे, 'इमं' ति इदं प्रत्यक्षलक्षणं आर्यक्षेत्रादिकं अवसंप्रेक्ष्य—पर्यालोच्य धीरः सन् मुहूर्तमप्येकं नो प्रमादयेत्—न प्रमादवशं भूयादिति। किमर्थं? नो प्रमादयेदित्याह—'वयो अच्चेइ' त्ति—वयोऽत्येति, वयः कुमारादिकं अत्येति—अतीव एति—याति। अन्यच्च यौवनमत्येति—अतिक्रामति जीवितमप्येति—तदपि त्वरितं याति। तदेवं मत्वा अहोविहारायोत्थानं श्रेयः। संसाराभिलाषिणोऽसंयमजीवितं बहुमन्यन्ते, ते किम्भूता भवन्तीत्याह—

" इह जीविए जे पमत्ता, से हंता छेत्ता भेत्ता लुंपित्ता विलुंपित्ता उद्दवित्ता उत्तासइत्ता अकडं करिस्सामित्ति मण्णमाणे जेहिं वा

सद्धिं संवसइ ते वा णं एगया नियगा तं पुव्विं पोसेंति सो वा ते नियगे पच्छा पोसिज्जा नालं ते तव ताणाए वा सरणाए वा, तुमंपि तेसिं नालं ताणाए वा सरणाए वा "

'इह जीविए 'त्ति-इहास्मिन् संयमजीविते 'जे पमत्ता '- ये प्रमत्ताः सन्तः सर्वोपघातकारिणीः क्रियाः समारम्भन्ते । 'से हंता'-स्थावरजङ्गमानां जन्तूनां घातको भवति, एवं छेत्ता कर्णादीनां, भेत्ता शिरोनयनादीनां, लुम्पयिता ग्रन्थिच्छेदादिभिः, विलुम्पयिता ग्रामघातादिभिः, अपद्रावयिता प्राणव्यपरोपको विषशस्त्रादिभिः, अवद्रापयिता वा, उत्त्रासको लोष्टप्रक्षेपादिभिः । स किमर्थं हननादिकाः क्रियाः करोतीत्याह—जेहिं वा सद्धिंति-यैः स्वजनादिभिः सार्द्धं संवसति, 'तेवि णंति '-णं वाक्यालंकारे, तेऽपि न निजका बान्धवाः सुहृदो वा पूर्वमेव पोषयन्ति तं सर्वोपायक्षीणं । स वा प्राप्तेष्टमनोरथलाभः सन् तान् निजान् पश्चात्पोषयेत्-अर्थदानादिना सन्मानयेदिति । ते च पोषकाः पोष्या वा तव आपद्गतस्य न त्राणाय भवन्तीत्याह-'नालं ते 'त्ति-ते पित्रादयः त्राणाय आपद्रक्षणार्थं शरणाय निर्भयस्थित्यर्थं नालं-न समर्थाः, त्वमपि तेषां त्राणशरणे कर्तुं नालं-न समर्थः । तदेवं स्वजनो न त्राणाय भवतीति प्रतिपादितं, अर्थोऽपि न त्राणाय भवतीत्येतत्प्रतिपिपादयिषुराह—

"उवाइयसेसेण वा संनिहिसंनिचओ किज्जइ, इहमेगेसिं असंजयाणं भोयणाए, तओ से एगया रोगसमुप्पाया समुप्पज्जंति, जेहिं वा सद्धिं संवसइ, ते वा णं एगया नियगा तं पुव्विं परिहरंति, सो वा ते नियगे पच्छा परिहरेज्जा, नालं ते तव ताणाए वा, सरणाए वा, तुमंपि तेसिं नालं ताणाए वा सरणाए वा "

उ० १
प्रमादिनः परस्परं त्राणशरणाभावप्रदर्शनम् ।

‘उवाइयसेसेण’त्ति–उपादितं–उपभुक्तं तस्य शेषमुपभुक्तशेषं, तेन वा, वाशब्दादनुपभुक्तशेषेण वा, सन्निधानं सन्निधिस्तस्य संनिचयः–उपभोगद्रव्यनिचयः। स इहास्मिन् संसारे एकेषां असंयतानां संयताभासानां वा केषाञ्चिद् भोजनायोपभोगार्थं क्रियते–विधीयत इति। असावपि यदर्थमनुष्ठितोऽन्तरायोदयात् तत्सम्पत्तये न प्रभवतीत्याह–‘तओ से’त्ति–ततो द्रव्यसंनिधिसन्निचयात् से–तस्यैकदा-भोगावसरे वेदनीयकर्म्मोदये रोगसमुत्पादा ज्वरादिप्रादुर्भावाः समुत्पद्यन्ते। स च तैर्गलत्कुष्ठादिकैरभिभूतः सन् भग्ननासिकगलत्पाणिपादादिदुःखसमाकुलः किंभूतो भवतीत्याह–‘जेहिं वा सद्धिं’त्ति–यैर्निजैः सार्द्धं संवसति, त एव वा एकदा रोगोत्पत्तिकाले पूर्वमेव तं परिहरन्ति, सेडुकवत्। स च तान् निजान् पश्चात् परिभग्नोत्थापितविवेकः परिहरेत्–त्यजेत्, तन्निरपेक्षसेडुकवत् स्यादित्यर्थः। ते च स्वजनादयो रोगोत्पत्तिकाले परिहरन्तोऽपरिहरन्तो वा न त्राणाय न शरणाय भवन्तीत्याह–नालमित्यादि–पूर्ववत्। रोगाद्यभिभूतान्तःकरणेन चापगतत्राणेन च किमालम्ब्य सम्यक् करणेन रोगवेदनाः सोढव्या इत्याह—

“ जाणित्तु दुक्खं पत्तेयं सायं ”

‘जाणित्तु दुक्खं’ति, व्या०–ज्ञात्वा प्रत्येकं प्राणिनां दुक्खं, तद्विपरीतं सातं वा, अदीनमानसेन ज्वरादिवेदनोत्पत्तिकाले स्वकृतकर्म्मफलं अवश्यमनुभवनीयमिति मत्वा, वैक्लव्यं न कार्यं, यावच्च श्रोत्रादिभिर्विज्ञानैः परिहीयमानैर्जराजीर्णं न निजाः परिवदन्ति, यावच्चानुकम्पया न पोषयन्ति, रोगाभिभूतं च न परिहरन्ति, तावदात्मार्थोऽनुष्ठेय इत्येतद्दर्शयति—

“ अणभिक्कंतं च खलु वयं संपेहाए ”

रोगवेदनासहनोपायप्रदर्शनम्।

'अणभिक्कंतं चे 'त्यादि– चशब्दः आधिक्ये, खलुशब्दः पुनः शब्दार्थे, पूर्वमभिक्रान्तं वयः समीक्ष्य मूढभावं व्रजती-
त्युक्तं, अनभिक्रान्तं च पुनर्वयः संप्रेक्ष्य 'आयट्ठं समणुवासेज्जासि' इत्युत्तरेण सम्बन्धः। आत्मार्थे– आत्महितं समनु-
वासयेत्– कुर्यादित्यर्थः। किमनभिक्रान्तवयसैवात्महितमनुष्ठेयमुतान्येनाऽपि ?, परेणापि लब्धावसरेणात्महितमनुष्ठेयमित्येत-
द्दर्शयति—

"खणं जाणाहि पंडिए जाव सोयपरिण्णाणा अपरिहीणा नेत्तपरिण्णाणा अपरिहीणा घाणपरिण्णाणा अपरिहीणा जीहपरिण्णाणा०
फरिस० इच्चेएहिं विरूवरूवेहिं पण्णाणेहिं अपरिहीणेहिं आयट्ठं सम्मं समणुवासिज्जासित्ति बेमि"॥ लोगविजयस्स पढमोद्देसो समत्तो।

क्षणः– अवसरो धर्मानुष्ठानस्य, स चार्यक्षेत्रसुकुलोत्पत्त्यादिकः, जराबालभावरोगाणामप्यभावे सति तं क्षणं जानीहि-
अवगच्छ हे पण्डित ! हे तत्त्वज्ञ !। क्षणश्चतुर्द्धा– द्रव्यक्षेत्रकालभावलक्षणः, द्रव्यक्षणो मनुष्यादि यावद्विरतिलक्षणः, क्षेत्र-
क्षणः– आर्यक्षेत्रं, कालक्षणो– धर्म्मावसरः, भावक्षणः– औपशमिकादिभावः, शेषं सुगमम्। तथापि लेशः प्रदर्श्यते। अतो-
ऽवसरमवाप्यात्मार्थः कर्त्तव्यः। किंच– 'जावसोत्तपरिण्णाणेहिं' ति– यावदस्य विनश्वरस्य कायगृहस्य श्रोत्रादिविज्ञानानि
जरसा रोगेण वा अपरिहीना भवन्ति, तावदात्मार्थः साधयितव्यः। एवं चैतैर्विरूपैरिष्टानिष्टरूपतया नानाप्रकारैः परिज्ञानैर-
परिक्षीयमाणैः सद्भिः किं कुर्यात् ?, 'आयट्ठं' ति– आत्मार्थं आत्मनो हितं चारित्रं समनुवासयेत्– सम्यगऽनुष्ठानेन भाव-
येदात्मानमिति ब्रवीमि– तदेवाहं वच्मि ॥ लोकविजयाध्ययनस्य प्रथमोद्देशकः ॥

उक्तः प्रथमोद्देशकः, साम्प्रतं द्वितीय आरभ्यते। इहास्मिन्नुद्देशके संयमे वर्त्तमानस्य कदाचिन्मोहोदयादरतिः स्यात्–

संयमेऽरतिं निवार्य दृढताकारिणां फलप्रदर्शनम्

संयमे न दृढत्वं भवेत् इत्यतोऽरतिव्युदासेन संयमे दृढत्वं भवति, तथाऽनेन प्रतिपाद्यते, तस्येदं सूत्रम्—

" अरइं आउट्टे से मेहावी, खणंसि मुक्के "

' अरइं आउट्टे ' इच्चाइ— स इति अरतिमान् मेधावी ' आउट्टे 'त्ति— आवर्त्तेत— निवर्तयेत् । संयमे चारतिर्न विषयाभिष्वङ्गरतिभृते कण्डरीकवदिति, संयमात् तां निवर्त्तयेत् । संयमविहितरतेस्तु न किञ्चिद् बाधायै । नापीहाऽपरसुखोत्तरबुद्धिरिति । आह च— क्षितितलशयनं वा प्रान्तभैक्षाशनं वेतिवचनात् । तणसंथारनिसन्नोवि मुणिवरो भट्ठरागमयमोहो । जं पावइ मुत्तिसुहं तं कत्तो चक्कवट्टीवि ॥ १ ॥ संयमाऽरतिनिवृत्तः सन् कं गुणमवाप्नोति ?, इत्याह—'खणंसि मुक्को'— परमनिरुद्धकालः क्षणः समयमानश्च, तत्र मुक्तो, विभक्तिपरिणामाद्वा क्षणेन— अष्टप्रकारकर्म्मणा मुक्तः, स्नेहादिकैर्विप्रमुक्तो वा भरतादिवत् । ये पुनरनुपदेशवर्त्तिनो ब्रह्मदत्तादयस्ते संसाराब्धौ तिष्ठन्तीत्याह—

" अणाणाय पुट्ठावि एगे नियट्टंति, मंदा मोहेण पाउडा अपरिग्गहा भविस्सामो समुट्ठाय लद्धे कामे अभिगाहइ, अणाणाए मुणिणो पडिलहंति, इत्थ मोहे पुणो पुणो सन्ना नो हव्वाए नो पाराए "

अनाज्ञासंस्पृष्टाः-भगवद्वचनविपरीता अनाज्ञा, तया अनाज्ञया सत्या संस्पृष्टाः परीषहोपसर्गैः, ' एग 'त्ति—एके कण्डरीकादयो, न सर्वे, संयमान्निवर्तन्ते, अपीति संभाव्यते । किम्भूताः सन्तो निवर्त्तन्ते ?, इत्याह—' मंद 'त्ति मन्दाः कर्त्तव्याकर्त्तव्यविकलाः, किम्भूताः मोहेन प्रावृत्ताः, मोहोऽज्ञानं अज्ञानपटाच्छादिता इत्यर्थः । अत्र केचित् यत्याभासाः स्वरूचिविरचितवृत्तयो नानाविधैरुपायैर्लोकादऽर्थं जिघृक्षवः, किल वयं संसारादुद्विग्नाः । तेषु तेषु आरम्भादिषु प्रवर्त्तन्ते,

तद्दर्शयति-' अपरिग्गह ' त्ति-एवम्भूता वयमपरिग्रहा भविष्यामः, शाक्यादिमतानुसारिणः स्वयूथ्या वा, समुत्थाय चीव-राद्विग्रहणं प्रतिपद्य, ततो लब्धान् कामान् अवगाहन्ते-सेवन्ते । अत्र चान्त्यव्रतोपादानात् शेषाणि व्रतान्यपि ग्राह्याणि, अहिंसका वयं भविष्याम, एवममृषावादिन, इत्याद्यप्यायोज्यम् । ततः तल्लाभार्थं च तदुपायेषु प्रवर्त्तन्त इत्याह-' अणाणाए ' त्ति-अनाज्ञया-स्वैरिण्या बुद्धया मुनय इति मुनिवेषविडम्बिनः कामोपायान् प्रत्युपेक्षन्ते, तत्र पौनःपुन्येन लगन्तीत्याह च-' एत्थमोह ' त्ति-अत्राऽस्मिन्नज्ञानादिभावमोहे पुनःपौन्येन ' सण्णा '-विषण्णाः-निमग्नाः पङ्कावमग्ना नागा इवाऽऽत्मानमाक्रष्टुं नालं-न समर्था इत्याह-' णो हव्वाए णो पाराए ' त्ति-यो हि ह्रदान्तर्निमग्नो भवति असौ नार्वाक् तीरं न परतीरमिति, इहापि गृहारम्भं त्यक्त्वा सम्यग् व्रतीभूत्वा पुनरपि वान्तभोगाभिलाषी सन् आरम्भपरिग्रहान्न निवर्त्तते, स उभयतो भ्रष्टो बन्धन-विमुक्तमुक्तावलीव न गृहस्थो न प्रव्रजित इति । ये पुनरप्रशस्तरतिनिवृत्ताः प्रशस्तरतिमधिशयानास्ते किम्भूता भवन्तीत्याह-

" विमुत्ता हु ते जणा जे जणा पारगामिणो, लोभमलोभेण दुगंछमाणे लद्धे कामे नाभिगाहइ "

' विमुत्ता हु ' इच्चाइ—ये भव्यजना विमुक्ता भवन्ति, ते जनाः संसारपारगामिनो भवन्तीत्यर्थः । कथं पुनः सम्पूर्ण-पारगामित्वं भवतीत्याह-लोभमलोभेणत्ति-इह हि लोभः सर्वसञ्ज्ञानां मध्ये दुस्त्यजो भवति, अतस्तं लोभं तद्विपरीताऽलोभेन जुगुप्समानो-निन्दन्-परिहरन् किं करोतीत्याह-' लद्धे कामे ' त्ति-लब्धान्-प्राप्तान् इच्छामदनरूपान् कामान् नाभिगाहते-न सेवते, ब्रह्मदत्तामन्त्रितचित्रवत् । विनापि लोभं निःक्राम्य प्रव्रज्यां प्रतिपद्यत इति दर्शयति—

" विणावि लोभं निक्खम्म एस अकम्मे जाणइ पासइ, पडिलेहाए नावकंखति, एस अणगारित्ति पवुच्चई, अहो य राओ परि-

उ० २
मोक्षार्थिनो लोभादि-दोषान् दूरी कुर्वन्तीति स्वरूपप्र-काशनम् ।

तप्पमाणे कालाकालसमुट्ठाई संजोगट्ठी अट्ठालोभी आलुंपे सहसक्कारे विणिविट्ठचित्ते, एत्थ सत्थे पुणो पुणो, से आयबले, से नाइबले, से मित्तबले, से पिच्चबले, से देवबले, से रायबले, से चोरबले, से अतिहिबले, से किविणबले, से समणबले, इच्चेएहिं विरूवरूवेहिं कज्जेहिं दण्डसमायाणं संपेहाए भया कज्जइ, पावमुक्खुत्ति मण्णमाणे अदुवा आसंसाए "

'विणावि लोहंति– कश्चिद् भरतादिको विना लोभं प्रव्रज्यां प्रतिपद्यते । पाठान्तरे– 'विणइत्तु लोभं संज्वलनसंज्ञकमपि लोभं विनीय– निर्मूलतोऽपनीय, 'एसो अकम्मे 'त्ति– एष एवम्भूतः सन् अकर्म्मा– कर्म्माश्रवरहितो भवति, एतादृशस्तु कर्म्मणां विपाकं जानाति पश्यति च । एवं ज्ञात्वा– विलोक्य किं कर्त्तव्यं ? चेत्याह– 'पडिलेहाए 'त्ति प्रत्युपेक्ष्य लोभं नावकांक्षति– नाभिलषतीति एष अनगार इत्युच्यते प्रकर्षेणोच्यते प्रोच्यते । अथानगारभावविपरीतः कीदृशो भवतीत्याह– 'अहो य राउ 'त्ति– अहोरात्रं परितप्यमानः कालाकालसमुत्थायी संयोगार्थी अर्थलोभी आलुम्प सहसाकारो विनिविष्टचित्तः– अनेकधा कुकर्म्मादिषु स्थापितचित्तः, अत्र– प्राणिविनाशकशस्त्रे पौनःपुन्येन प्रवर्त्तते । किञ्च– स आत्मबलं मे भावीति कृत्वा पुष्ट्यर्थं परप्राणान् वियोजयति, आलुम्पनादिषु क्रियासु प्रवर्त्तते । एवं ज्ञातिबलं मित्रबलं प्रेत्यबलं– परलोके मम पिण्डदानं करिष्यति, देवबलं क्षेत्रपालादि सेवते, एवं राजबलं चौरबलं– तद्धृतधनभागं लास्यामि, अतिथिबलं– एतेऽतिथयो रससिद्धिं दास्यन्ति, एवं कृपणश्रमणार्थमपि वाच्यमिति । 'इच्चेतेहिं 'ति– इत्येवं पूर्वोक्तैर्विरूपरूपैर्नानाप्रकारैः पिण्डदानादिभिः कार्यै, 'दंडसमादाण 'त्ति– दण्डयते व्यापाद्यन्ते प्राणिनो येन स दण्डः, तस्य सम्यगादानं– ग्रहणं 'दंडसमादानं, तदात्मबलादिकं मम नैवाऽभविष्यद् यद्यहमेतन्नाकरिष्यं, इत्येवं संप्रेक्षया– पर्यालोचनया, एवं संप्रेक्ष्य वा, भयात् क्रियते, आमु-

ष्मिकार्थमपि क्रियते, तद्दर्शयति– 'पावमोक्खत्ति'– पातयतीति पापं तस्मान्मोक्ष इतिहेतोः, ममागामिनि भवे यज्ञादिफलमनु-
गामि भविष्यतीत्येवं मन्यमानो दण्डसमादानाय वर्त्तते । तथाहि– योगशास्त्रे– तिले व्रीहीरित्यादिश्लोका विचार्याः, प्राण्यु-
पघातकारिणीषु क्रियासु प्रवर्त्तते, भवशतकोटिदुर्म्मोचं पापमेवोपाददते । ' अदुव आसंसाए 'त्ति– अथवा आशंसा– अ-
प्राप्तवस्तुप्रापणाभिलाषः, तदर्थं दण्डसमादानमादत्ते, तथाहि– ममैतत् परुत्परारि वा परलोके चोपस्थास्यत इत्याशंसया
क्रियासु प्रवर्त्तते, राजानं चाऽवलगति । तदेवं ज्ञात्वा किं कर्त्तव्यमित्याह—

" तं परिण्णाय मेहावी नेव सयं एएहिं कज्जेहिं दंडं समारंभिज्जा, नेव अन्नं एएहिं कज्जेहिं दंडं समारंभाविज्जा, एएहिं कज्जेहिं दंडं समारंभंतंपि अन्नं न समणुजाणिज्जा, एस मग्गे आरिएहिं पवेइए जहेत्थ कुसले नोवलिंपिज्जासित्ति बेमि " ॥ लोगविजयस्स वितिओ उद्देसो सम्मत्तो ॥

' तं परिण्णाय 'त्ति– तदिति शस्त्रपरिज्ञोक्तं स्वकायपरकायभेदभिन्नं शस्त्रं दण्डसमादानं ज्ञपरिज्ञया ज्ञात्वा प्रत्याख्यान-
परिज्ञया परिहरेत् । मेधावी– मर्यादावर्त्ती । ' एतेहिं 'त्ति–एतैरारम्भसमारम्भादिकार्यैः, अथवा हिंसाद्यलीकाद्यैः नैव सत्त्वो-
पघातादि कुर्यादिति, शेषं पूर्ववत् । ' एस मग्गो 'त्ति– एषो मार्ग्गः आर्यैर्वीतरागैः प्रवेदितः–कथितः । एवंभूतं मार्ग्गं ज्ञात्वा किं
कर्त्तव्यमित्याह–' जहेत्थ 'त्ति– यथैतस्मिन् दण्डसमुपादाने कुशलोऽवगततत्त्वः सन् स्वात्मानं नोपलिम्पयेत्– न तत्र संश्लेषं
कुर्यात् । विभक्तिपरिणामाद्वा, एतेन दण्डसमुपादानजनितकर्म्मणा यथा नोपलिप्यसे, तथा सर्वैः प्रकारैः कुर्यास्त्वम् । इति-
शब्दः परिसमाप्तौ ब्रवीमीति पूर्ववत् । लोकविजयस्य द्वितीयोद्देशकः समाप्तः ॥

अथ तृतीय आरभ्यते, अस्मिन्नुद्देशके कषायोत्पत्तिमूलमभिमानो न कार्यः। तच्चाऽनन्तरोक्तम्—'जहेत्थ कुसले'त्ति—कुशलो—निपुणः सन् तस्मिन्नुच्चैर्गोत्राभिधाने यथाऽऽत्मानं नोपलिम्पयेस्तथा त्वं विदध्याः। किं मत्वा ? इत्यतस्तदभिधीयते—तच्चेदं सूत्रम्।

" से असइं उच्चागोए, असइं नीआगोए, नो हीणे, नो अइरित्ते, नोऽपीहए, इय संखाय को गोयावाई को माणावाई ?, कंसि वा एगे गिज्झा, तम्हा नो हरिसे नो कुप्पे, भूएहिं जाण पडिलेह सायं "

'से असइं उच्चागोए'त्ति—व्या०—स इति संसार्यात्मा 'असइं'ति—असकृद्—अनेकशः उच्चैर्गोत्रे पूजार्हे उत्पन्नः, तथैवासकृन्नीचैर्गोत्रे सर्वलोकगर्हिते वारंवारमुत्पन्नः, नीचैर्गोत्रत्वादनन्तं कालं तिर्यक्ष्वास्ते। तयोरुच्चावचगोत्रयोर्बन्धाध्यवसायस्थानानि तुल्यानि, 'णो हीणे'त्ति— यावन्त्युच्चैर्गोत्रे बन्धाध्यवसायस्थानानि, तावन्ति नीचैर्गोत्रेऽपि विज्ञेयानीत्यर्थः। अतः कारणाज्जीवो न हीनो नाऽपि अतिरिक्तः। एवं कर्म्मवशादुत्पद्यते जन्तुः। अतो बलरूपलाभादिमदस्थानानां चाऽसमंजसतामवगम्य किं कर्तव्यमित्याह,—'णो पीहइ'त्ति जात्यादीनां मदस्थानानामन्यतममपि नोऽभिलषेदपि, इत्युच्चावचेषु स्थानेषु निरन्तरमुत्पन्नः प्राणी। ततः किमित्याह 'इय संखाइ'त्ति— इत्येतत्पूर्वोक्तनीत्या उच्चावचस्थानादिकं परिसंख्याय ज्ञात्वा को गोत्रवादी भवेत् ?, यथा ममोच्चैर्गोत्रं सर्वलोकमाननीयं नापरस्येत्येवं वादी को बुद्धिमान् भवेत् ?, तथाहि—मयाऽन्यैश्च सर्वाण्यपि स्थानान्यनेकशः प्राप्तपूर्वाणि। तत उच्चैर्गोत्रनिमित्तं मानवादी को भवेन्न कश्चित्। किञ्च— कंसि वा एगे गिज्झेति— एवमनेकशोऽनेकस्मिन् स्थाने समुत्पन्ने सति तन्मध्ये रागादिविरहादेकः कस्मिन्स्थाने 'गिज्झे'त्ति-गृद्धि

तृतीयोद्देशके मदाभावकरण-कारण सूचनम्।

विदध्यादित्यर्थः ? । एवं विदितकर्म्मपरिणामस्तल्लाभालाभयोर्नोत्कर्षापकर्षौ विधेयौ इत्याह– 'तम्हा पंडिएत्ति'– यतोऽनादौ संसारे पर्यटता जीवेनासकृदुच्चावच्चानि स्थानान्यनुभूतानि, तम्हत्ति– तस्मात्कञ्चिदुच्चादिकं मदस्थानमवाप्य पण्डितो– हेयोपादेयतत्त्वज्ञो न हृष्येत्-न हर्षं विदध्यात्, नापि नीचस्थानाऽवाप्तौ–वैमनस्यं विदध्यात्। आह च–'णो कुज्झे'त्ति– तथाऽधमजात्यादिकं लब्ध्वा लोकापहसनीयत्वान्नो क्रुध्येत्–क्रोधं न कुर्वीत। तदेवमुच्चनीचगोत्रनिर्विकल्पमना अन्यदपि अविकल्पेन किं? कुर्यादित्याह– 'भूतेहिं'ति–भवन्ति भविष्यन्ति अभवन् इति भूतानि– असुभृतः तेषु प्रत्युपेक्ष्य–आलोच्य जानीहि सातं–सुखं तद्विपरीतमसातमपि जानीहि। यतः सर्वेऽपि प्राणिनः साताभिलाषिणः सन्ति, असातं जुगुप्सन्ते। एवं च व्यवस्थिते सति किं विधेयमित्याह–

"समिए एयाणुपस्सी तंजहा– अन्धत्तं वहिरत्तं मूयत्तं काणत्तं कुंटत्तं खुज्जत्तं वडभत्तं सामत्तं सवलत्तं सह पमाएणं अणेगरूवाओ जोणीओ संधायइ विरूवरूवे फासे परिसंवेयइ"

'समिए'त्ति– पञ्चभिः समितिभिः समितः सन् एतत्–शुभाशुभं कर्म्म वक्ष्यमाणं चान्धत्वादिकं द्रष्टुं शीलमस्येति एतदनुदर्शी भूतेषु सातं जानीहि इति संटंकः। तदेवंभूतः सातादिकमनुपश्यति, तदेव दर्शयति–'अंधत्त'मिच्चाइ– संसारान्तर्वर्त्तमानो जन्तुरऽन्धत्वादिका अवस्था बहुशः परिसंवेदयते। स चान्धो द्रव्यतो भावतश्च। तत्रैकेन्द्रियादि च त्रिकं द्रव्यभावान्धमेव, चतुरिन्द्रियादयस्तु मिथ्यादृष्टयो भावान्धाः, सम्यग्दृष्टयस्तु उपहतनयना द्रव्यान्धाः, अनुपहतनयना न द्रव्यान्धा न भावान्धाः। तदेवमन्धत्वं द्रव्यभावभेदभिन्नं एकान्तेन दुःखजनकमवाप्नोति। एवं बधिरत्वमप्यनेकशः प्राप्तं।

उ० ३ उच्चनीचगोत्राणि प्राप्तपूर्वाण्यनेकश इति मदः त्याज्यः।

एवं मूकत्वं काणत्वं अतीतम्। कुण्टत्वं-पाणिवक्रत्वादिकं, कुब्जत्वं प्रसिद्धं, वडभत्वं विनिर्गताङ्गोपाङ्गाधिकत्वं श्यामत्वं शबलत्वं विचित्ररूपाङ्गं भूरिशो बहुदुःखराशीयं परिसंवेदयते। किञ्च–'सह पमाएणंति– सह प्रमादेन स्वकृतकर्म्मानुसङ्गात् अनेकरूपाश्च चतुरशीतिसंख्याका योनयः, तल्लक्षणं सन्दधाति-विधत्ते। तासु विरूपरूपादियोनिषु गतोऽन्धबधिरभूयं प्राप्तः सन्नावबुद्ध्यते-कर्मविपाकं नावगच्छति। तत्रैवोच्चैर्गोत्रादिके विपर्यासमुपैति। आह च–

"से अबुज्झमाणे हओवहए जाईमरणं अणुपरियट्टमाणे जीवियं पुढो पियं इहमेगेसिं माणवाणं खित्तवत्थुममायमाणाणं, आरत्तं विरत्तं मणिकुंडलं सह हिरण्णेण इत्थियाओ परिगिज्झति तत्थेव रत्ता, न इत्थ तवो वा दमो वा नियमो वा दिस्सइ, संपुण्णं बाले जीविउकामे लालप्पमाणे मूढे विप्परियासमुवेइ"

'से अबुज्झमाणे'त्ति–स इत्युच्चैर्गोत्राभिमानी अन्धबधिरादिभावसंवेदको वा कर्म्मविपाकमनवबुद्ध्यमानो हतोपहतो भवति– नानाधिव्याधिदेहवत्त्वाद् हतः, समस्तलोकपरिभूतत्वादुपहतः, मूढो विपर्यासमुपैति, इत्युत्तरेण सम्बन्धः। 'जाईमरण'त्ति– जातिश्च मरणं च तदनुपरिवर्त्तमानः पुनर्जन्म पुनर्मरणमित्येवमरहट्टघटीयंत्रन्यायेन संसारोदरे विवर्त्तमानः दुःखसागरावगाढो हितेऽप्यहिताध्यवसायो विपर्यासमुपैति। 'जीवितं असंयमजीवितं वा,पृथगित्ति–प्रत्येकं-प्रतिप्राणिप्रियं वल्लभं 'इहे'त्ति– अस्मिन्संसारे 'एगेसिं'ति–एकेषामविद्योपहतचेतसां मानवादीनां। ते दीर्घजीवनार्थं बहुसत्त्वोपघातकारिणीः क्रियाः कुर्वते तथा। 'खित्तवत्थु'त्ति–क्षेत्रं–शाल्यादि वास्तु–धवलगृहादिकं ममेत्येवमाचरतां सतां तत्क्षेत्रादिकं वल्लभं भवति। किञ्च–'आरत्तं'ति आरक्तं–ईषद्रक्तं वस्त्रादि विरक्तं-विविधरागं मणिः–इन्द्रनीलादिः कुण्डलं–कर्णाभरणं हिरण्येन सह स्त्रीः

मदकारिणां मनुष्यादिशुभसामग्रीनष्टतादिसूचनम्।

परिगृह्य 'तत्थेव'त्ति— तत्रैव रक्ता—गृद्धा विपर्यासमुपयान्ति । वदन्ति च-'ण एत्थ तवो दमो वा'—नात्र तपोऽनशनादिकं दमो वा इन्द्रियोपशमलक्षणः नियमो वा अहिंसाव्रतलक्षणः फलवान् दृश्यते । सम्पूर्ण-परिपूर्णं भोगं बालो-मूर्खो जीवितुकामः सम्पूर्णायुरभिलपन् लालप्यमानः, भोगार्थं वाग्दण्डं कुर्वन्, मूलतो नृजन्मतो विपर्यासमुपैति । ये पुनः शुभकर्म्मापादिताध्यवसायपुरस्कृतमोक्षास्ते किंभूता भवन्ति इत्याह—

" इणमेव नावकंखंति, जे जणा धुवचारिणो । जाईमरणं परिण्णाय, चरे संकमणे दढे ॥ १ ॥ नत्थि कालस्स नागमो, सव्वे पाणा पियाउया सुहसाया दुक्खपडिकूला अप्पियवहा पियजीविणो जीविउकामा सव्वेसिं जीवियं पियं तं परिगिज्झ दुपयं चउपयं अभिजुंजिया णं संसिंचियाणं तिविहेण जाऽवि से तत्थ मत्ता भवइ, अप्पा वा बहुया वा से तत्थ गड्ढिए चिट्ठइ भोयणाए, तओ से एगया विविहं परिसिट्ठं संभूयं महोवगरणं भवइ, तंपि से एगया दायाया वा विभयन्ति, अदत्तहारो वा से अवहरति, रायाणो वा से विलुंपंति, नस्सइ वा से, विणस्सइ वा से, अगारदाहेण वा से डज्झइ, इय से परस्सऽट्ठाए कूराइं कम्माइं बाले पकुव्वमाणे तेण दुक्खेण संमूढे विप्परियासमुवेइ, मुणिणा हु पवेइयं अणोहंतरा एए, नो य ओहं तरित्तए अतीरंगमा एए, नो य तीरंगमित्तए, अपारंगमा एए, णो य पारं गमित्तए, आयाणिज्जं च आयाय तंमि ठाणे न चिट्ठइ वितहं पप्पऽखेयन्ने तंमि ठाणंमि चिट्ठइ "

'इणमेव'त्ति, व्या०— इदमेव पूर्वोक्तं सम्पूर्णजीवितं क्षेत्राङ्गनादिकं वा नावकांक्षन्ति—नाभिलपन्ति, के ? 'जे जण'त्ति— ये जना ध्रुवचारिणो ध्रुवो-मोक्षस्तमाचरितुं शीलं येषां ते ध्रुवचारिणः । किञ्च—'जाईमरण'त्ति—जातिश्च मरणं च तत्परिज्ञाय चरेत् उद्युक्तो भवेत्, क ? संक्रमणे संक्रम्यतेऽनेनेति संक्रमणं—चारित्रं तत्र दृढो-विश्रोतसिकादिरहितः सन् । नैतद् भावनीयं

यथाऽहं परुत् परारि वृद्धावस्थायां वा धर्म्मं करिष्यामीति । यतः—'नत्थि कालस्स'त्ति— नास्ति कालस्य मृत्योरनागमो अनागमनमनवसरः सोपक्रमायुष्कत्वात् । तदेवं सर्वंकषत्वं मृत्योरवधार्य हिंसादिषु मनो न धार्यम् । किमिति ? यतः 'सव्वे पाण'त्ति— सर्वे प्राणाः प्राणिनो जन्तवः प्रियायुषः-प्रियमायुर्येषां ते तथा, 'सुहसाय'त्ति·सुखमानन्दरूपमास्वादयन्तीति सुखास्वादाः-सुखैषिणः, दुःखप्रतिकूला दुःखद्वेषिण इत्यर्थः । 'अप्पियवह'त्ति अप्रियवधाः-अप्रियं दुःखकारणं वधो येषां ते तथा, 'पियजीविणो'त्ति—प्रियं जीवितं येषां ते तथा, जराजर्जरिताङ्गा अपि जीवितं वाञ्छन्ति, सर्वेषां जीवितमेव प्रियं वल्लभम् । यद्येवं ततः किमित्याह—'तं परिगिज्झं'ति—तदऽसंयमजीवितं परिगृह्याश्रित्य किं कुर्वन्तीत्याह—दुपयंति—द्विपदं दासीकर्मकरादि, चतुष्पदं गवाश्वादि अभियुज्यमानो·योजयित्वा ततः किमित्यत आह—'संसिश्चयाणं' द्विपदचतुष्पदादिव्यापारेण संसिच्य·अर्थनिचयं संवर्ध्य, त्रिविधेन योगत्रिककरणत्रिकेण, 'जावि सित्ति'—याऽपि काचिदऽल्पा परमार्थचिन्तायां बह्वयपि फल्गुदेश्या से—तस्यार्थारम्भिणः सा चार्थमात्रा, तत्र—द्विपदाद्यारम्भे मात्रा—अर्थमात्रा अर्थाल्पता भवति, स तां बिभर्त्ति, किम्भूता सा ?, सूत्रेणैव कथयति—'अप्प'त्ति—अल्पा वा बह्वी वा, 'से तत्थ'त्ति—स इति अर्थवान् तत्र तस्मिन्नर्थे, 'गड्डिए'त्ति-गृद्धस्तिष्ठति अर्थोपार्जनस्य क्लेशं न जानाति रक्षणपरिश्रमं च । स च किमर्थमर्थमर्थयत इत्याह—'भोयणाए'त्ति—भोजनाय भोजनमुपभोगः, तदर्थी च क्रियासु प्रवर्त्तते। क्रियावतश्च किं भवतीत्याह—'तओ से एगया'—ततः 'से' तस्याऽवलगनादिकासु क्रियासु प्रवृत्तिर्भवति, 'एगय'त्ति— एकदा तस्य लाभान्तरायक्षयोपशमेन च विविधं नानाप्रकारं परिशिष्टं—प्रभूतत्वाद् भुक्तोद्धरितं, 'सम्भूतं'—सम्यक् परिपालनाय भूतं·संवृत्तं संभूतं, किं तत् ? 'महोवगरणं'ति—महोपकरणं-अनेकद्रव्य-

निचय इत्यर्थः, स कदाचिद् लाभोदये भवति । असावप्यन्तरायोदयान्न तस्योपभोगाय भवतीत्याह- 'तंपि से'त्ति-तदपि समुद्रोत्तरणादिकाभिः क्रियाभिः स्वोपभोगायोपार्जितं सत् 'से'-तस्यार्थोपार्जनक्लेशकारिण एकदा-भाग्यक्षये 'दायादाः गोत्रिणो विभजन्ते, 'विलुंप'त्ति-अदत्ताहारश्चौरः अपहरति राजानो वा विलुम्पन्ति, नश्यति वा स्वत एव, विनश्यति वा जीर्णभावापत्तेः, अगारदाहेन वा दह्यते, कियन्ति वा कारणानि अर्थनाशे वक्ष्यन्ते ?, इत्युपसंहरति-एवमर्थनाशे बहूनि कारणानीति । 'परस्सट्ठाए'त्ति परस्मै अन्यस्मै अर्थाय-प्रयोजनाय क्रूराणि-गलकर्त्तनादीनि कर्म्माण्यनुष्ठानानि बालोऽज्ञः प्रकुर्वाणो-विदधानः तेन दुःखेन मूढो-विवेकविकलो विपर्यासमुपैत्ति-विनाशं प्राप्नोतीत्यर्थः । अपगतसदसद्विवेकत्वात् कृत्याकृत्यं न जानाति । इति सुधर्म्मस्वामी जम्बूस्वामिनं प्राह-'मुणिणा हु'त्ति-मुनिना-वीतरागेण हु-निश्चितं, एतत्प्रत्यक्षगोचरं प्रवेदितं-कथितम् । वक्ष्यमाणं च प्रवेदितं, किं तदित्याह-'अणोहंतर'त्ति-ओघं-संसाराम्बुधिं तरन्तीत्योघंतराः-संयमिनः, न ओघंतराः अनोघंतराः कुतीर्थिकाः पार्श्वस्थादयो वा भगवदाज्ञाविरोधिनः ज्ञानबोहित्थरहिताः संसाराम्भोध्योघतरणसमर्था न भवन्ति । आह च-'नो य ओहं तरित्तए'-न च नैवौघं तरितुं समर्थाः । तथा 'अतीरंगम'त्ति-अतीरंगमाः-न तीरंगमा अतीरंगमाः, सर्वज्ञोपदिष्टमार्गाभावात् । अपारंगमाः-पारस्तटः परकूलं तद्गच्छन्तीति पारंगमाः, न पारंगमा अपारंगमाः 'एए'त्ति-एते पूर्वोक्ताः पारगतोपदेशाभावात् । अथ तीरपारयोः को विशेषः ?, तीरं-मोहनीयक्षयः, पारं शेषघातिकर्म्मक्षयः । अथ कः कुतीर्थिकादिः ओघतारी न भवतीत्याह-'आयणिज्जं'-आदीयन्ते-गृह्यन्ते सर्वभावा अनेनेत्यादीयं-श्रुतं, तदादाय तदुक्ते संयमस्थाने न तिष्ठति स ओघतारी न भवति । न केवलं सर्वज्ञोपदेशस्थाने न तिष्ठति, परन्तु विपर्ययानुष्ठायी च भवतीति दर्शयति-

'वितहं पप्प'त्ति–वितथं-असद्भुतं दुर्गतिहेतुं तत्तथाभूतमुपदेशं प्राप्य अखेदज्ञोऽकुशलः, तम्मि ठाणंमित्ति–तस्मिन्–असंयमस्थाने तिष्ठति तत्रैवाप्युपपन्नो भवति। यस्त्ववगतहेयोपादेयविशेषः स यथावसरं यथाविधेयं स्वत एव विधत्त इत्याह च—

"उद्देसो पासगस्स नत्थि, बाले पुण निहे कामसमणुन्ने असमियदुक्खे दुक्खी दुक्खाणमेव आवट्टं अणुपरियट्टइत्ति बेमि" ॥

लोगविजयस्स तइओ उद्देशो

'उद्देसो पासगस्स' इत्यादि– उद्देश्यते इत्युद्देशः-सदसत्कर्त्तव्योपदेशः स पश्यतीति पश्यः पश्य एव पश्यकः, तस्य न विद्यते स्वत एव विदितवेद्यत्वात्, अथवा पश्यतीति पश्यकः–सर्वज्ञः तदुपदेशवर्ती वा तस्य उद्देसो–नारकादिव्यपदेशः उच्चावचगोत्रादिव्यपदेशो वा न विद्यते, तस्य द्रागेव मोक्षगमनात्। कः पुनर्यथोपदेशकारी न भवतीत्याह–'बाले'त्ति–बालो रागादिमोहितः, 'पुण णिहे'त्ति– स पुनः कषायादिकैर्निहन्यते इति निहः, अथवा स्निह्यतीति स्निहः स्नेहभावाद् रागी इत्यर्थः, 'कामसमणुन्ने'–कामा इच्छामदनरूपाः तान् स्नेहानुबन्धान्न जानाति सेवते चेति कामसमनोज्ञः। अत एवाह–'असमियदुक्खे' त्यादि—अशमितं–अनुपशमितं विषयादिरागोत्थं दुःखं येन स तथा, ततो दुःखी। एवंभूतश्च किमवाप्नोतीत्याह–'दुक्खाणामेव' इत्यादि–दुःखानां शारीरमानसानां आवर्त्त–पुनः पुनर्भवनमनुवर्त्तते–दुःखावर्त्तावमग्नो बंभ्रम्यते। इति परिसमाप्तौ ब्रवीमीति पूर्ववत्। तृतीयोद्देशकः समाप्तः। अथ चतुर्थ आरभ्यते। यतो भोगिनामपाया दर्श्यन्ते इत्युक्तं प्राक्। ते चामी—

"तओ से एगया रोगसमुप्पाया समुप्पज्जंति, जेहिं वा सद्धिं संवसइ ते एव णं एगया नियया पुव्विं परिवयंति, सो वा

पश्यकस्य-स्वरूपम्।

ते नियगे पच्छा परिवइज्जा, नालं ते तव ताणाए वा सरणाए वा, तुमंपि तेसिं नालं ताणाए वा सरणाए वा, जाणित्तु दुक्खं पत्तेयं सायं, भोगा मे व अणुसोयन्ति इहमेगेसिं माणवाणं ”

‘तओ से’ इत्यादि-ततः कामानुषङ्गात् कर्मोपचयः, ततोऽपि पश्चत्वं, तस्मादपि नरकभवः इत्यादि। रोगाः प्रादुष्यन्ति ‘से’-तस्य कामानुपक्रमनसः, ‘एकदा’-वातपित्तादयो रोगा समुत्पद्यन्ते-प्रकटीभवन्ति। तस्यां रोगावस्थायां किंभूतो भवतीत्याह-‘जेहिं’ इत्यादि-यै सार्द्धं संवसति तेऽपि च एकदा-काले निजाः स्वजनाः पूर्वं परिवदन्ति, स वा तान् निजान् पश्चात्परिवदेत्-त्यजेत्। नालं ते तव त्राणाय शरणाय वा, त्वमपि तेषां नालं त्राणाय शरणाय वा। जाणित्तु इति-पूर्ववद् व्याख्येयं, ज्ञात्वा दुःखं प्रत्येकं सातं च दौर्मनस्यं न कार्यं रोगोत्पत्तौ। न भोगाः शोचनीया इत्याह-भोगाः-शब्दादिविषयाभिलाषास्तान्नेवाऽनुशोचयन्ति कथं भोगान् वयं भुंक्ष्महे ?। ‘इहमेगेसिं’ति-इह संसारे एकेषां ब्रह्मदत्तादीनामेवंभूतोऽध्यवसायो भवति न सर्वेषाम्। अपि च भोगानां प्रधानं कारणमर्थोऽतस्तत्स्वरूपमेव निर्दिदिक्षुराह—

“ तिविहेण जाऽवि से तत्थ मत्ता भवइ अप्पा वा बहुगा वा, से तत्थ गड्ढिए चिट्ठइ भोयणाए, तओ से एगया विपरिसिट्ठं संभूयं महोवगरणं भवइ, तंपि से एगया दायाया विभयंति अदत्तहारो वा से हरति, रायाणो वा से विलुंपंति, नस्सइ वा से विणस्सइ वा से, अगारडाहेण वा से डज्झइ, इय से परस्स अट्ठाए कूराणि कम्माणि बाले पकुव्वमाणे तेण दुक्खेण मूढे विप्परियासमुवेइ ”

‘तिविहेण’ इत्यादि-त्रिविधेन याऽपि ‘से’-तस्य मात्रा भवति अल्पी वा बह्वी वा तस्यामर्थमात्रायां गृद्धस्तिष्ठति, सा च भोजनाय किल भविष्यति। ततस्तस्यैकदा विपरिशिष्टं संभूतं महोपकरणं भवति। तदपि तस्यैकदा दायादा विभजन्ति

अदत्ताहारो वा तस्य हरति राजानो वा विलुम्पन्ति नश्यति वा स्वयं विनश्यति वा, आगारदाहेन वा दह्यते । इति परस्मै अर्थाय क्रूराणि कर्म्माणि बालः प्रकुर्वाणः तेन दुःखेन मूढो विपर्यासमुपैति, एतच्च प्रागेव व्याख्यातम् । तदेवं दुःखविपाकान् भोगान् प्रतिपाद्य यत्कर्त्तव्यं तदुपदिशतीति—

" आसं च छन्दं च विगिंच धीरे ! तुमं चेव तं सल्लमाहट्टु, जेण सिया तेण नो सिया, इणमेव नावबुज्झंति जे जणा मोह—पाउडा, थीभि लोए पव्वहिए, ते भो ! वयंति एयाइं आयरणाइं, से दुक्खाए मोहाए माराए नरगाए नरगतिरिक्खाए, सययं मूढे धम्मं नाभिजाणइ, उयाहु वीरे अप्पमाओ महामोहे, अलं कुसलस्स पमाएणं संतिमरणं संपेहाए भेउरधम्मं संपेहाए नालं पास अलं ते एएहिं एवं पस्स मुणी ! महब्भयं "

' आसं छंदं च 'त्ति—आशा-भोगाकांक्षा छन्दं च-परानुवृत्त्या भोगाभिप्रायः, तौ आशाछन्दौ, 'विगिंच'त्ति—पृथक्कुरु—त्यज धीर ! । भोगाशाछन्दाऽपरित्यागे च दुःखमेव केवलं, न तत्प्राप्तिरित्याह—' तुमं चेव 'त्ति—त्वमेव तद्भोजनादिकं शल्यं 'आहट्टु'त्ति—आहृत्य—स्वीकृत्य परमशुभमादत्से न पुनरुपभोगम् । यतो भोगोपभोगो यैरेवार्थाद्युपायैर्भवति, तैरेव न भवतीत्याह—'जेण सिय'त्ति येनैवार्थोपार्जनादिना भोगोपभोगः स्यात्, तेनैव विचित्रत्वात् कर्म्मपरिणतेर्न स्यात् । एतच्चानुभवावधारितमपि मोहाभिभूता नावगच्छन्तीत्याह—'इणमेव'त्ति—इदमेव हेतुवैचित्र्यं न बुध्यन्ते न संजानते, के ?, 'जे जण'त्ति—ये जना मोहेनाऽज्ञानेन प्रावृता—आच्छादिता इत्यर्थः । अत्र मोहनीयस्य तद्भेदकामानां स्त्रियो गरीयः कारणं दर्शयति—'थीभि-लोए'त्ति—स्त्रीभिरङ्गनाभिः भ्रूक्षेपविभ्रमैरसौ लोकः प्रकर्षेण व्यथितः पीडितः प्रव्यथितः, पराजितो वशीकृतः, 'ते भो वयंति'

त्ति–ते जनाः स्त्रीभिः प्रव्यथिताः भो इत्यामंत्रणे एतद् वदन्ति–यथैतानि रूयादीनि आयतनानि–उपभोगास्पदभूतानि वर्त्तन्ते, एतैश्च विना शरीरस्थितिरेवं न भवति। एतच्च प्रव्यथनं उपदेशदानं वा तेषामपायाय स्यात् इत्याह–'से दुक्खाए'त्ति–तेषां 'से' इत्येतत् स्त्रीव्यथनं आयतनभणनं वा दुःखाय भवति, मोहाय–मोहनीयकर्म्मबन्धाय अज्ञानाय वा, 'मारणाए'–मारणाय ततोऽपि नरकाय–नरकगतये, ततोऽप्युद्धृत्य तिरश्चयेतत्प्रभवति तिर्यग्योन्यर्थं तत् स्त्रीप्रव्यथनं भोगायतनवदनं वा सम्बन्धनीयम्। स एवाङ्गनाकटाक्षितस्तासु तासु योनिषु पर्यटन् आत्महितं न जानातीत्याह–'सययं मूढे'त्ति–सततमनवरतं मूढो दुःखाभिभूतो धर्म्मं क्षान्त्यादिलक्षणं न जानाति, एतत्तीर्थकृदाह–'उदाहु वीरेत्ति'–उदाह-उक्तवान् कोऽसौ ? वीरः, किमुक्तवान् ? तदेवं दर्शयति–' अप्पमादो 'त्ति–अप्रमादः कार्यः, क ?, महामोहे-अङ्गनाभिष्वङ्ग एव महामोहकारणत्वान्महामोहः, तत्र प्रमादवता न भाव्यं, आह च–'अलं कुसल'त्ति—अलं–पर्याप्तं कुशलस्य–निपुणस्य, केनालं ?, पञ्चविधेन मद्यादिप्रमादेन। किमालम्ब्य प्रमादेनालमुच्यते ?, ' संतिमरण 'त्ति—शमनं-शान्तिः सकलकर्म्मापगमो मोक्ष एव शान्तिः, म्रियन्ते प्राणिनो वारंवारं यत्र तन्मरणं, शान्तिश्च मरणं च शान्तिमरणं, तत् सम्प्रेक्ष्यालोच्य प्रमादवतश्चानेकशो मरणं भवति, तत्परित्यागाच्च मोक्ष इत्यालोच्य प्रमादं न कुर्यादिति। किञ्च भेउरत्ति–प्रमादो हि शरीराधिष्ठानः तच्च शरीरं भिदुरधर्मं स्वत एव भिद्यते, एतत्पर्यालोच्य प्रमादं न कुर्यादिति। एते च भोगा भुज्यमाना अपि न तृप्तये भवन्तीत्याह–'नालं पास'त्ति नालं न समर्था एतत्पश्य अवलोकय, 'अलं तव एएहिं'ति–अतोऽलं तव कुशल ! एभिः–भोगैः प्रमादविषयैः ।, तदेवं तत्प्राप्तावप्राप्तौ च दुःखमेवेति। 'एवं पास मुणी'त्ति–एतन्मुने ! पश्यावधारय, ऐहिकामुष्मिकापायप्रतिपादकत्वेन जानीहीत्यर्थः।

यद्येवं ततः किं कुर्यादित्याह—

" नाइवाइज्ज कंचणं एस वीरे पसंसिए, जे न निव्विज्जइ आयाणाए न मे देइ न कुप्पिज्जा थोवं लद्धुं न खिसए पडिसेहिओ परिणमिज्जा एयं मोणं समणुवासिज्जासित्ति बेमि " ॥ चउत्थो उद्देसो

'नाइवाइज्जा' इत्यादि—यतो भोगाभिलषणं महद्भयः, अतस्तदर्थं नातिपातयेन्न व्यथेत् 'कञ्चन'—कमपि जीवं, अशेषव्रतोपलक्षणं चैतत् । भोगनिरीहस्तु कं गुणमवाप्नोतीत्याह—'एस वीरे'त्ति—एषः—भोगाशाछंदविवेचको वीरः प्रशंसितः—स्तुतो देवेन्द्रादिभिः । क एष वीरो अभिष्टूयते ?, इत्यत आह—'जे न निव्विज्जइ'त्ति—यो न निर्विद्यते—न जुगुप्सते, कस्मै ? आदानाय— आदीयते परमानन्दसुखं येन तदादानं— संयमानुष्ठानं तस्मै न जुगुप्सते— क्वचिदऽलाभादौ न खेदमुपयातीत्याह च— 'न मे देति न कुप्पेज्जा'— मेइति— न ममायं गृहस्थः संभृतसंभारोऽपि उपस्थितेऽपि दानावसरे ददातीति कृत्वा न कुप्येत्— न क्रोधवशगो भूयात् । भावनीयं च— ममैषा कर्म्मपरिणतिः अलाभोदयोऽयं इति मत्वा न किञ्चिद् दूयते । अथापि किञ्चित् 'थोवं'ति— स्तोकं प्रान्तादि वा लभते तदपि न निन्देदित्याह— अथवा स्तोकमपि लब्ध्वा न खिसयेन् न निन्देद् दातारम् । किञ्च ' पडिसेहिओ 'त्ति— प्रतिषिद्धो देशतस्तस्मादेव प्रदेशात् परिणमेत्— निवर्त्तेत, क्षणमपि न तिष्ठेत्, तत्र रोषादिकं तैः सार्द्धं न कुर्यात् । पडिलाभिउत्ति— प्रतिलाभितः सन् न परिणमेत्— तस्य दातुः संस्तवं न कुर्यात् । उपसंहरन्नाह— ' एयं मोणं ' इत्यादि— एतत्— मौनं अदानाऽकोपनं स्तोकाऽजुगुप्सनं प्रतिषिद्धनिवर्त्तनं मुनेरिदं मौनं मुनिभिराचरितं समनुवासयेत्— सम्यगनुपालय इति ब्रवीमि । लोकविजयाध्ययनस्य चतुर्थोद्देशकः ॥

भोगान् त्यक्त्वा व्रतानि पालनीयानि ।

अथोक्तश्चतुर्थोद्देशकः, साम्प्रतं पञ्चमस्य व्याख्या प्रतन्यते । तस्य चायमभिसम्बन्धः । इह भोगान् परित्यज्य संयमशरीरापायरक्षणार्थं लोकनिश्रया विहर्त्तव्यमित्युक्तं, तदत्र प्रतिपाद्यते । तत्रापि प्रायः प्रतिदिनमुपयोगित्वादाहारो गरीयान्। स च लोकात्– मनुष्यलोकादऽन्वेष्टव्यः । लोकश्च नानाविधैरुपायैरात्मीयपुत्रकलत्राद्यर्थं आरम्भे प्रवृत्तः । तत्र साधुना संयमदेहनिमित्तं वृत्तिरन्वेषणीयेति दर्शयति– सूत्रम् ।

" जमिणं विरूवरूवेहिं सत्थेहिं लोगस्स कम्मसमारंभा कज्जंति तंजहा– अप्पणो से पुत्ताणं धूयाणं सुण्हाणं नाईणं धाईणं राईणं दासाणं दासीणं कम्मकराणं कम्मकरीणं आएसाए पुढोपहेणाए सामासाए पायरासाए संनिहिसंनिचओ कज्जइ, इहमेगेसिं माणवाणं भोयणाए "

' जमिणं ' इत्यादि– यैरविदितपरमार्थैः प्राण्युपघातकारिभिः विरूपरूपैः शस्त्रैः कृत्वा ' लोगस्स 'त्ति– लोकाय शरीरपुत्रदुहितृस्नुषाद्यर्थं समारम्भाः क्रियन्ते इत्याह– ' तंजह 'त्ति– तद्यथा ' अप्पणो से पुत्ताण 'मित्यादि– आत्मन इति स्वशरीरार्थं, परस्तु पुत्रेभ्यो दुहितृभ्यः, स्नुषा– वध्वस्ताभ्यः, ज्ञातयः पूर्वापरसम्बद्धाः स्वजनाः तेभ्यो, धात्रीभ्यो राजभ्यो दासेभ्यो दासीभ्यो कर्म्मकरेभ्यः कर्म्मकरीभ्यः, ' आएसाइ 'त्ति– आदिश्यते परिजनो यस्मिन्नागते तदातिथेयायेत्यादेशः प्राघूर्णकस्तदर्थं कर्म्मसमारम्भाः क्रियन्ते, तथा ' पुढो पहेणाए '– पृथक् पुत्रादिभ्यः प्रहेणकार्थं, ' सामासाए 'त्ति– श्यामा–रजनी तस्यामशनं श्यामाशः तदर्थं, ' पायरासाए 'त्ति–प्रातरशनं–प्रातराशः तदर्थं विशेषार्थमाह– ' संनिहि 'त्ति– सम्यग्निधीयत इति सन्निधिः विनाशिद्रव्याणां दध्योदनादीनां स्थापनं, संनिचयो– अविनाशिद्रव्याणां द्राक्षादीनां संग्रहः क्रियते,

किमर्थमाह– ' इहमेगेसिं 'ति– इहेति मनुष्यलोके एकेषां मानवानां भोजनायोपभोगार्थम् । सन्निधिसंचयकरणोद्यते सति साधुना किं कर्त्तव्यं ?, इत्याह—

" समुट्ठिए अणगारे आरिए आरियपन्ने आरियदंसी अयं संधित्ति अदक्खु, से नाईए नाइयावए न समणुजाणइ, सव्वामगंधं परिण्णाय निरामगंधो परिव्वए "

' समुट्ठिए ' इत्यादि– सम्यक् संयमानुष्ठानेनोत्थितः समुत्थितो नानाविधकर्म्मसमारम्भोपरतः, एवंभूतोऽनगारो पुत्रदुहितृस्नुषाज्ञातिधात्र्यादिरहित इत्यर्थः। आर्यश्चारित्रार्हः, आर्या प्रज्ञा यस्य स आर्यप्रज्ञः सर्वज्ञोक्तकरणमतिः, आर्यं– न्यायोपपन्नं पश्यतीति आर्यदर्शी । 'अयं संधी'ति– सन्धानं सन्धिः अयं सन्धिर्यस्यासौ अयं सन्धिः यथाकालमनुष्ठायी सर्वज्ञोक्तक्रियासु निपुणः । ' अदक्खु 'त्ति– यो हि आर्यादिपूर्वोक्तगुणोपेतः स एव परमार्थमद्राक्षीत् नापर इति, परमार्थदर्शिना च सावद्यपरिहारः कर्त्तव्य इत्यत आह–' से नाईए 'त्ति– स भिक्षुस्तदकल्प्यं नाददीत–न गृह्णीयात्, नाप्यपरमादापयेत्, नाप्यपरमनेषणीयमाददानं समनुजानीयात् इत्याह– ' सव्वामगंधं ' इत्यादि– आमं च गन्धश्च आमगन्धं, सर्वं च तत् आमगंधं च सर्वामगन्धं– आधाकर्म्मादिदोषदुष्टं, सर्वं आमगन्धमपरिशुद्धं ज्ञात्वा प्रत्याख्याय, ' निरामगंधो '– निर्गतौ आमगंधौ यस्मात् स तथा परिव्रजेत्– संयमानुष्ठानं सम्यगनुपालयेत् । आमग्रहणेन प्रतिषिद्धेऽपि क्रीतकृते तथाप्यल्पसत्वानां विशुद्धकोट्यालम्बनतया मा भूत् तत्र प्रवृत्तिः, अतस्तदेव नामग्राहं प्रतिषिषेधयिषुराह—

" अदिस्समाणे कयविक्कयेसु, से ण किणे न किणावए किणंतं न समणुजाणइ, से भिक्खू कालन्ने बालन्ने मायन्ने खेयन्ने

लोकात् शुद्धमाहारं गृहीत्वा- धर्मकाया रक्षणीया।

खणयन्ने विणयन्ने ससमयपरसमयन्ने भावन्ने परिग्गहं अममायमाणे कालाणुट्ठाई अपडिण्णे ”

‘अदिस्समाणे’ इत्यादि– क्रयश्च विक्रयश्च क्रयविक्रयौ तयोरदृश्यमानः । एवंविधोऽकिंचनो भवति । ‘से ण किणे’– स मोक्षार्थी धर्म्मोपकरणमपि न क्रीणीयात् स्वतः, नापरेण क्रापयेत्, क्रीणन्तमपि न समनुजानीयात् । स भिक्षुः कालज्ञः– कर्त्तव्यावसरज्ञः, बलज्ञः– आत्मसामर्थ्यं जानातीति, मात्रज्ञः– संयमनिर्वाहात्मकां मात्रां जानातीति मात्रज्ञः, खेदज्ञः– खेदः संसारपर्यटनजनितश्रमस्तं जानातीति, क्षणज्ञः– क्षणः अवसरः भिक्षार्थमुपसर्प्पणादिकस्तं जानातीति, तथा विनयज्ञः–विनयो ज्ञानदर्शनचारित्रोपचारिकरूपस्तं जानातीति, एवं स्वसमयज्ञः परसमयज्ञः– स्वसिद्धान्तपरसिद्धान्तवेत्ता इत्यर्थः, भावज्ञः– भावं चित्ताभिप्रायं दातुः श्रोतुर्वा जानातीति, परिग्रहः– संयमातिरिक्तोपकरणादिस्तं अममीकुर्वन्– अस्वीकुर्वन् मनसाप्यनाददानः । स चैवंविधो भिक्षुः कीदृशो भवतीत्याह– ‘ काले अणुट्ठाइ ’त्ति– यद् यस्मिन् काले कर्त्तव्यं तत् तस्मिन्नेवानुष्ठातुं शीलमस्येति स कालानुष्ठायी । किञ्च– ‘ अपडिन्ने ’–नास्य प्रतिज्ञा विद्यते इत्यप्रतिज्ञः, प्रतिज्ञा च कषायोदयाद् अविरतिः, तद्यथा–क्रोधोदयात् स्कन्दकाचार्यवत् प्रतिज्ञाकारी न भवतीत्यऽप्रतिज्ञः, मानोदयात् बाहुबलिना, मायोदयान्मल्लिस्वामिजीवेन प्रतिज्ञा व्यधायि । एवमप्रतिज्ञोऽनिदानो वसुदेववत् संयमानुष्ठानं कुर्वन् निदानं न करोति इत्यत आह—

“ दुहओ छेत्ता नियाइ, वत्थं पडिग्गहं कंवलं पायपुंछणं उग्गहणं च कडासणं एएसु चेव जाणिज्जा ”

‘दुहओ’त्ति–द्विधेति रागेण द्वेषेण वा या प्रतिज्ञा, तां छित्वा निश्चयेन नियतं वा याति नियाति ज्ञानदर्शनचारित्राख्ये मोक्षमार्गे संयमानुष्ठाने वा भिक्षाद्यर्थं वा । रागद्वेषौ छित्त्वा प्रतिज्ञा गुणवती, व्यत्यये व्यत्यय इति स एवम्भूतो भिक्षुः किं

कुर्यादित्याह–'वत्थं पडिग्गहं' इत्यादि एतेषु पुत्राद्यर्थमारम्भप्रवृत्तेषु जानीयात्–शुद्धाशुद्धतया परिच्छन्द्यात्, परिच्छेदश्चैवंरूपः, शुद्धं गृह्णीयात् अशुद्धं परित्यजेत्। किञ्च–जानीयात् वस्त्रं वस्त्रग्रहणेन वस्त्रैषणा सूचिता, तथा पतद्ग्रहं-पात्रं तेन पात्रैषणा सूचिता, कम्बलं और्णिकः, पादपुञ्छनकं-रजोहरणं, एभिः सूत्रैरौधिकोपधिरौपग्रहिकश्च सूचितः। तथैतेभ्य एव वस्त्रैषणा पात्रैषणा च निर्यूढा। तथा 'उग्गहंत्ति'–पञ्चविधाऽवग्रहो देवेन्द्रादिः। अनेन चावग्रहप्रतिमाः सर्वाः सूचिताः, अत एवासौ निर्यूढा। तथा कटाशनं–संस्तारकः। एवं वस्त्राहारादीनि चैतेषु आरम्भप्रवृत्तेषु परिव्रजन् यावल्लाभं गृण्हीयादुत कश्चिन्नियमोऽप्यस्ति ? इत्याह—

" लद्धे आहारे अणगारो मायं जाणिज्जा, से जहेयं भगवया पवेइयं, लाभुत्ति न मज्जिज्जा, अलाभुत्ति न सोइज्जा, बहुंपि लद्धुं न निहे, परिग्गहाओ अप्पाणं अवसक्किज्जा "

'लद्धे आहरे'त्ति लब्धे प्राप्ते सति आहारे वस्त्रौषधादिके चानगारो भिक्षुर्मात्रां जानीयात्-यावन्मात्रेण गृहीतेन गृहस्थः पुनरारम्भे न प्रवर्त्तते, यावन्मात्रेण वात्मनो विवक्षितकार्यनिष्पत्तिर्भवति तथाभूतां, मात्रामवगच्छेदिति भावः। एतच्च स्वमनीषिकया नोच्यत इत्यत आह–'से जहेयं'ति स यथेति भगवता प्रवेदितं कथितं, किं तदाह—'लाभो'त्ति-लाभो वस्त्राहारादेर्मम संवृत्त इत्यतोऽहो ! अहं लब्धिमानित्येवं मदं न विदध्यात्, न च तदभावे शोकाभिभूतमनस्को भूयादित्याह–अलाभे सति शोकं न कुर्यात्, मन्दभाग्योऽहं याच्यमानो न लभे। अतस्तयोर्लाभालाभयोर्माध्यस्थ्यं भावनीयम्। उक्तं च—लभ्यते लभ्यते साधु, साधु एव न लभ्यते। अलब्धे तपसो वृद्धिर्लब्धे तु प्राणधारणम् ॥१॥ तदेवं पिण्डपात्रवस्त्राणामेषणा निवेदिता।

वस्त्रपात्र-रजोहरण-कटाशनादि स्वोपयोगि गृहीत्वा रागद्वेषौ वर्जनीयौ।

॥ ७१ ॥

सांप्रतं सन्निधिप्रतिषेधं कुर्वन्नाह–'बहुंपि लद्धुं' इत्यादि-बह्वपि लब्धं 'न निहे'त्ति न स्थापयेत् न सन्निधिं कुर्यात्। संयमोपकरणातिरिक्तं वस्त्रपात्रादिकं न बिभृयादित्याह–परिग्रहादात्मानमपकर्षेत्-संयमोपकरणे मूर्छां न कुर्यात्, यदिह परिगृहीतं कर्म्मबन्धाय भवति। संयमोपकरणमिति मूर्छया परिग्रहो भवति यत्तु कर्म्मनिर्ज्जरार्थं धर्म्मोपकरणं प्रभवति तत् परिग्रह एव न भवतीति। आह च—

" अन्नहा णं पासए परिहरिज्जा, एस मग्गे आयरिएहिं पवेइए, जहित्थ कुसले नोवलिंपिज्जासित्ति बेमि "

'अन्नहा' इत्यादि अन्यथा– अन्येन प्रकारेण पश्यकः सन् परिग्रहं परिहरेत्। यथा हि गृहस्थाः सुखसाधनाय परिग्रहं पश्यन्ति, न तथा साधुः। तथाहि– अयमस्याशयः– आचार्यसत्कमिदमुपकरणं न ममेत्यभिप्रायवान् साधुर्वर्त्तते। परिग्रहाऽऽग्रहयोगोऽत्र निषेध्यो, न धर्म्मोपकरणं। तेन विना संसारार्णवपारागमनादिति। अत्र च बोटिकैः सह महान् विवादोऽस्तीत्यतो विवक्षितमर्थं तीर्थंकराभिप्रायेणापि सिसाधयिषुराह–' एस मग्गे 'त्ति– धर्म्मोपकरणं न परिग्रह इत्येषः– अनन्तरोक्तो मार्गः, आर्यैः तीर्थंकरैः प्रवेदितः कथितः। इह तु स्वशास्त्रगौरवमुत्पादनार्थमार्यैः प्रवेदित इत्युक्तं, ततश्चार्यप्रवेदितमार्ग्गे प्रयत्नवता भाव्यमित्याह–' जहत्थ ' इत्यादि– यथाऽत्रार्यप्रवेदिते मार्गे पापेन कर्म्मणात्मानं नोपलिम्पयेत्, सतां चायं पन्था, यदुत–यत्स्वयं प्रतिज्ञातं तदन्त्योच्छ्वासं यावद्विधेयमिति। अधिकारसमाप्त्यर्थ इतिशब्दो, ब्रवीमि– सोऽहं वच्मि, येन मया भगवत्सेवां कुर्वताऽश्रावीति। परिग्रहादात्मानमपसर्पयेदित्युक्तं, तच्च कामोच्छित्तिं विना न भवतीत्याह—

" कामा दुरतिक्कमा, जीवियं दुप्पडिवूहगं, कामकामी खलु अयं पुरिसे से सोयइ जूरइ तिप्पइ परितप्पइ "

उ० ५ धर्मोपकरणं परीग्रहो न भवतीति सूचकं सूत्रम्।

'कामा' इत्यादि– कामा इच्छामदनरूपा दुरतिक्रमाः। न च तत्र प्रमादवता भाव्यम्। यतः 'जीविय'त्ति– जीवितमायुष्कं तत् क्षीणं सत् दुःप्रतिवृंहणीयं, दुरभावार्थे, नैवं वृद्धिं नीयते। येन चाभिप्रायेण कामाः तमभिप्रायमाविःकुर्वन्नाह– 'कामकामी' कामान् कामयितुं शीलमस्येति कामकामी। खलुरवधारणे। अयं पुरुषो जन्तुर्नानाविधदुःखविशेषान् प्राप्तः सन् ईप्सितस्यार्थस्याप्राप्तौ तद्वियोगे च शोचति शोकमनुभवति। तथा 'जूरइ'त्ति– हृदयेन खिद्यते। 'तिप्पइ'त्ति– तेपते– क्षरति भ्रश्यति शरीरमानसैर्दुःखैः पीड्यते। परितप्पइ'त्ति– परिः समन्ताद् बहिरन्तश्च तप्यते परितप्यते, पश्चात्तापं वा करोति। कः पुनरेवं न शोचत? इत्याह—

"आययचक्खु लोगविपस्सी, लोगस्स अहो भागं जाणइ, उड्ढं भागं जाणइ, तिरियं भागं जाणइ, गढ्ढिए लोए अणुपरियट्टमाणे, संधिं विइत्ता इह मच्चिएहिं, एस वीरे पसंसिए, जे बद्धे पडिमोयए, जहा अंतो तहा बाहिं, जहा बाहिं तहा अंतो, अंतो अंतो पूइदेहंतराणि पासइ, पुढोवि सवंताइं पंडिए पडिलेहाए"

'आयय' इत्यादि– आयतं– दीर्घमैहिकामुष्मिकापायदर्शि चक्षुः– ज्ञानं यस्य स तथा। कः पुनरित्येवंभूतो भवति? इत्याह– 'लोगविपस्सी'त्ति– लोकं विषयाभिलाषावाप्तदुःखं तथा त्यक्तकामावाप्तप्रशमसुखं विविधं द्रष्टुं शीलमस्येति लोकविदर्शी। स एवंविधो भवति, 'लोगस्स अहो भागं'ति– लोकस्याधोभागं जानाति, अत्र लोकशब्देन चतुर्दशरज्ज्वात्मकः, तस्याधोभागं नरकादिदुःखरूपं स्वरूपतोऽवगच्छति, एवमूर्द्ध्व–सुखानुभवं, तिर्यग्भागमपि जानाति, यदिवा गृद्धमभ्युपपन्नं लोकं पश्यतीत्याह–' गढ्ढिए' इत्यादि– अयं हि लोको गृद्धोऽभ्युपपन्नः कामानुषङ्गे, तत्रैवानुपरिवर्त्तमानोऽपि, तज्जनितकर्म्मणा

संसारे पर्यटन् आयतचक्षुषो गोचरीभवन् कामाभिलाषनिवर्त्तनाय न प्रभवति। अपि च 'संधिंविदित्ता' इत्यादि- इह मर्त्त्येषु-मनुजेषु यो ज्ञानादिको भावसन्धिस्तं विदित्वा यो विषयकषायादीन् परित्यजति स एव वीर इति दर्शयति-'एस वीरे' इत्यादि- एष एव वीरः कर्म्मविदारणात् प्रशंसितः-स्तुतः, कैः ? विदितपरमार्थैः सुविहितैः, । एवंभूतः किमपरं करोति ? इति चेदाह- 'जे बद्धे' इत्यादि- यो बद्धान् द्रव्यभावबन्धनेन, स्वतो विमुक्तोऽपरानपि मोचयति। एतदेव द्रव्य-भावबन्धनविमोक्षं वाचो युक्त्याऽऽचष्टे-'जहा अंतो' इत्यादि- यथाऽन्तर्भावबन्धनमष्टप्रकारकर्म्मनिगडनं मोचयति, एवं पुत्रकलत्रादि बाह्यमपि, यथा बाह्यं-बन्धुबन्धनं मोचयत्येवं मोक्षगमनविघ्नकारणमान्तरमपीति। यदि वा यथा स्वकाय-स्यान्तः-मध्ये अमेध्यकललपिशितासृक्पूत्यादिपूर्णत्वेनासारत्वमित्येवं बहिरप्यसारता द्रष्टव्या अमेध्यपूर्णघटवत्। यथा वा बहिरसारता तथाऽन्तोरपीति। किञ्च-'अन्तो' इत्यादि देहस्य मध्ये पूत्यन्तराणि पूतिविशेषान् देहान्तराणि- देहस्यावस्था-विशेषान् इह मांसं इह रूधिरं इह मेदो मज्जा वा इत्येवमादीनि पूतिदेहान्तराणि पश्यति-यथावस्थितानि जानाति। 'पुढोवि' इत्यादि- पृथक्-प्रत्येकमपि, अपिशब्दात्कुष्ठाद्यवस्थायां यौगपद्येनापि श्रवन्ति- नवभिः श्रोतोभिः कर्णाक्षिमललालाप्र-श्रवणोच्चारादीन्, तथाऽपरव्याधिविशेषापादितव्रणादिपूतिश्रोणितादीनि वा। यद्येवं ततः किं ? 'पंडिए'त्ति- एतानि गलच्छ्रोणितरोमकूपानि पण्डितो- विद्वान्, 'पडिलेहाए'त्ति-प्रत्युपेक्षेत यथावस्थितस्य स्वरूपं जानाति। तदेवं पूतिदेहान्तराणि पश्यन्- पृथक् पृथक् स्रवन्तीत्येवं प्रत्युत्प्रेक्ष्य किं कुर्यादित्याह—

" से मइमं परिन्नाय मा य हु लालं पच्चासी, मा तेसु तिरिच्छमप्पाणमावायए, कासंकासे खलु अयं पुरिसे बहुमाई कडेण

मूढे पूणो तं करेइ लोहं वेरं वड्ढेइ अप्पणो, जमिणं परिकहिज्जइ इमस्स चेव पडिवूहणयाए अमरायइ महासड्ढी अट्टमेयं तु पेहाए अपरिण्णाए कंदइ ”

स मतिमान्–श्रुतवानित्यर्थः, एवं यथावस्थितं देहस्वरूपं कामस्वरूपं च द्विविधयापि परिज्ञया परिज्ञाय किं कुर्यादित्याह–‘ मा य हु ’ इत्यादि– मा त्वं लालाप्रत्याशी भूयाः, चः समुच्चये हुरवधारणे, लाला– मुखश्लेष्मसंततिस्तां प्रत्यशितुं शीलमस्येति लालाप्रत्याशी । यथा हि बालो मुखनिर्गतामपि लालां सदसद्विवेकाभावात् पुनरप्यऽश्नाति, एवं त्वमपि लालावत् त्यक्त्वा भोगाशां मा प्रत्याश्नीहि, वान्तस्य पुनरभिलाषं मा कुरु इत्यर्थः । किन्तु ‘ मा तेसु ’त्ति–मा तेष्वात्मानं तिरश्चीनमापादयेः– ज्ञानादिकार्ये प्रतिकूलतां मा विदध्याः । तत्राप्रमादवता भाव्यं, प्रमादवांश्चेहैव शान्तिर्न लभते । यतः ‘ कासंकासे ’त्ति– भोगाभिलाषी किंकर्त्तव्याकुलो भवति, इदमहमकार्षं इदं च करिष्ये इति स्वास्थ्यं न लभते बहुमायी । कार्षंकषो हि कषायैर्भवति । मायाग्रहणेऽपि चत्वारोऽपि कषाया गृहीताः । ‘ कडेण मूढे ’–करणं कृतं तेन मूढः किंकर्त्तव्यतामूढः आकुलश्च सुखार्थी दुःखमश्नुते । स एव कार्षंकषो बहुमायी कृतेन मूढस्तत्करोति येनात्मनो वैरानुषङ्गो- वैरं वर्द्धत इत्याह–‘ पुणो तं करेइ ’— मायावी परवञ्चनबुद्ध्या पुनरपि तल्लोभानुष्ठानं तथा करोति, येनात्मनो वैरं वर्द्धते इत्याह– ‘ जमिणं ’ति यदिति यस्मादस्यैव विशरारोः शरीरस्य परिबृंहणार्थं प्राणघातादिकाः क्रियाः करोति, ते च तेन हताः प्राणिनः पुनः शतशो घ्नन्ति, अतो मयेदं कथ्यते । कार्षंकषः पुरुषो बहुमायी कृतेन मूढः पुनस्तत्करोति येनात्मनो वैरं वर्द्धयति । अपरं च ‘ अमराय ’ इति– अमरायते– अजरामरत्वं मन्यते । कोऽसौ ? ‘ महासड्ढी ’त्ति– अर्थात्पूर्वोक्तेषु भोगेषु महाश्रद्धी–

बालस्य दुखःप्राप्तिरिति-सूचनम् ।

बृहत्श्रद्धावान् । स किंभूतो भवतीति ? आह–'अट्टमेयं तु पेहाए'त्ति– अर्तिः शारीरमानसी पीडा, तत्र भवः आर्त्तः, तमार्त्तं सम्प्रेक्ष्य– आलोच्य कामार्थयोर्मनो न विधेयम् । पुनरमरायमानभोगश्रद्धावतः स्वरूपमुच्यते–' अपरिण्णाए कंदति '– कामस्वरूपं तद्विपाकं वा अपरिज्ञाय क्रन्दते– भोगेष्वप्राप्तनष्टेषु कांक्षाशोकावनुभवतीति तदेवमनेकधोपदर्श्योपसंहरति—

" से तं जाणह जमहं वेमि, तेइच्छं पंडिए पवयमाणे से हंता छेत्ता भेत्ता लुंपइत्ता विलुंपइत्ता उद्दवइत्ता, अकडं करिस्सामित्ति मन्नमाणे जस्सवि य णं करेइ, अलं बालस्स संगेणं, जे वा से कारइ बाले, न एवं अणगारस्स जायइत्ति वेमि " ॥ लोगविजयस्स पंचमोद्देसो सम्मत्तो ॥

' से तं जाणहे 'त्यादि– सेत्ति तदर्थे तदपि हेत्वर्थे, यस्मात् कामा दुःखैकहेतवः, तस्मात् तज्जानीत यदहं ब्रवीमि– मदुपदेशं कामपरित्यागविषयं कर्णे कुरुत । ननु च कामनिग्रहोऽन्योपदेशादपि सिद्ध्यत्येवेत्याशंक्याह–' तेइच्छ 'मित्यादि– कामचिकित्सां पण्डितः पण्डिताभिमानी प्रवदमानः सन्नपरव्याधिचिकित्सामिवोपदिशन् अपरः– तीर्थिको जीवोपमर्दे वर्त्तत इत्याह– ' से हन्ता ' इत्यादि–स इत्यविदिततत्त्वः प्राणिनां हन्तादण्डादिभिः, छेत्ता कर्णादीनां, भेत्ता शूलादिभिः, लुम्पयिता– ग्रन्थिच्छेदादिना, विलुम्पयिता– धाट्यादिना, अपद्रावयिता– प्राणव्यपरोपणात्, नान्यथा कामचिकित्साऽविचारज्ञानां सम्पद्यते । किञ्च– ' अकडं ' इत्यादि– अकृतं यत्केनाऽपि न कृतं, तत्करिष्यामि, किं ?, कामव्याधिचिकित्सनं करिष्ये इत्येवं मन्यमानो हननादिकाः क्रियाः करोति, ताभिश्च कर्म्मबन्धो भवति । अतो य एवम्भूतमुपदिशति यस्याप्युपदिश्यते उभयोरप्येतयोरपथ्यत्वादकार्यमित्याह च– ' जस्स वियणं 'ति– यस्याप्यसौ हननादिकां चिकित्सां करोति तयो-

द्वयोरपि कर्त्तुः कारयितुश्च हननादिकाः क्रियाः । ततोऽलं- पर्याप्तं बालस्याऽज्ञस्य सङ्गेन कर्म्मबन्धहेतुना कर्तुरिति । यश्चैवं कारयति बालोऽज्ञस्तस्याप्यलं, एतदुपदेशदानमनगारस्य न भवतीत्याह च-' ण एवं अणगारस्स 'त्ति- एवंभूतं प्राण्युपमर्देन चिकित्सोपदेशदानं करणं वा अनगारस्य- साधोर्न जायते- न कल्पते इति ब्रवीमि । लोकविजयाध्ययनस्य पञ्चमोद्देशकः समाप्तः ॥ साम्प्रतं षष्ठः प्रारभ्यते, अस्य चायमभिसम्बन्धः- संयमदेहयात्रार्थं लोकमनुसरता साधुना लोके ममत्वं न कर्त्तव्यमित्युक्तं तत् प्रतिपाद्यते । तच्चेदं सूत्रम्—

" से तं संबुज्झमाणे आयाणीयं समुट्ठाय तम्हा पावकम्मं नेव कुज्जा न कारवेज्जा "

' से तं ' इत्यादि- सोऽनगारस्तत्- प्राण्युपघातकारिचिकित्सोपदेशदानमनुष्ठानं वा संबुध्यमानो- अवगच्छन् आदातव्यमादानीयं, तच्च भावार्थतो भावादानीयं- ज्ञानादित्रयरूपं तदुत्थाय- गृहीत्वा, किं ?, कुर्यादित्याह- ' तम्हा पावकम्मं ' ति- यस्मात्संयम आरम्भनिवृत्तिलक्षणः तस्मादादाय पापहेतुत्वात्कर्म्मक्रियां स्वतो न कुर्यात्, मनसाऽपि न समनुजानीयात्, इत्यवधारणफलं, अपरेणाऽपि न कारयेदित्याह- ' न कारवे 'त्ति अपरेणाऽपि न कारयेत् । अर्थतोऽष्टादशपापस्थानानि न कुर्यात्स्वयं, नाप्यपरेण कारयेत्, कुर्वन्तमन्यं न समनुजानीयात्, योगत्रिकेणेत्यर्थः । स्यादेतत्- किमेकं प्राणातिपातादिकं पापं कुर्वतोऽपरमपि ढौकत आहोस्विन्नेत्याह—

" सिया तत्थ एगयरं विप्परामुसइ छसु अन्नयरंमि कप्पइ, सुहट्ठी लालप्पमाणे सएण दुक्खेण मूढे विप्परियासमुवेइ, सएण विप्पमाएण पुढो वयं पकुव्वइ, जंसिमे पाणा पव्वहिया, पडिलेहणाए नो निकरणयाए, एस परिन्ना पवुच्चइ, कम्मोवसंती "

एककाय-जीवविराधनायां सर्वकाय विराधनाप्रदर्शनम् ।

‘ सिया तत्थेगयरं’ ति– स्यात्कदाचित्पापारम्भे एकतरं पृथ्विकायादिसमारम्भं विपरामृशति– पृथ्विकायादिसमारम्भं करोतीत्यर्थः । एकतरं वाऽऽश्रवद्वारं परामृशति– आरभते स षट्स्वन्यतरस्मिन् कल्प्यते, यस्मिन्नेवालोच्यते तस्मिन्नेव प्रवृत्तो द्रष्टव्यः, सर्वस्मिन् एव प्रवर्त्तते इति भावार्थः । कथं पृथ्व्यादिसमारम्भे वर्त्तमानोऽपरकायसमारम्भे सर्वपापसमारम्भे वा वर्त्तते इत्येवं मन्यते ?, कुम्भकारशालोदकप्लावनदृष्टान्तेनैककायसमारम्भकोऽपरकायसमारम्भको भवति । अथवा प्राणातिपाताम्रवद्वारविघटनादेकजीवातिपातादेककायातिपाताद्वा अपरजीवातिपाती द्रष्टव्यः । किमर्थमेवंविधं पापकं कर्म्म समारभते ? तदुच्यते–‘सुहट्ठी’ इत्यादि– सुखार्थी सन् अत्यर्थं लपति, पुनःपुनर्वा लपति, लालप्यते वाचा, कायेन धावनवल्गनादिकाः क्रियाः करोति, मनसा तत्साधनोपायांश्च चिन्तयति, एवं सुखार्थी सन् षट्कायारम्भेषु प्रवर्त्तते । एवं लालप्यमानः किंभूतो भवतीत्याह—‘ सएणं मूढो ’त्ति–मूर्खो लोकः स्वकीयेन दुःखेन स्वकृतकर्म्मोदयजनितेन विपर्यासमुपैति, स्वकृतपापापायजनितं दुःखमनुभवतीत्यर्थः । पुनरपि मूढस्यानर्थपरम्परां दर्शयितुमाह–‘सएण’ इत्यादि- स्वकीयेन आत्मना कृतेन प्रमादेन–मद्यादिना ‘ विविध ’मिति- मद्यविषयकषायविकथानिद्राणां स्वभेदग्रहणं, तेन पृथग् विभिन्नं व्रतं करोति । यदिवा पृथु–विस्तीर्णं ‘ वय ’मिति- वयन्ति- पर्यटन्ति प्राणिनः स्वकीयेन कर्म्मणा यस्मिन् स वयः–संसारस्तं प्रकरोति, एकैकस्मिन् काये दीर्घकालावस्थानं करोति । तस्मिंश्च संसारे प्राणिनः पीड्यन्त इति दर्शयितुमाह–‘ जंसिमे ’त्ति– यस्मिन् संसारे इमे प्रत्यक्षाः प्राणिनः प्रव्यथिताः प्रपीडिता इति । ततः किमित्याह– ‘ पडिलेह ’ त्ति– एतस्मिन् संसारचक्रे प्रव्यथनं प्रत्युत्प्रेक्ष्य– अवलोक्य साधुर्निश्चयेन नितरां वा नियतं वा क्रियन्ते नानादुःखावस्था जन्तवो येन तन्निकरणं निकारः– शारीर-

मानसदुःखोत्पादनं तस्मै नो कर्म्म कुर्याद्, येन प्राण्युपमर्द्दनं भवति, तन्न विदध्यादित्यर्थः । एवं च सति किं स्यात्तदाह– 'एस' त्ति– एषा परिज्ञा प्रोच्यते । एवंकृते किं स्यात्तदाह–कर्मोपशांतिर्भवति, केषां ? इत्याह–

"जे ममाइयमइं जहाइ से चयइ ममाइयं, से हु दिट्ठपहे मुणी जस्स नत्थि ममाइयं, तं परिन्नाय मेहावी विइत्ता लोगं वंता लोगसन्नं से मइमं परिक्किमिज्जासित्ति बेमि । नारइं सहई वीरे, वीरे न सहई रतिं । जम्हा अविमणे वीरे, तम्हा वीरे न रज्जइ ॥ २ ॥"

'जे ममाइय मि'त्यादि– ये ममायितमतिं जहति–त्यजन्ति, ममायितं– मामकं तत्र मतिर्ममायितमतिस्तां यो जहाति–परित्यजति स्वाङ्गीकृतं मुञ्चतीत्यर्थः । किमित्याह–'से हु दिट्ठपहे'इत्यादि– स दृष्टपन्था मुनिः, दृष्टः ज्ञानादिको मोक्षपन्था येन स दृष्टपन्थाः । अथवा दृष्टभयः– भया इहलौकिकाद्याः सप्तैव । 'जस्स'त्ति–यस्य नास्ति ममायितं तं 'परिण्णाय'त्ति– तन्ममायितं दुःखप्रतिपादकं परिज्ञाय मेधावी मर्यादावर्ती विदित्वा ज्ञात्वा लोकमेकेन्द्रियादिलक्षणं, वंता लोयत्ति– वान्त्वा उद्‌गीर्य लोकसंज्ञां दशप्रकारां स इति मुनिः । किंभूतो ?, मतिमान्–विवेकज्ञः सन् पराक्रमेथाः–संयमानुष्ठानोद्योगं सम्यग् विदध्याः । इतिरधिकारपरिसमाप्तौ ब्रवीमीति पूर्ववत् । एवंभूतो हि किं भवतीत्याह–'णो रतिं सहइ' त्ति व्या० वीरः शक्तिमान् साधुः कदाचिन्मोहनीयोदयादरतिराविःस्यात्, तामुत्पन्नां संयमविषयां न सहते- न क्षमते । तद्विपरीतां रतिमपि न सहते । ताभ्यां रत्यरतिभ्यां विमनीभूतो न शब्दादिषु रज्यते । अतो रत्यरतिपरित्यागान्न विमनस्को भवति । नापि रागमुपयातीति दर्शयति– यस्मात् त्यक्तरत्यरतिस्तस्मात्कारणाद् वीरो न रज्यति–शब्दादिविषयग्रामे गार्द्ध्यं

दृष्टमोक्षपथमुनिवरस्य रत्यरत्यभावदर्शनम् ।

न विदधाति, यत एवं ततः किमित्याह—

" सद्दे फासे अहियासमाणे, निव्विद नंदिं इह जीवियस्स । मुणी मोणं समायाय, धुणे कम्मसरीरगं ॥ ३ ॥ पंतं लूहं सेवंति, वीरा संमत्तदंसिणो । एस ओहंतरे मुणी, तिन्ने मुत्ते विरए वियाहिएत्ति बेमि "

' सद्दे ' इत्यादि– व्या० एवंविधो वीरो रत्यरती निराकृत्य शब्दादिविषयेषु मनोज्ञेषु न रागमुपयाति, दुष्टेषु द्वेषमपि न याति । एवं स्पर्शांश्च मनोज्ञेतरभेदभिन्नान् ' अहियास 'त्ति– अधिसह्यमानः– सम्यक् सहमानः, किं कुर्यादित्याह– ' णिव्विंद नंदी 'त्ति– निर्विन्दस्व– जुगुप्सस्व, ऐश्वर्यविभवात्मिका मनसस्तुष्टिर्नन्दिस्तां, इह मनुष्यजीवितस्य या नन्दिस्तुष्टिस्तां जुगुप्सस्व । एवमतीतं निन्दति प्रत्युत्पन्नं संवृणोति अनागतं प्रत्याख्याति । किमालम्ब्य करोतीत्याह– 'मुणी मोणमि' त्यादि– मुनिस्त्रिकालवेदी मौनं संयममादाय गृहीत्वा धुनीयात् कर्म्मशरीरकं । कथं तच्छरीरकं धूयते ? इत्याह– ' पंत ' इत्यादि– प्रान्तं– स्वाभाविकरसरहितं, अल्पं वा, रूक्षं– आगन्तुकस्नेहादिरहितं द्रव्यतो, भावतोऽपि च प्रान्तं– द्वेषरहितं विगतधूमं, रूक्षं– रागरहितमपगताङ्गारं एतादृशमाहारादिकं सेवन्ते– भुञ्जन्तीत्यर्थः । के ?, वीराः– अष्टकर्म्मविदारणसमर्थाः साधवः । किम्भूताः ?, समत्वदर्शिनः– रागद्वेषरहिता इत्यर्थः । एवंविधो मुनिर्वीरो भवौघं तरतीति । स एव तीर्णः मुक्तः विरक्तः संसारसम्बन्धात्, इत्येवं ' वियाहिए 'त्ति– व्याख्यातः । इत्यधिकारपरिसमाप्तौ ब्रवीमीति पूर्ववत् । यश्च मुक्तत्वविरतत्वाभ्यां न विख्यातः, स किम्भूतो भवतीत्याह—

" दुव्वसुमुणी अणाणाए तुच्छए गिलाइ वत्तए, एस वीरे पसंसिए, अचेइ लोयसंजोगं एस नाए पवुच्चइ "

उ० ६ शब्दादिषु रागद्वेषौ त्यक्त्वा कर्मशरीर-धूननम् ।

' दुव्वसु मुणी 'त्ति– वसुर्द्रव्यं, अत्र द्रव्यं भव्यः– मुक्तिगमनयोग्यः संयमश्च कथ्यते ? दुष्टं वसुर्दुर्वसुः मुक्तिगमनाऽयोग्यः स च कुतो भवति ?, ' अणाणाए 'त्ति–अनाज्ञः–तीर्थकरोपदेशशून्यः स्वैरी इत्यर्थः । श्रीजिनाज्ञापालनं दुष्करमस्ति, निरोधकल्पायामाज्ञायां दुःखं वसति । अवसंश्च किम्भूतो भवतीत्याह– ' तुच्छए गिलाइ 'त्ति– तुच्छो– रिक्तः स च द्रव्यतो निर्धनो घटादिर्वा जलादिरहितो, भावतो ज्ञानादिरहितः । संशये पृष्टे केनापि ग्लायति वक्तुं, ज्ञानान्वितो वा चारित्ररिक्तः पूजासत्कारभयात् शुद्धमार्गप्ररूपणावसरे ग्लायति– ग्लानिं प्राप्नोति । यथोक्तकारी वक्तुं समर्थो भवति । ' एस वीरे 'त्ति– एस वीरः प्रशंसितः । एवं शुद्धमार्गप्रवेदनाद् वीरः । अचेइत्ति– अत्येति– अतिक्रामति कं ? लोकसंयोगं, लोकेनासंयतलोकेन संयोगः– सम्बन्धः, अथवा लोको– बाह्याभ्यन्तरादिकमष्टप्रकारं कर्म्म तेन सार्द्धं संयोगमत्येति– लंघयति, ' एस णाए 'त्ति– एष न्यायः सम्यक् साध्वाचारः प्रोच्यते सदुपदेशात् । स्यादेतत्– किंभूतोऽसाधुपदेश इत्यत आह—

" जं दुक्खं पवेइयं इह माणवाणं तस्स दुक्खस्स कुसला परिन्नमुदाहरंति, इति कम्मं परिन्नाय सव्वसो जे अणन्नदंसी से अणण्णारामे, जे अणण्णारामे से अणन्नदंसी, जहा पुण्णस्स कत्थइ तहा तुच्छस्स कत्थइ, जहा तुच्छस्स कत्थइ तहा पुण्णस्स कत्थइ"

' जं दुक्खं ' यदशुद्धोपदेशनं दुःखमिति संसारभ्रमणं प्रवेदितं इह मानवानां तीर्थकृद्भिरावेदितमित्यर्थः । ' तस्स दुक्खस्स कुसला परिण्णमुदाहरंति 'त्ति– तस्य दुःखस्याऽसातलक्षणस्य कुशलाः– विशेषज्ञाः धर्म्मकथालब्धिसम्पन्नाः स्वसमयपरसमयविदः उद्युक्तविहारिणो यथावादिनस्तथाकारिणस्ते एवंभूताः परिज्ञा– उपादानकारणपरिज्ञानं निरोधकारणपरिच्छेदं च उदाहरन्ति, द्विविधयापि परिज्ञया परिहरन्ति स्वयं, तथा चान्यान् परिहारयन्तीति भावार्थः । 'इति कम्मं परिन्नाय'त्ति–

उपदेश विपये तुल्यता प्रदर्शनम् ।

इतिः पूर्वोक्तपरामर्शकः, दुःखं कर्मकृतं तत्कर्म अष्टप्रकारं परिज्ञाय– ज्ञात्वा सर्वशः– सर्वैः प्रकारैर्योगत्रिककरणत्रिकरूपैर्न वर्त्तेत। अथवा सर्वशः परिज्ञाय कथयति, सर्वशः परिज्ञानं च केवलिनो गणधरस्य चतुर्दशपूर्वविदो वा। यदिवा सर्वशः कथयति आक्षेपण्याद्या चतुर्विधया धर्म्मकथयेति। सा च कीदृकथेत्याह– ' जे अणण्णदंसी 'त्ति अन्यद् द्रष्टुं शीलमस्येत्यन्यदर्शी न अन्यदर्शी अनन्यदर्शी यथावस्थितपदार्थद्रष्टा, स एवऽनन्यारामो मोक्षमार्गादन्यत्र न रमते। यश्च भगवदुपदेशादन्यत्र न रमते सोऽनन्यदर्शी। तदेवं सम्यक्त्वस्वरूपमाख्यातम्। कथयंश्चारक्तद्विष्टः कथयतीति दर्शयति– ' जहा पुण्णस्स ' इत्यादि– यथा पुण्यवतः शक्रचक्रिमण्डलिकादेः कथ्यते– उपदेशो दीयते, तथा तेनैव विधिना तुच्छस्य– द्रमकस्यापि काष्ठहारादेः कथ्यते। अथवा 'पुण्णस्स'त्ति– पूर्णो– जातिकुलरूपाद्युपेतः, तद्विपरीतस्तुच्छो, विज्ञानवान् पूर्णः ततोऽन्यस्तुच्छः। यतः– ज्ञानैश्वर्यधनोपेतो जात्यन्वयबलान्वितः। तेजस्वी मतिमान् ख्यातः, पूर्णस्तुच्छो विपर्ययवान् ॥ १ ॥ संसारोत्तारणहेतुं यथा चक्र्यादेस्तथा द्रमकस्यापि कथयति। अत्र निरीहता निवेदिता, न पुनरयं नियमः। यो यथा बुद्ध्यति तथैव तस्य कथ्यते। बुद्धिमतो निपुणं, स्थूलबुद्धेस्त्वन्यथेति। एवमपि कदाचिदऽसौ प्रद्वेषमुपगच्छेत्। द्विष्टश्चैतद्विदध्यादिति आह च—

" अवि य हणे अणाइयमाणे, इत्थंपि जाण सेयंति नत्थि, केयं पुरिसे ? कं च नए ? एस वीरे पसंसिए, जे बद्धे परिमोयए, उड्ढं अहं तिरियं दिसासु, से सव्वओ सव्वपरिन्नाचारी न लिप्पई, छणपएण वीरे, से मेहावी अणुग्घायणखेयन्ने, जे य बन्धपमुक्खमन्नेसी कुसले पुण नो बद्धे नो मुक्के "

'अवि य हणे' इत्यादि– अपि च हन्यात् तद्धर्मनिन्दनात्, अनाद्रियमानो हन्यात् तं न वक्तव्यम्। 'एत्थं पि'त्ति–

इत्थं हितोपदेशं कथयतः श्रेयः कल्याणं, अहितं कथयतो नास्ति श्रेयः पुण्यमिति भावार्थः। एवं निरीहतया धर्मोपदेशदायकेन अग्रेतनस्य श्रोतुर्भावो विचार्यः। 'कोयं पुरिसे'त्ति- कोऽयं पुरुषो मिथ्यादृष्टिः, उत भद्रकः? 'केनाऽभिप्रायेणायं पृच्छति स्म, ? कं च देवताविशेषं मन्यते ?, किमनेन दर्शनमाश्रितं ? इत्येवमालोच्य प्रत्युत्तरं दातव्यम्। एतदुक्तं भवति- धर्मकथाविधिज्ञो हि आत्मना परिपूर्णः श्रोतारमालोचयति। द्रव्यतः क्षेत्रतः कालतः भावतश्चालोच्य यथा यथाऽसौ बुद्ध्यते तथा तथा धर्मदेशना कार्या। एवं धर्मकथाविधिज्ञ उपदेशदानयोग्यो भवति, अपरस्य त्वधिकार एव नास्ति। उक्तं च- जो हेउवायपक्खंमि हेउओ आगमम्मि आगमिओ। सो ससमयपन्नवओ सिद्धन्तविराहओ अण्णो ॥ १ ॥ य एव धर्मकथाविधिज्ञः स एव प्रशस्तः,। आह च- 'एस वीरे पसंसिए'त्ति-एष धर्मकथाविधिज्ञः वीरः कर्माष्टदलनः प्रशंसितः-श्लाधितः। स किंभूतो ? भवतीत्याह- "जे बद्धे पडिमोयए'त्ति यो अष्टविधकर्म्मणा स्नेहादिनिगडेन बद्धानां जन्तूनां प्रतिमोचको धर्म्मोपदेशदानादिना। क पुनर्व्यवस्थितान् जन्तून् मोचयतीत्याह- 'उड्ढ'मित्यादि- उर्ध्वं ज्योतिष्कादीन्, अधो भवनपत्यादीन्, तिर्यग्दिक्षु मनुष्यादीन् मोचयति। 'से सवओ' इत्यादि-स इति वीरः बद्धप्रतिमोचकः सर्वतः सर्वकालं सर्वपरिज्ञया द्विविधयाऽपि चरितुं शीलमस्येति स च सर्वपरिज्ञाचारी विशिष्टज्ञानान्वितः सर्वसंवरचारित्रोपेतो वा चित्रजीववदित्यर्थः। स एवंभूतः कं गुणमवाप्नोतीत्याह- 'न लिप्यते'- नावगुण्ड्यते, केन ?, 'छणप्पदेण-क्षणपदेन- हिंसापदेन प्राण्युपमर्दजनितेन, कोऽसौ ? वीरः। किमेतावदेव वीरलक्षणमुताऽन्यदप्यस्तीत्याह-' से मेहावी '-स मेधावी-बुद्धिमान् अनोद्घातनस्य खेदज्ञः, अणति अनेन चातुर्गतिकसंसारमिति अणं-कर्म्म, तस्योत्प्राबल्येन घातनमपनयनं, तस्य तत्र वा खेदज्ञो निपुणः। 'जे य बंधप्पमोक्ख'

धर्मकथाविधिज्ञस्वरूपम्।

त्ति-यश्च प्रकृतिस्थित्यनुभागप्रदेशरूपस्य चतुर्विधस्यापि बन्धस्य यः प्रमोक्षस्तदुपायो वा तमन्वेष्टुं विलोकयितुं शीलमस्येति बन्धप्रमोक्षमन्वेपी, स वीरः। स किं छद्मस्थः? आहोश्वित्केवली?, केवलिणो यथोक्तविशेषणासंभवात् छद्मस्थस्य ग्रहणम्। केवलिनस्तर्हि का वार्त्ता? इत्युच्यते-' कुसले 'त्यादि- कुशलोऽत्र क्षीणघातिकर्म्मांशो विवक्षितः, स च तीर्थकृत्सामान्यकेवली वा। अथवा कुशलोऽवाप्तज्ञानदर्शनचारित्रो वा, एवम्भूतश्च कुशलः केवली छद्मस्थो वा यदाचीर्णवान्-आचरितवान् तदपरेणापि मुमुक्षुणा विधेयमिति दर्शयति—

" से जं च आरभे जं च नारभे, अणारद्धं च न आरभे, छणं छणं परिण्णाय लोगसन्नं च सव्वसो "

" से जं च आरभे 'त्ति- स कुशलो यदारभते आरब्धवान् वा अशेषकर्म्मक्षपणोपायं संयमानुष्ठानं, यच्च नारभते मिथ्यात्वाविरत्यादिकं संसारकारणं, तदारब्धमारम्भणीयं, अनारब्धमनारम्भणीयं चेति। प्राणातिपाताद्यष्टादशरूपस्य चैकान्तेन निराकरणीयत्वात् तन्निषेधमाह-' अणारद्धं च णारभे 'त्ति- अनारब्धं-अनाचीर्णं तत्साधुर्नारभेत नो कुर्यात्, यदाचीर्णं मोक्षाङ्गं तत्कुर्यात्। यद् भगवता नाचीर्णं तत्परिहार्यं, तन्नामग्राहमाह-' छणं छण 'मित्यादि- क्षणु हिंसायां क्षणनं-क्षणो हिंसनम्। येन येन प्रकारेण हिंसोत्पद्यते तज्ज्ञात्वा परिहरेत्। किञ्च-' लोयसण्णं 'ति- लोकसंज्ञां च लोकस्य गृहस्थलोकस्य संज्ञानं संज्ञा विषयाभिलापजनिता सुखेच्छा परिग्रहसंज्ञा वा, तां च ज्ञपरिज्ञया ज्ञात्वा प्रत्याख्यानपरिज्ञया परिहरेत्। कथं? ' सव्वसो 'त्ति- सर्वशः सर्वैरेव प्रकारैः योगत्रिककरणत्रिकेणेत्यर्थः। एवंविधस्य यद् भवति तद्दर्शयति-

" उद्देसो पासगस्स नत्थि, वाले पुण निहे कामसमणुन्ने असमियदुक्खे दुक्खी दुक्खाणमेव आवट्टं अणुपरियट्टइ त्तिवेमि " ॥

उ० ६ कुशलाचीर्णमाचरणीयं नान्यदिति सूचनम्।

इति लोकविजयाध्ययनं समाप्तम् ॥

'उद्देसो' इत्यादि– उद्दिश्यते नारकादिव्यपदेशेन इत्युद्देशः, स पश्यकस्य परमार्थदृशो नास्ति– न विद्यते इत्यादीनि च सूत्राणि उद्देशकपरिसमाप्तिं यावत् तृतीयोद्देशके व्याख्यातानि आक्षेपपरिहारौ चेति । तानि चामूनि– बालः पुनर्नेहः कामसमनुज्ञोऽशमितदुःखो दुःखानामेवावर्त्तं अनुपरिवर्त्तते। इति समाप्तौ ब्रवीमि पूर्ववत् । उक्तः षष्ठोद्देशकः, तत्समाप्तौ च समाप्तं लोकविजयाध्ययनम् । इति चंद्रगच्छाम्भोजदिनमणीनां श्रीमहेश्वरसूरिसर्वसूरिशिरोमणीनां पट्टे श्रीअजितदेवसूरिविरचितायां श्रीमदाचाराङ्गस्य दीपिकायां लोकविजयाख्याध्ययनं समाप्तम् ॥ उक्तं द्वितीयाध्ययनं, साम्प्रतं तृतीयमारभ्यते, अत्र विजितकषायलोकस्य साधोः कदाचित्कर्म्मोदयादनुलोमादिकाः परीषहाः समुत्पद्यन्ते ते सोढव्या इत्यनेन सम्बधेनायातमिदमध्ययनं, तस्यादिमं सूत्रम्—

" सुत्ता अमुणी, सया मुणिणो जागरंति "

' सुत्ता अमुणी '- व्या०— अत्र सुप्ता द्विधा द्रव्यभावाभ्यां । निद्राप्रमादापन्ना द्रव्यसुप्ताः, भावसुप्तास्तु मिथ्यात्वाज्ञानमयमहानिद्राव्यामोहिताः । ततो ये मुनयो मिथ्यादृशः सततं भावसुप्ताः, सद्विज्ञानानुष्ठानरहितत्वात् । ततो ये मुनयो भगवदाज्ञानुष्ठायिनस्ते सततमनवरतं जाग्रति हिताहितप्राप्तिपरिहारं कुर्वते । ये सुप्तास्तेऽज्ञानोदयाद् भवन्ति । अज्ञानं च महादुःखम् । दुःखं च जन्तूनामहितायेति दर्शयति—

" लोयंसि जाण अहियाय दुक्खं, समयं लोगस्स जाणित्ता, इत्थ सत्थोवरए, जस्सिमे सद्दा य रूवा य रसा य गंधा य फासा

य अभिसमन्नागया भवंति ”

‘ लोयंसि जाण ’त्ति– लोके–षट्कायरूपे ‘ जाण ’त्ति– जानीहि दुःखहेतुत्वाद् दुःखं अज्ञानं मोहनीयं वा, तदऽहिताय– नरकादिगमनाय, ज्ञात्वैतद् दुःखहेतोरपसर्पणं कार्यं चेत्याह–‘ समयं लोग ’त्ति– समयमाचारो लोकस्य प्राणिगणस्य ज्ञात्वा, ‘ एत्थ सत्थोवरए ’ति– अत्र शस्त्रोपरतो भवेत्, अत्रास्मिन् षट्कायलोके द्रव्यभावभेदाच्छस्त्रादुपरतो भवस्व । यः प्राणिवधादुपरतः स एव मुनिरित्याह–‘ जस्सिमे ’त्ति यस्य मुनेरिमे विषयभूताः शब्दरूपरसगन्धस्पर्शाः मनोज्ञेतरभेदभिन्नाः समन्वागता ज्ञाता भवन्ति, स लोकं जानाति, इष्टेषु न रागमुपयाति, नापीतरेषु द्वेषम् । एवं ज्ञात्वा यो विषयान् त्यजेत् असौ गुणमवाप्नुयादित्याह—

“ से आयवं नाणवं वेयवं धम्मवं बंभवं पन्नाणेहिं परियाणइ लोयं, मुणीति वुच्चे, धम्मविऊ उज्जु, आवट्टसोए संगमभिजाणइ ”

‘ से आयवं ’ इत्यादि– स एव मुनिरात्मवान्–शब्दादिविषयत्यागे, आत्माऽनेन रक्षितो भवति दुर्गतिगमनादिति । वाचनान्तरे ‘ आयविउ ’त्ति–आत्मानं श्वभ्रादिपतनरक्षणद्वारेण वेत्तीति आत्मवित् । तथा ज्ञानं यथावस्थितपदार्थज्ञापकं वेत्तीति ज्ञानवित् । तथा वेद्यते जीवादिस्वरूपमनेनेति वेदः– आचाराद्यागमस्तं वेत्तीति वेदवित् । तथा दुर्गतिप्रसृतजन्तुधरणस्वभावं स्वर्गापवर्गमार्गं धर्मं वेत्तीति धर्मवित् । एवं ब्रह्माऽशेषमलकलङ्कवैकल्ययोगिशर्म वेत्तीति ब्रह्मवित् । एवं ‘पन्नाणेहिं’ इत्यादि– एवं प्रज्ञानैर्निःशेषज्ञानैः कृत्वा लोकं यथावस्थितं जन्तुलोकं तदाधारक्षेत्रं वा जानाति स एव संसारस्व-

उद्देशः १
जाग्रन्मुनिः शब्दादिविषयरागद्वेषौ त्यक्त्वा आत्मविदादिगुणवान् भवति ।

रूपपरिच्छेदीति । स एव मुनिः 'वच्चे 'त्ति- वाच्यः । स एव धर्म्मवित्, श्रुतचारित्ररूपं वा वेत्तीति धर्मवित् । स एव ऋजुरकुटिलः । तदेवं धर्म्मविदृजुर्मुनिः किम्भूतो भवतीत्याह–' आवट्टसोए 'त्ति–आवर्त्तश्च श्रोतश्चावर्त्तश्रोतसी तयोः रागद्वेषाभ्यां सम्बन्धः- सङ्गस्तमभिजानाति, ज्ञात्वाऽऽभिमुख्येन छिनत्ति । एवंविधश्च कं गुणमवाप्नुयादित्याह—

" सीउसिणच्चाई से निग्गंथे अरइरइसहे, फरुसयं नो वेएइ, जागरवेरोवरए, वीरे एवं दुक्खा पमुक्खसि, जरामच्चुवसोवणीए नरे सययं मूढे धम्मं नाभिजाणइ "

' सीतोसिणच्चाइ 'त्ति– निर्ग्रन्थः सन् शीतोष्णत्यागी सुखदुःखानभिलाषुकः । स एव निर्ग्रन्थः– बाह्याभ्यन्तरग्रन्थिविकलः, एवंविधः संयमारतिरती सहतीति सहः सन्, ' फरुसिमं 'त्ति– परुषतां कर्कशतां पीडाकारितां परीषहाणामुपसर्गाणां वा कर्म्मक्षपणायोद्यतः साहाय्यं मन्यमानो वेत्ति, न तां पीडाकारित्वेन गृह्णातीत्यर्थः । किञ्च–' जागरवेरोवरए '– जागर्त्तीति जागरः, अपकाराध्यवसायो वैरं, तस्मादुपरतो वैरोपरतः, जागरश्चासौ वैरोपरतश्च जागरवैरोपरतः । एवं वीर ! त्वमात्मानं दुःखात् प्रमोक्षसीत्यर्थः । अजागरः सन् किमाप्नुयादित्याह–' जरामच्चुवसोवणीए 'त्ति– जरामृत्युवशोपनीतो नरः प्राणी सततमनवरतं मूढो महामोहितमतिः धर्म्मं स्वर्गापवर्गलक्षणं नाभिजानीते–नावगच्छति । तत् संसारे स्थानमेव नास्ति यत्र जरामरणे न स्तः, देवानां जराभावोऽस्ति, परमाबाधाकाले सर्वं सम्पद्यते माल्यम्लानिरित्यादिः । अतः सर्वं जरामृत्युवशोपनीतं मत्वा किं कुर्यादित्याह—

" पासिय आउरपाणे अप्पमत्तो परिव्वए, मंता एयं मइमं पास, आरंभजं दुक्खमिणंति णच्चा, माई पमाई पुण एइ गब्भं,

स मुनिः परीषहादीनां सहायकारित्वं मन्यते नेतर इति ।

उवेहमाणो सद्दरूवेसु उज्जु माराभिसंकी मरणा पमुच्चई, अपमत्तो कामेहिं, उवरओ पावकम्मेहिं, वीरे आयगुत्ते खेयन्ने जे पज्जवज्जायसत्थस्स खेयण्णे से असत्थस्स खेयन्ने, जे असत्थस्स खेयन्ने से पज्जवज्जायसत्थस्स खेयन्ने, अकम्मस्स ववहारो न विज्जइ, कम्मुणा उवाही जायइ, कम्मं च पडिलेहाए ”

‘ पासिय आउरिए ’ इत्यादि– स हि भावजागरस्तैस्तैर्भावस्वापजनितैः शारीरमानसैर्दुःखैरातुरान् किंकर्त्तव्यतामूढान् दुःखसागरावगाढान् प्राणिनो दृष्ट्वा ज्ञात्वा अप्रमत्तः परिव्रजेत्– उद्युक्तः सन् संयमानुष्ठानं विदध्यात्। अपि च ‘ मंता एय ’ त्ति– हे मतिमन् ! भावसुप्तातुरान् पश्य, मत्वैतत् जाग्रत्सुप्तगुणदोषापादनं मा स्वापे मतिं कुरु। किञ्च–‘ आरंभजं’ति– आरंभाज्जातं आरम्भजं, किं तत् ?, दुःखं तत्कारणं कर्म्म, ‘इणमिणं’–इदमपि प्रत्यक्षापन्नं ‘ णच्च ’त्ति– ज्ञात्वा इत्येतज्ज्ञात्वा परिच्छिद्य निरारम्भो भूत्वा आत्महिते जागृहि। यस्तु विषयकषायाच्छादितचेता भावशायी स किमाप्नुयादित्याह– मायीत्ति– मायी मायावान् प्रमादी–मद्यादिप्रमादवान् नारकं भवमनुभूय पुनस्तिर्यक्षु गर्भमुपैति। यस्तु प्रमादापनोदकः स किम्भूतो भवतीत्याह–‘ उवेहमाण ’त्ति–शब्दरूपादिषु यौ रागद्वेषौ तावुपेक्षमाणः–अकुर्वन् ऋजुर्भवति, यतिरेव परमार्थतः ऋजुः, अपरस्तु तद्विपरीतकरणाद् वक्रः। किञ्च–‘ माराभिसंकी ’–स ऋजुः शब्दादीनुपेक्षमाणो मरणं मारस्तदभिशंकी मरणाद् उद्विजन् तत्करोति येन मरणात् प्रमुच्यते। किं तत्करोति ? ‘ अपमत्तो कामेहिं ’–कामैर्यः प्रमादस्तत्राप्रमत्तो भवेत् उपरतो यस्तु पापकर्म्मभिः, स एवंविधो वीरः आत्मगुप्तः, यस्तु क्षेत्रज्ञः खेदज्ञो वेत्यर्थः। यस्तु खेदज्ञः स कं गुणमवाप्नुयादित्याह–‘ जे पज्जवजाय ’त्ति–शब्दादिविषयानां पर्यवा विशेषास्तेषु तन्निमित्तं जातं शस्त्रं पर्यवजातशस्त्रं शब्दादि-


प्रमादिनः संसारपरिभ्रमणम्।

विशेषोपादानाय यत्प्राण्युपघातककार्यनुष्ठानं तत् पर्यवजातशस्त्रं, तस्य यः खेदज्ञो–निपुणः, सोऽशस्त्रस्य निरवद्यानुष्ठानस्य संयमस्य खेदज्ञः । यश्चाशस्त्रस्य संयमस्य खेदज्ञः स पर्यवजातशस्त्रस्य खेदज्ञः । एवं च शस्त्राशस्त्रे च जानानः तत्प्राप्तिपरिहारौ विधत्ते । तस्य च संयमतपःखेदज्ञस्याश्रवनिरोधनादिति. भवोपात्तकर्म्मक्षयः । कर्म्मक्षयाच्च यद् भवति तद्दर्शयति–' अकम्मस्स ' इत्यादि–अकर्म्मस्य ' ववहारो '–भवभ्रमणरूपो न विद्यते । कर्म्मवतो व्यवहारश्चतुर्गतिलक्षणः बालकुमाराद्यवस्थारूपो विद्यते । अत आह–' कम्मुणा उवाही 'त्ति–कर्म्मणा उपाधिर्जायते । तद्यथा–मतिश्रुतावधिमनःपर्यायवान् मन्दमतिस्तीक्ष्णो वेत्यादि, चक्षुरचक्षुरवधिकेवलदर्शनी वा, निद्रालुरनिद्रो वा, सुखी दुःखी वा, सम्यग्दृष्टिः मिथ्यादृष्टिर्वा, स्त्रीपुंमान्नपुंसको वा कषायी वा, सोपक्रमायुष्यको निरुपक्रमायुष्यको वा, गतिजात्यादि १०३ भेदभिन्नः, उच्चैर्गोत्रो नीचैर्गोत्रो वा, कृपणः त्यागी निर्वीर्य इत्येवं लक्षणा कर्म्मणा उपाधिर्जायते । ततः किं ? कुर्यादित्याह–' कम्मं च पडिलेहाए 'त्ति–कर्म्म–ज्ञानावरणीयादि तत्प्रत्युत्प्रेक्ष्य, बन्धं वा– प्रकृतिस्थित्यादिकमालोच्य अकर्म्मतोपाये भावजागरणे यतितव्यमिति । किञ्च—

" कम्ममूलं च जं छणं, पडिलेहिय सव्वं समायाय दोहिं अंतेहिं अदिस्समाणे तं परिन्नाय मेहावि, विइत्ता लोगं वंता लोगसन्नं से मेहावी परिक्कमिज्जासित्ति बेमि " । सीउसणिज्जस्स पढमो उद्देसो ॥

'कम्ममूल'मित्यादि–कर्म्मणो मूलं–कारणं मिथ्यात्वादयः, चः समुच्चये । कर्म्ममूलं प्रत्युत्प्रेक्ष्य, यत्–' क्षण 'मिति–क्षणु हिंसायां, क्षणनं यत्किमपि प्राण्युपघातकारि, तत् कर्म्ममूलतया प्रत्युत्प्रेक्ष्य परिहरेत् । ' पडिलेहिय 'त्ति–प्रत्युत्प्रेक्ष्य पूर्वोक्तं कर्म्म तद्विपक्षपदे मोक्षं च सर्वं समादाय–गृहीत्वा, ' दोहिं अंतेहिं 'ति–अन्तहेतुत्वादन्तौ रागद्वेषौ, ताभ्यां द्वाभ्यां सहादृ-

कर्म्मप्रकृतिस्वरूपं ज्ञात्वा भावजागरणे यतितव्यम् ।

श्यमानः ताभ्यामनपदिश्यमानो वा, तत्कर्म्म तदुपादानं वा रागादिकं, ज्ञपरिज्ञया प्रत्याख्यानपरिज्ञया परिहरेदिति । तं परिण्णाय– तं रागादिमोहितं लोकं विषयकषायलोकं वा ज्ञात्वा, वान्त्वा च लोकसंज्ञां–विषयाभिलाषात्मिकां, मेधावी–मर्यादावान् व्यवस्थितः सन् पराक्रमेत– संयमानुष्ठान उद्युक्तो भवेदित्यर्थः । विषयपिपासामरिषड्वर्ग्गं वाऽष्टप्रकारं कर्मावष्टम्यात् । इति परिसमाप्तौ ब्रवीमि पूर्ववत् इति शीतोष्णीयाध्ययने प्रथमोद्देशकः ॥

अथ द्वितीय आरभ्यते । प्रथमोद्देशके भावसुप्ताः प्रदर्शिताः । इह तु तेषां स्वापविपाकफलं असातमुच्यते । अस्यादिमं सूत्रम्—

" जाइं च वुड्ढिं च इहऽज्ज ! पासे, भूएहिं जाणे पडिलेह सायं । तम्हाऽतिविज्जे परमंति णच्चा, सम्मत्तदंसी न करेइ पावं ॥४॥"

' जाइं चे 'त्यादि–जातिः प्रसूतिः, बालादिवृद्धावसाना वृद्धिः, इह मनुष्यलोके संसारे वा, अद्यैव जातिं च वृद्धिं च पश्य– अवलोकय । एवं विवेकचक्षुषा विलोक्यालोच्य जात्यादिकं न स्यात्तथा विधत्स्व । किञ्च–' भूएहिं सायं पडिलेह ' त्ति– भूतानि– चतुर्दशभूतग्रामाः, तैः सममात्मनः सुखं सातं प्रत्युत्प्रेक्ष्य पर्यालोच्य जानीहि, यथा त्वं सुखप्रियः दुःखपराङ्मुखः, तथाऽन्येऽपि प्राणिनः । एवं मत्वा अन्येषामसातोत्पादनं न विदध्याः । एवं च जन्मादिदुःखं न प्राप्स्यसि । यद्येवं ततः किमित्याह–' तम्हातिविज्जो 'त्ति–तस्माद्– जातिवृद्धिसुखदुःखदर्शनादतीव विद्या–तत्वपरिच्छेत्री यस्यासावतिविद्यः सः परममुत्कृष्टं मोक्षमार्ग्गं ज्ञात्वा समत्वदर्शी सन् पापं न करोति–सावद्यानुष्ठानं न करोति । पापस्य च मूलं स्नेहपाशास्तदपनोदार्थमाह—

उम्मुंच पासं इह मच्चिएहिं, आरंभजीवी उभयाणुपस्सी । कामेसु गिद्धा निचयं करंति, संसिच्चमाणा पुणरिंति गब्भं ॥ ५ ॥

‘ उम्मुंच ’ इत्यादि–इह मनुष्यलोके मर्त्यैः सार्द्धं स्नेहपाशमुन्मुञ्च–अपाकुरु । स हि भोगाकांक्षी सावद्यारम्भं प्रकुरुत इत्याह–‘आरंभ’ इत्यादि– आरम्भेन जीवितुं शीलमस्येत्यारम्भजीवी । ‘ उभयाणु ’त्ति उभयं शारीरमानसं ऐहिकामुष्मिकं वा द्रष्टुं शीलमस्य स उभयानुदर्शी । ‘कामेसु’त्ति–कामा इच्छामदनरूपास्तेषु गृद्धा निचयं कर्म्मोपचयं कुर्वन्ति । यदि नामैवं ततः किमित्याह– तं ‘ संसिच्चमाण ’त्ति–ते च कामोपादानजनितेन कर्म्मणा संसिच्यमाना–आपूर्यमाणा अरघट्टघटीन्यायेन संसारचक्रे गर्भाद् गर्भान्तरमुपयान्ति । निवृत्तात्मा किंभूतो भवतीत्याह—

अवि से हासमासज्ज, हंता नंदीति मन्नई । अलं बालस्स संगेण, वेरं वड्ढेइ अप्पणो ॥ ६ ॥

‘ अवि से ’ इत्यादि– ह्रीभयादिनिमित्तश्चेतोविप्लवो हासस्तमासाद्य– अङ्गीकृत्य स कामगृध्नुर्हत्वापि प्राणिनो ‘ नन्दी ’ ति– क्रीडेति मन्यते । वदति च महामोहावृतोऽशुभाध्यवसायो, यथा–एते पशवो मृगयार्थं सृष्टाः, मृगया च सुखिनां क्रीडायै भवति, इत्येवं मृषावादादिष्वप्यायोज्यं । यदि नामैवं ततः किमित्याह—‘ अलं ’त्ति– अलं पर्याप्तं बालस्य प्राणातिपातकारिणः सङ्गेन हास्यादिवर्त्तनेन । किमिति चेद् ? उच्यते–‘ वेर ’ मित्यादि—तत्सङ्गं कुर्वतश्चात्मनो वैरं वर्द्धयति । यतश्चैवं ततः किमित्याह—

तम्हाऽतिविज्जो परमंति णच्चा, आयंकदंसी न करेइ पावं । अग्गं च मूलं च विगिंच धीरे, पलिच्छिंदिया णं निकम्मदंसी ॥७॥

‘ तम्ह ’त्ति– यस्माद् बालस्य संगिनो वैरं वर्द्धते, तस्मादतिविद्वान् परमं–मोक्षपदं सर्वसंवररूपं चारित्रं वा सम्यग्ज्ञानं

स्नेहपाशं निवार्य बालसंगो न कर्त्तव्यः।

सम्यग्दर्शनं वा एतत्परमोत्कृष्टं ज्ञात्वा किं ? करोतीत्याह–' आयंक ' इत्यादि– आतङ्को- नरकादिदुःखं तद्द्रष्टुं शीलमस्येति इत्यान्तकदर्शी पापं न करोति योगकरणत्रिकेणापि। पुनराह-' अग्गं 'चेति–अग्रं-भवोपग्राहि कर्म्मचतुष्टयं, मूलं- घातिकर्म्म-चतुष्टयं, तदेवं सर्वमग्रं च मूलं च ' विगिंच'त्ति–त्यज- पौद्गलिकशरीरात्मात्पृथक्कुरु। पुनः किञ्च ' परिछिंदिय 'त्ति–परिः सामस्त्येन तपसंयमाभ्यां कर्म्मबन्धनानि छित्वा निःकर्म्मदर्शी भवति- निःकर्म्माणमात्मानं पश्यतीत्यर्थः। निःकर्म्मदर्शी किमाप्नुयादित्याह–

" एस मरणा पमुचइ, से हु दिट्ठभए मुणी, लोगंसि परमदंसी विवित्तजीवी उवसंते समिए सहिए सया जए कालकंखी परिव्वए, बहुं च खलु पावं कम्मं पगडं "

' एस ' इत्यादि– एषो निःकर्म्मदर्शी मरणात्प्रमुच्यते, आयुषो बन्धनाभावात्। स च हुरवधारणे दृष्टभयो मुनिः, दृष्टं भयं येन स दृष्टभयः। ' लोगंसि 'त्ति– लोके षट्कायजीवलोके परममुत्कृष्टं संयमं द्रष्टुं शीलमस्येति परमदर्शी। विवित्तजीवीत्ति– विविक्तं असंक्लिष्टं- रागद्वेषरहितं स्त्रीपशुपण्डकादिरहितं वा, विविक्तेन जीवितुं शीलमस्येति विविक्तजीवी। एवमुपशान्तः प्रवचनाष्टमातृवान्, समितः– समितिभिः सहितः ज्ञानान्वितः सदा सर्वकालं यतेत–प्रमादं परिहरेत्। एवंविधः किं ? स्यादित्याह—' कालकंखी '– कालो–मृत्युस्तमाकांक्षितुं शीलमस्येति कालाकांक्षी स एवंभूतः परिसमन्ताद् व्रजेत्, यावत्पर्यायागतं पण्डितमरणं तावदाकांक्षमाणो विविक्तजीवी सन् संयमानुष्ठानमोक्षमार्ग्गे परिवसेत्। एतत्किमर्थं क्रियत ? इत्याह–' बहुं चे 'त्यादि– चः समुच्चये, खलुरवधारणे, बह्वेव तत्कर्म्म मूलोत्तरप्रकृतिभेदभिन्नं प्रकटं– लोकप्रसिद्धं, ततस्त-

उ० २ अग्रमूलं त्यक्त्वा निःकर्म्म-दर्शी सन् मोक्षमवाप्नोति।

दपनोदाय किं कर्त्तव्यम् ?—

" सच्चं संधिइं कुव्वहा, एत्थोवरए मेहावी सव्वं पावं कम्मं झोसइ "

'सच्चं' इत्यादि– सद्भ्यो हितः सत्यः– संयमः, सम्यग् धृतिः–सन्तोषः संधृतिः, तत्र संयमे संधृतिं कुरु त्वं, 'एत्थोवरए 'त्ति– अत्रास्मिन् संयमे रतो व्यवस्थितो मेधावी तत्त्वज्ञो हि सर्वं पापं कर्म्मबन्धकारणं झोषयति– क्षयं नयति तात्पर्यमिति । उक्तोऽप्रमादः, तद्विपरीतः प्रमादः, प्रमत्तो किंगुणो ? भवतीत्याह—

" अणेगचित्ते खलु अयं पुरिसे, से केयणं अरिहए पूरित्तए, से अन्नवहाए अण्णपरियावाए अण्णपरिग्गहाए जणवयवहाए जणवयपरियावाए जणवयपरिग्गहाए "

'अणेग' इत्यादि– अनेकानि- बहुप्रकाराणि चित्तानि कृपिवाणिज्यादीनि यस्यासावनेकचित्तः, खलुरवधारणे, संसारसुखाभिलाषी जन्तुरनेकचित्त एव भवति । 'अयं पुरिसे 'त्ति— अयं प्रत्यक्षगोचरपुरुषः संसारी जन्तुः । यश्चानेकचित्तो भवति स किं ? कुर्यादित्याह–' से केयणं 'ति– स केतनं द्रव्यभावाभ्यां, तत्र द्रव्यकेतनं चालिन्यादि समुद्रो वा, भावकेतनं– लोभेच्छा, तदसावनेकचित्तः केनाप्यभृतपूर्वं पूरयितुमर्हति, अभृतपूरणे योग्यः स्यादित्याह– स किं कुर्यात् ?–' अन्नवहाए ' त्ति–सोऽन्यवधाय–अन्यपरितापनाय अन्यपरिग्रहायेति सुगमं, अन्येषां वधो तस्मै, एवं सर्वत्र योज्यम् । जनपदे भवा जानपदाः लोकाः राजादयस्तद्वधाय । तथा जनपदानां लोकानां परिवादाय चौरोऽयं पिशुनो वा इत्येवं मर्मोद्घट्टनाय, तथा जनपदानां– मगधादीनां परिग्रहाय प्रभवति। किं ये लोभप्रवृत्ता वधादिकाः क्रियाः कुर्वन्ति, ते तथाभूता एवासते ?, उतान्य-

प्रमत्तोऽन्यवधपरितापनपरिग्रहाय भवति ।

थापीति ? दर्शयति—

"आसेवित्ता एयमट्ठं इच्चेवेगे समुट्ठिया, तम्हा तं बिइयं नो सेवे निस्सारं पासिय नाणी, उववायं चवणं नच्चा, अणण्णं चर माहणे, से न छणे न छणावए छणंतं नाणुजाणइ, निव्विंद नंदिं, अरए पयासु, अणोमदंसी णिसन्ने पावेहिं कम्मेहिं"

'आसेवित्ता' इत्यादि—इत्येवमासेवित्वा वधादिकं पूर्वोक्तं 'एयमट्ठं'त्ति एतदर्थं विषयाभिष्वङ्गं लोभादाश्रवप्रवृत्तिलक्षणमनुभूय एके भरतादयः समुत्थिताः सम्यग् योगत्रिकेणोत्थिताः समुत्थिताः संयमानुष्ठानोद्यताः सिद्ध्यन्ति। संयमोत्थानेनोत्थायाश्रवं हित्वा किं ? विधेयमित्याह–'तम्हा' इत्यादि—यस्माद्वान्तपरिभोगकृतप्रतिज्ञस्तस्माद् द्वितीयं मृषावादमप्यसंयमं नासेवेत। विषयार्थमसंयमं सेव्यते। ते च निःसारा इति दर्शयति–'निस्सार' मित्यादि—निर्गतः सारः–तृप्तिलक्षणं यस्मात्स निःसारः तं 'पासिय'त्ति–दृष्ट्वा ज्ञानी न विषयाभिलाषं विदध्यात्। सर्वेषां विषयास्वादनमनित्यमिति दर्शयति–उववायं चवणं ति–उत्पातं–जन्म च्यवनं–मरणं, तच्च ज्ञात्वा विषयसंगोन्मुखो भवेत्। एवमशाश्वतं मत्वा किं ? कर्त्तव्यमित्याह–'अणण्णं' इत्यादि–मोक्षमार्गादन्योऽसंयमो न अन्योऽनन्यो–ज्ञानादिस्तं चर–सेवस्व। माहणेत्ति–हे मुने ! पुनः किं ? 'से न छणे' इत्यादि–स मुनिरनन्यसेवी प्राणिनो न क्षुणुयात्–न हन्यात्, नाप्यपरं घातयेत्, घ्नन्तमन्यं न समनुजानीत, चतुर्थव्रतसिद्धये त्विदमुपदिश्यते 'निव्विंद नंदिं'ति–निर्विन्दस्व–जुगुप्सस्व, कां ? विषयजनितां 'नन्दीं'–प्रमोदम्। किम्भूतः सन् ?, 'अरए पयासु'त्ति–प्रजासु–स्त्रीषु अरक्तो रागादिरहितो भावयेच्च यथैते विषयाः किम्पाकफलोपमाः। अतो विषयपराङ्मुखो भवेदित्याह–'अणोम' इत्यादि–अवमं–हीनं मिथ्यादर्शनाविरत्यादि, तद्विपरीतमनवमं सम्यग्-



केचिन्महानुभावाः संयमं स्वीकृत्याऽर्हिसका भवन्ति।

दर्शनादिस्तं द्रष्टुं शीलमस्येत्यनवमदर्शी सम्यग्दर्शनज्ञानचारित्रवान्। एवंभूतः सन् 'निसण्णो'त्ति-निपन्नः-निर्विन्नः केभ्यः? पापकर्म्मेभ्यः पापकर्त्तव्येषु निवृत्त इत्यर्थः। किञ्च—

"कोहाइमाणं हणिया य वीरे, लोभस्स पासे निरयं महंतं। तम्हा य वीरे विरए वहाओ, छिंदिज्ज सोयं लहुभूयगामी ॥७॥

गंथं परिण्णाय इहऽज्ज धीरे, सोयं परिण्णाय चरिज्ज दंते। उम्मज्ज लध्धुं इह माणवेहिं, नो पाणिणं पाणे समारभिज्जासि ॥८॥

त्तिवेमि" सीउसिणिज्जस्स वीओ उद्देसो सम्मतो।

'कोहाय' इत्यादि-क्रोधादिर्मानो गर्वस्तं हन्यात्। कोऽसौ? वीरः, क्रोधसमुत्थं हत्वा मानमत्र द्वेषाभावो दर्शितः। रागापनोदार्थमाह—'लोभस्से'त्यादि लोभस्यानन्तानुबन्ध्यादेश्चतुर्विधस्यापि विपाकं पश्य 'निरयंति'ति-नरकगमनरूपं महंतंति- महान्तम्। लोभाभिभूतास्तन्दुलमत्स्यादयः प्राणिवधादनिवृत्ता महानरकभाजो भवन्ति। तस्माद् वीरः कर्म्मा-ष्टकच्छेत्ता, वधादिति- परप्राणवधाद् विरतः स्यात्। किञ्च-'छिंदिज्ज' छिन्द्यात् सोयं- शोकं स्नेहविरहजं, श्रोतो वा संसाराम्बुधिप्रवाहभ्रमणं छिन्द्यादपनयेदित्यर्थः। किम्भूतश्छिन्द्यात्?, 'लहु'त्ति लघुभूतगामी सन्, लघुभूतो-मोक्षः संयमो वा तं गन्तुं शीलमस्येति लघुभूतगामीत्यर्थः। पुनरप्युपदेशदानायाह-'गंथं' इत्यादि-ग्रन्थं-बाह्याभ्यन्तररूपं ज्ञपरिज्ञया परिज्ञाय इहाद्यैव- कालानतिपातेन धीरः सन् प्रत्याख्यानपरिज्ञया परिहरेत्। किञ्च 'सोय'मित्यादि—संसारश्रोतसं विषयाभिष्वङ्गं वा ज्ञात्वा दान्तः सन् संयमं चरेत्। किमभिसन्धाय?, 'उम्मग्ग'त्ति- मिथ्यात्वादिशैवलाच्छादिते संसारहृदे कच्छपवज्जन्तुः श्रुतिश्रद्धासंयमवीजरूपमुन्मज्जनमासाद्य-लब्ध्वा, अन्यत्र सम्पूर्णमोक्षमार्गाऽसंभवात् मानुषेष्वित्युक्तम्। उत्तर-

वीरः क्रोधादि त्यक्त्वा लघुभूतगामी भवति।

क्रियामाह–' नोपाणिणं 'ति– प्राणा विद्यन्ते येषां ते प्राणिनः, तेषां प्राणान् - इन्द्रियबलोश्वासायुरूपान् नो समारभेथाः– न व्यपरोपयेस्तदुपघातकार्यनुष्ठानं मा कुथाः। इति परिसमाप्तौ ब्रवीमि पूर्ववत्। इति शीतोष्णीयाध्ययने द्वितीयोद्देशकः॥

अथ तृतीय आरभ्यते, तस्य सूत्रम्—

" संधिं लोयस्स जाणित्ता आयओ बहिया पास, तम्हा न हंता न विघायए, जमिणं अन्नमन्नवितिगिच्छाए पडिलेहाए न करेइ पावं कम्मं, किं तत्थ मुणी कारणं सिया ? "

' संधि 'मित्यादि–सन्धिर्द्विधा द्रव्यभावभेदाभ्यां, द्रव्यसन्धिः– कुड्यादिविवरं, भावतः कर्म्मविवरं तं ज्ञात्वा, इत्ययं सम्यग्ज्ञानावाप्तिलक्षणः सन्धिः, अथवा चारित्रमोहनीयक्षयोपशमात्मकः, तं सन्धिं ज्ञात्वा न प्रमादः श्रेयान्, यथाहि लोकस्य चारकाद्यवरुद्धस्य कुड्यनिगडादीनां सन्धि– छिद्रं ज्ञात्वा न प्रमादः श्रेयान्, एवं मुमुक्षोरपि कर्म्म-विवरमासाद्य क्षणमपि पुत्रकलत्रसंसारसुखव्यामोहो न श्रेयसे भवतीति। यदि वा सन्धिरवसरो धर्म्मानुष्ठानस्य, तं ज्ञात्वा लोकस्य–भूतग्रामस्य दुःखोत्पादनानुष्ठानं न कुर्यात्, सर्वत्रात्मौपम्यमाचरेदित्याह–' आयओ ' इत्यादि–यथात्मनः सुखमिष्टं तथा बहिरपि– आत्मनो व्यतिरिक्तानां जन्तूनां सुखप्रियत्वमसुखाप्रियत्वं च पश्य- अवधारय। तदेवमात्मनः समतां सर्वप्राणिनामवधार्य किं ? कर्त्तव्यमित्याह–' तम्हा न हंता ' इत्यादि– यस्मात्सर्वेऽपि जन्तवो दुःखद्विषः सुखेप्सवस्त-स्मान्न हंता न व्यापादकः स्यात्। नाप्यपरैस्तान् विविधैः पापोपदेशकथनैर्घातयेत्- विघातयेदिति। न चैकान्तेन पापकर्म्मा-ऽकरणमात्रतया श्रमणो भवतीति दर्शयति ' जमिण 'मिच्चाइ– यदिदं- यदेतत् पापकर्माकरणताकारणं किं तद् ? दर्शयति–

अन्योऽन्यस्य परस्परं या विचिकित्सा– आशंका तां वा प्रत्युपेक्ष्य पापं पापोपादानं कर्म्मानुष्ठानं न विधत्ते। 'किं तत्थ'त्ति– किं-प्रश्ने तत्र- तस्मिन् पापकर्म्माऽकरणे किं मुनिः कारणं स्यात्, किं मुनिरिति कृत्वा पापकर्म्म न करोति ? काका पृच्छति, अद्रोहकाध्यवसायो हि मुनेः कारणं, शुभान्तःकरणेन भगवदाज्ञाविधायी भावमुनिरित्यत आह—

"समयं तत्थुवेहाए अप्पाणं विप्पसायए–अणन्नपरमं नाणी, नो पमायए कयाइवि। आयगुत्ते सया वीरे जायमायाइ जावए ॥ १० ॥ विरागं रूवेहिं गच्छिज्जा महया खुड्डएहिं य, आगई गई परिण्णाय दोहिवि अंतेहिं अदिस्समाणेहिं से न छिज्जइ न भिज्जइ न डज्झए न हम्मइ कंचणं सव्वलोए"

'समयं तत्थ' इत्यादि—समस्य भावः समता तां तत्रोत्प्रेक्ष्य–पर्यालोच्य समताऽध्यवस्थितो यत्करोति, येन केनचित्प्रकारेणाऽनेषणीयपरिहरणं लज्जादिना जनविदितं चोपवासादि तत्सर्वं मुनिभावकारणम्। यदिवा समयमागमं तत्रोत्प्रेक्ष्य यदागमोक्तविधिना विधानानुष्ठानं तत्सर्वं मुनिभावकारणं चेति भावार्थः, तेनागमोत्प्रेक्षणेन समतोत्प्रेक्षया वाऽऽत्मानं विप्रसादयेत्–विविधं प्रसादयेत् आगमपर्यालोचनेन समतादृष्ट्या वात्मानं विविधैरुपायैरिन्द्रियप्रणिधानाऽप्रमादादिभिः प्रसन्नं विदध्यात्। आत्मप्रसन्नता च संयमस्थस्य भवति, तत्राऽप्रमादवता भाव्यमित्याह–'अणन्नपरमं'ति–नो विद्यतेऽन्यः परमः–प्रधानो अस्येत्यनन्यपरमः– संयमः, तं ज्ञानी परमार्थविद् नो प्रमादयेत्– तस्य प्रमादं न कुर्यात्कदाचिदपि। यथा चाऽप्रमादवत्ता भवति तथा दर्शयितुमाह–'आयगुत्ते'त्ति– इन्द्रियनोइन्द्रियात्मना गुप्तः आत्मगुप्तः। सदा-सर्वकालं यात्रा–संयमयात्रा तयात्मानं यापयेत्। किंविधः सन् ?, धीरः सन्नित्यर्थः। सैवात्मगुप्तता कथं ? स्यादित्याह–'विराग'

१

उ० ३
भगवदाज्ञाविधायित्वं भावमुनौ वर्त्तते।

इत्यादि- विरजनं विरागस्तं गच्छेत्-यायात् मनोज्ञेषु रूपेषु, अर्थात् स्त्रीपुरुषादिरूपेषु चक्षुर्गोचरीभूतेषु विरागं कुर्यात्। किमालम्ब्यैतत्कर्त्तव्यमित्याह-' आगतिं गतिं चे 'त्यादि--आगमनं- आगतिः, सा च तिर्यग्मनुष्ययोः चतुर्द्धा, गमनं-गतिं च परिज्ञाय संसारचक्रवालेऽरघट्टयंत्रन्यायमवेत्य मनुष्ये मोक्षगतिसद्भावमाकलय्य अन्तहेतुत्वादन्तौ- रागद्वेषौ ताभ्यामन्ताभ्यामदृश्यमानाभ्यामनपदिश्यमानाभ्यां वा, ' से न छिज्जई 'त्यादि- स आगतिगतिपरिज्ञाता रागद्वेषाभ्यामनपदिश्यमानो न छिद्यते अस्यादिना, न भिद्यते कुन्तादिना, न दह्यते पावकादिना, न हन्यते नरकानुपुर्व्यादिना भूयशः। रागद्वेषाभावात् सिद्ध्यत्येव, तदवस्थस्य चैतानि छेदनादीनि विशेषणानि। ' कंचणं 'मिति विभक्तिविपरिणामात्केनचित्सर्वस्मिन्नपि लोके न छिद्यते नापि भिद्यते रागद्वेषोपशमादिति। तदेवमागतिगतिपरिज्ञानाद् रागद्वेषपरित्यागः, तदभावाच्च छेदनादिसंसारदुःखाभावः। अपरे च साम्प्रतेक्षिणः कुतो वयमागताः ? क्व यास्यामः ? किंवा तत्र सम्पत्स्यते ? नैवं भावयन्त्यतः संसारे भ्रमन्तीति दर्शयितुमाह—

"अवरेण पुव्विं न सरंति एगे, किमस्स तीयं ? किं वाऽऽगमिस्सं। भासंति एगे इह माणवाओ, जमस्स तीयं तमागमिस्सं" ॥११॥

" नाईयमट्ठं न य आगमिस्सं, अट्ठं नियच्छन्ति तहागया उ। विहुयकप्पे एयाणुपस्सी, निज्झोसइत्ता खवगे महेसी ॥ १२ ॥"

' अवरेण पुव्वि ' मित्यादि-अपरेण पश्चात्कालभाविना सह पूर्वमतिक्रान्तं न स्मरन्त्यन्ये मोहावृत्तबुद्धयः, ' एगे 'त्ति-एके न स्मरन्ति, किमस्य जन्तोर्नरकादिगमने किमतीतं-किमभवत् ? किंवा भविष्यति ? किमस्य सुखाभिलाषिणो भावीति ?। ' भासंति-एगे 'त्यादि- एके पुनर्महामिथ्यात्वज्ञानिनो भाषन्ते, इहास्मिन् संसारे मनुष्यलोके वा मानवा

उ० ३
अपरे राग-द्वेषपरवशाः संसारपरि-भ्रमणं कुर्वन्ति।

मनुष्या यथा यदस्य जन्तोरतीतं स्त्रीपुंनपुंसकसुभगदुर्भगश्वगोमायुब्राह्मणक्षत्रियविट्शूद्रादि भावावेशात् पुनरप्यन्यजन्मानुभूतं तदेवागमिस्सं–आगामीति । ये तु पुनः संसारार्णवपारभाजस्ते पूर्वोत्तरवेदिन इत्येतद्दर्शयितुमाह–'नाईयमट्ठंति तहागयाउ 'त्ति यावत्–तथैव- अपुनरावृत्त्या गतं गमनं येषां ते तथागताः–सिद्धाः । यदिवा यथैव ज्ञेयं तथैव गतं–ज्ञानं येषां ते तथागताः–सर्वज्ञाः, ते तु नातीतमर्थं अनागतरूपतयैव नियच्छन्ति- अवधारयन्ति, नाप्यनागतं अतिक्रान्तरूपतयैव, विचित्रत्वात् परिणतेः । यदिवा नातीतमर्थं–विषयभोगादिकं, नाप्यनागतं दिव्याङ्गनासङ्गादिकं स्मरन्ति अभिलपन्ति वा । के ? तथागताः–रागद्वेषाभावात्पुनरावृत्तिरहिताः । तुशब्दो विशेषार्थे, विशेषार्थमाह– 'विहुयकम्मे 'त्ति– विविधमनेकधा धूतमपनीतमष्टप्रकारं कर्म्म येन स विधूतकर्म्मा, वायणान्तरे 'विधुतकप्पे'त्ति–विविधं–अनेकधा धूतं–अपनीतमष्टप्रकारं कर्म्म येन स विधूतः, कोऽसौ ?, कल्पः- आचारो, विधूतः कल्पो यस्य साधोः स विधूतकल्पः विमलीकृताचार इत्यर्थः । स एतदनुदर्शी भवति अतीतानागतसुखाभिलापी न भवतीति यावत् । 'एयाणुपस्सी'–एतदनुदर्शी च किं ? गुणो भवतीत्याह– 'निज्झोसइत्ता'–पूर्वोपचितकर्म्मणां निज्झोषयिता–क्षपकः क्षपयिष्यति वा । कर्म्मक्षपणायोद्यतस्य यत्स्यात्तद्दर्शयति—

"का अरई के आणंदे ? इत्थंपि अग्गहे चरे, सव्वं हासं परिच्चज्ज आलीणगुत्तो परिव्वए, पुरिसा !– तुममेव तुमं मित्तं किं बहिया मित्तमिच्छसि ?"

'का अरई' इत्यादि– इष्टाप्राप्तिविनाशोत्थो मानसो विकारोऽरतिः, अभिलपितार्थावाप्तौ आनन्दः, शुक्लध्यानाधिष्ठितस्य विधूतकल्पस्य केयमरतिः ? को वाऽऽनन्दः ? इति, तदाह–'एत्थंपि अग्गहे चरे'त्ति– अत्राप्यरतौ आनन्दे वा न

विद्यते ग्रहो गार्द्ध्यं यस्य सोऽग्रहः, स एवम्भूतश्चरेत् । 'सव्वं हासं परिच्चज्ज 'त्ति सर्वं हास्यं तदास्पदं वा परित्यज्य, आङ् मर्यादया इन्द्रियनिरोधादिकया लीन आलीनो, गुप्तो मनोवाक्कायकर्म्मभिः, कूर्म्मवद्वा संवृत्तगात्रः, आलीनश्चासौ गुप्त-श्चालीनगुप्तः स एवंभूतः परिव्रजेत् संयमानुष्ठायी भवेदित्यर्थः । तस्य च साधोरात्मसामर्थ्येन संयमानुष्ठानं फलवद् भवति न परोपाधिना इति दर्शयति–' पुरिसा तुमेवे 'त्यादि–कश्चित्संसारादुद्विग्न आत्मानमनुशास्ति, परेण वा साध्वादिना अनु-शास्यते, यथा हे पुरुष ! हे जीव ! तव सदनुष्ठानविधायित्वात् त्वमेव मित्रं, विपरीताचरणादऽमित्रः । किमिति ? 'बहि-यत्ति '–बहिर्मित्रमिच्छसि–वाञ्छसि ?, बहिर्मित्रादऽल्पसुखलौल्यात्संसारार्णवपतनं भवति । आत्मैवात्मनोऽप्रमत्तो मित्रं, आत्यन्तिकैकान्तिकपरमार्थसुखोत्पादनात्, विपर्ययाच्च विपर्ययो, न बहिर्मित्रमन्वेष्टव्यमिति । यो हि निर्वाणनिर्वर्त्तकं व्रतमाचरति स आत्मनो मित्रं, स चैवम्भूतः कुतोऽवगन्तव्यः ? किं फलश्चेत्याह—

" जं जाणिज्जा उच्चालइयं तं जाणिज्जा दूरालइयं, जं जाणिज्जा दूरालइयं तं जाणिज्जा उच्चालइयं, पुरिसा ! अत्ताणमेयं अभि-णिगिज्झ एवं दुक्खा पमुच्चसि, पुरिसा ! सच्चमेव समभिजाणाहि, सच्चस्स आणाए से उवट्ठिए मेहावी मारं तरइ, सहिओ धम्म-मायाय, सेयं समणुपस्सइ "

'जं जाणिज्जा ' इत्यादि– यं पुरुषं जानीयात् विषयसङ्गानां कर्म्मणां चोच्चालयितारं–अपनेतारं तं जानीयाद् दूराल-यिकमिति–दूरे सर्वहेयधर्म्मेभ्य इति आलयो दूरालयो–मोक्षः तन्मार्ग्गो वा, स विद्यते यस्येति दूरालयिकः, तं दर्शयति– 'जं जाणेज्ज 'त्ति– यं जानीयाद् दूरालयिकं, तं जानीयादुच्चालयितारम् । इदमुक्तं भवति–यो हि कर्म्मणां तदाश्रवद्वाराणां

उ० ३ व्रताराधकेन बहिर्मित्रान्वेषणं न कर्त्तव्यमिति सूचनम् ।

सत्यशब्द-व्याख्यानं प्रदर्श्य संसारतरणोपायसूचनम् ।

चोच्चालयिता– अपनेता स मोक्षमार्गव्यवस्थितो मोक्षो वेति । यो वा सन्मार्गानुष्ठायी स सत्कर्म्मणामुच्चालयिता स चात्मनो मित्रमतो व्यपदिश्यते–' पुरिसा अत्ताण 'त्ति हे जीव ! आत्मानमेवाभिनिगृह्य धर्म्मध्यानाद् बहिर्विषयाभिष्वङ्गाय निःसरन्तमवरुध्य, तत एवं– अनेन प्रकारेण दुःखात्सकाशादात्मानं प्रमोक्ष्यसि । एवमात्मा कर्म्मणामुच्चालयिताऽऽत्मनो मित्रं भवति । अपि च–' पुरिसा 'इत्यादि–हे पुरुष ! हे जीव ! सत्यं–संयमं समभिजानीहि आसेवनपरिज्ञया समनुतिष्ठ । किमर्थमिति ? चेदाह–' सच्चस्से 'त्यादि– सत्यस्य- आगमस्याज्ञयोपस्थितः सन् स मेधावी मारं–संसारं तरति । किञ्च-' सही 'त्यादि–सहितो ज्ञानादियुक्तः, धर्म्मं–श्रुतचारित्राख्यं, आदाय– गृहीत्वा किं करोतीत्याह– ' सेयं 'ति–श्रेयः पुण्यमात्महितं सम्यग्- अविपरीततयाऽनुपश्यति समनुपश्यति । उक्तोऽप्रमत्तः तद्गुणाश्च, तद्विपर्ययमाह—

" दुहओ जीवियस्स परिवंदणमाणणपूयणाए जंसि एगे पमायंति "

' दुहओ ' इत्यादि– द्विधा रागद्वेषप्रकारद्वयेन आत्मनिमित्तं परनिमित्तं वा ऐहिकामुष्मिकार्थं वा हतो द्विहतः सन् किं कुर्यात् ? ' जीविय 'इत्यादि– जीवितस्य कदलीगर्भनिःसारस्य परिवन्दनमाननपूजनार्थं हिंसादिषु प्रवर्त्तते । किञ्च–' जंसि एगे 'त्ति– यस्मिन् परिवन्दनादिनिमित्ते एके रागद्वेषोपहताः प्रमाद्यन्ति, न ते आत्मने हिताः । एतद्विपरीतं त्वाह—

" सहिओ दुक्खमत्ताए पुट्ठो नो झंझाए, पासिमं दविए लोकालोकपवंचाओ मुच्चइत्ति वेमि " ॥ तइओ उद्देसो सम्मत्तो ॥

' सहिओ ' इत्यादि– सहितो ज्ञानादिसमन्वितो दुःखमात्रया उपसर्गजनितया वा स्पृष्टः सन्, ' नोझंझाए ' त्ति– इष्टविषयावाप्तौ रागझंझा, अनिष्टावाप्तौ द्वेषझंझा, तत्र नो व्याकुलितमतिर्भवेत्, तदपनोदायोद्यच्छेत् । तामुभयप्रकारामपि

व्याकुलतां परित्येजदिति भावः। किश्च- 'पासिमं' इत्यादि- यदुक्तमुद्देशकादेरारभ्यानन्तरसूत्रं यावत् तमिममर्थं पश्य- कर्त्तव्याकर्त्तव्यविवेकेनावधारय, कोऽसौ? 'दविए'त्ति-द्रविकः-मुक्तिगमनयोग्यः साधुरित्यर्थः। एवम्भूतश्च कं गुणमवाप्नोति?-'लोए' इत्यादि—आलोक्यते इत्यालोकः कर्म्मणि घञ्, लोके-चतुर्दशरज्ज्वात्मके आलोको लोकालोकस्तस्य प्रपञ्चः- पर्याप्तसुभगादिद्वन्द्वविकल्पः, तद्यथा-नारको नारकत्वेनावलोक्यते, एकेन्द्रियादिरेकेन्द्रियत्वेन, एवं सर्वत्रापीति वाच्यम्। तदेवम्भूतात्प्रपञ्चान्मुच्यते- चतुर्दशजीवस्थानान्यतरव्यपदेशार्हो न भवतीति ब्रवीमीति तृतीयोद्देशकः॥

अथ चतुर्थ आरभ्यते, तस्यादिमं सूत्रम्—

"से वंता कोहं च माणं च मायं च लोभं च, एयं पासगस्स दंसणं, उवरयसत्थस्स पलियंतकरस्स, आयाणं सगडब्भि"

'से वन्ता' इत्यादि- यो लोकालोकप्रपञ्चान्मुक्तो भवति, 'से'इति- स वान्ता-वमिता क्रोधमानमायालोभादीनां, क्रोधमानमायालोभवमनादेव पारमार्थिकः श्रमणभावो, न तत्संभवे सति। यत उक्तं- सामन्नमणुचरन्तस्स, कसाया जस्स उक्कडा हुंति। मन्नामि उच्छुपुप्फं व निप्फलं तस्स सामन्नं॥ १॥ जं अज्जियं चरित्तं, देसूणावि पूवकोडीए। तंपि य कसायमत्तो, हारेइ नरो मुहुत्तेणं॥ २॥ स्वमनीषिकापरिहारार्थं गणभृदाह-'एयं पासगस्स दंसणं'ति- एतत् यत्कषायवमनमनन्तरमुपादेशि तं तत् पश्यकस्य दर्शनं- सर्वं निरावरणत्वात्पश्यति- उपलभते स पश्यः, स एव पश्यकः-तीर्थकृत् श्रीवर्द्धमानस्वामी तस्य। किम्भूतस्य?, 'उवरयसत्थस्स'त्ति- उपरतशस्त्रस्य, उपरतं-विफलीकृतं द्रव्यभावशस्त्रं यस्यासावुपरतशस्त्रस्तस्य, द्रव्यशस्त्रमायसादिकं, भावशस्त्रं त्वसंयमः कषाया वा, तस्मादुपरतः। शस्त्रोपरमकार्यं दर्शयन् पुनरपि तीर्थकरविशे-

षणमाह–' पलियंतकरस्स 'त्ति–पर्यन्तं कर्म्मणां संसारस्य वा करोतीति पर्यन्तकरस्तस्यैव दर्शनमिति । एवमन्योऽपि तदुक्तानुसारीति उपदर्शयितुमाह–' आयाणं सगडब्भि'त्ति– आदीयते गृह्यते-आत्मप्रदेशैः सह श्लिष्यते अष्टप्रकारं कर्म्म येन तदादानं–हिंसाद्याश्रवद्वारं, सगडब्भित्ति– स्वकृतभित्– स्वकृतमनेकजन्मोपात्तं कर्म्म भिनत्तीति स्वकृतभित्, यो हि आदानं कर्म्मणां कषायादि निरुणद्धि सोऽपूर्वकर्म्मप्रतिषिद्धप्रवेशः सन् कर्म्मणां भेत्ता भवतीति भावः । इति दर्शयितुमाह—

सम्पूर्णैकवस्तुज्ञाता सर्ववस्तु जानातीति प्रदर्शनम् ।

" जे एगं जाणइ से सव्वं जाणइ जे सव्वं जाणइ से एगं जाणइ "

' जे एगमि'त्यादि– यः कश्चिद् विशेषितः एकं परमाण्वादिद्रव्यं पश्चात्पुरस्कृतपर्यायं स्वपरपर्यायं वा जानाति स सर्वं स्वपरपर्यायं जानाति । अतीतानागतपर्यायद्रव्यपरिज्ञानस्य समस्तवस्तुपरिच्छेदाऽविनाभावित्वात् । इदमेव हेतुहेतुमद्भावेन लगयितुमाह–' जे सव्व ' मित्यादि– यः सर्वं संसारोदरविवरवर्त्ति वस्तु जानाति स एकं घटादि वस्तु जानाति, तस्यैवातीतानागतपर्यायभेदैस्तत्तत्स्वभावापत्त्या अनाद्यनन्तकालतया समस्तवस्तुस्वभावगमनादिति । सर्वज्ञाश्चोपदेशं ददतीति दर्शयति—

"सव्वओ पमत्तस्स भयं, सव्वओ अपमत्तस्स नत्थि भयं, जे एगं नामे से बहु नामे जे बहु नामे से एगं नामे, दुक्खं लोगस्स जाणित्ता वंता लोगस्स संजोगं जंति धीरा महाजाणं, परेण परं जंति, नावकंखंति जीवियं "

' सव्वतो ' इत्यादि– सर्वतः– सर्वप्रकारेण द्रव्यादिना यद्भयं प्रमत्तस्य–प्रमादवतो भयं–भीतिः । प्रमत्तो हि कर्म्म चिनोति; तद्विपरीताऽप्रमत्तस्य नास्ति भयं । अप्रमत्तता कषायाभावाद् भवतीत्येवं गतप्रत्यागतसूत्रेण हेतुहेतुमद्भावं

अप्रमादिनो भयाभाव इति सूचनम् ।

दर्शयति–'जे एगं नामे'त्यादि, यो हि प्रवर्द्धमानशुभाध्यवसायः एकं–अनन्तानुबन्धिनं क्रोधं नामयति–क्षपयति स बहूनपि मानमायादीन् नामयति। मोहनीयं चैकं यो नामयति स शेषा अपि प्रकृतीर्नामयति। यो वा बहून् स्थितिविशेषान्नामयति सोऽनन्तानुबन्धिनमेकं नामयति। अत उच्यते, यो बहुनामः स एव परमार्थत एकनामः। नाम इति क्षपकोऽभिधीयते उपशामको वा। मोहनीयसद्भावे च जन्तूनां बहुदुःखसंभव इति दर्शयति–'दुक्ख' मित्यादि– दुःखमसातोदयं लोकस्य भूतग्रामस्य 'जाणित्ता'–ज्ञात्वा दुःखाभावो भवति तथा विदध्यादित्याह–'वन्ता' इत्यादि वान्त्वा–त्यक्त्वा लोकस्य–आत्मव्यतिरिक्तस्य धनपुत्रशरीरादेः संयोगं–ममत्वसम्बन्धं, यान्ति–गच्छन्ति के? धीराः–कर्म्मविदारणसमर्थाः महायानं–मोक्षं, महच्च तद्यानं च महायानं, यदिवा महद्यानं–सम्यग्दर्शनादित्रयं यस्य स महद्यानो–मोक्षस्तं यान्तीति। अवाप्तमहायानस्य तेनैव भवेन मोक्षावाप्तिरुत पारम्पर्येण? । उभयथाऽपि ब्रूमः। तद्यथा–'परेण परं जंति'–परेण-संयमेनोपदिष्टविधिना परं–स्वर्ग्गादिकं प्राप्य पारम्पर्येणापवर्ग्गमपि यान्ति। एवंविधाश्च कर्म्मक्षपणोद्यता जीवितं कियद्गतं किं वा शेषमित्येवं नावकांक्षन्ति दीर्घजीवितं नाभिलषन्ति, असंयमजीवितं वा नावकाङ्क्षन्तीति। यश्चानन्तानुबन्ध्यादिक्षपणोद्यतः स किमेकक्षयादेवापवर्त्तते उत नेत्याह—

" एगं विगिंचमाणे पुढो विगिंचइ, पुढोवि एगं, सड्ढी आणाए मेहावी लोगं च आणाए अभिसमिच्चा अकुओभयं, अत्थि सत्थं परेण परं, नत्थि असत्थं परेण परं "

'एगे'त्यादि– एकं- अनन्तानुबन्धादिकं क्रोधं क्षपकश्रेण्यारूढः क्षपयन् 'पृथग्'–अन्यदपि दर्शनादिकं क्षपयति।

बद्धायुष्कोऽपि दर्शनसप्तकं यावत्क्षपयति, पृथगन्यदपि क्षपयन् अवश्यमनन्तानुबन्धिनमेकं क्षपयति । कः पुनः क्षपकश्रेणियोग्यो भवतीत्याह–' सड्ढी 'त्ति–श्रद्धा–मोक्षमार्गोद्यमेच्छा वर्तते यस्यासौ श्रद्धावान्, ' आणाए 'त्ति–आज्ञया तीर्थकरप्रणीतागमानुसारेण यथोक्तानुष्ठानविधायी मेधावी–मर्यादाव्यवस्थितोऽप्रमत्तयतिः श्रेण्यर्हो, नो परः । ' लोगं च 'त्ति–लोकं षट्कायाख्यं कषायलोकं वा आज्ञया अभिसमेत्य–ज्ञात्वा लोकस्य कुतश्चिद् भयं न भवति तथा विधेयम् । तच्च भयं शस्त्राद् भवतीति दर्शयति–' अत्थि सत्थं'ति–तत्र द्रव्यशस्त्रं कृपाणादि तत्परेणापि परमस्ति–तीक्ष्णादपि तीक्ष्णतरमस्ति लोहकर्तृसंस्कारविशेषात्, भावशस्त्रपारम्पर्यं तु एकसूत्रान्तरितं स्वत एव प्रत्याख्यानपरिज्ञाद्वारेण वक्ष्यति । यथा च शस्त्रस्य प्रकर्षगतिरस्ति पारंपर्यं वा विद्यते, तथा अशस्त्रस्य नास्तीति दर्शयति–' नत्थि असत्थं 'ति–नास्ति न विद्यते किं तत् ? अशस्त्रं–संयमः तत्परेण परं प्रकर्षगत्यापन्नम् । तथाहि–पृथ्व्यादीनां सर्वत्र तुल्यता कार्या न मन्दतीव्रभेदोऽस्ति । पृथ्व्यादिषु समभावत्वात्सामायिकस्य, अथवा शैलेश्यवस्थासंयमादपि परः संयमो नास्ति, तदूर्ध्वं गुणस्थानाभावादिति भावः । एतदेव प्रतिसूत्रं लगयितव्यमित्याह—

" जे कोहदंसी से माणदंसी, जे माणदंसी से मायादंसी, जे मायादंसी से लोभदंसी, जे लोभदंसी से पिज्जदंसी, जे पिज्जदंसी से दोसदंसी, जे दोसदंसी से मोहदंसी, जे मोहदंसी से गब्भदंसी, जे गब्भदंसी से जम्मदंसी, जे जम्मदंसी से मारदंसी, जे मारदंसी से नरयदंसी, जे नरयदंसी से तिरियदंसी, जे तिरियदंसी से दुक्खदंसी । से मेहावी अभिनिवट्टिज्जा कोहं च माणं च मायं च लोभं च पिज्जं च दोसं च मोहं च गब्भं च जम्मं च मारं च नरयं च तिरियं च दुक्खं च । एयं पासगस्स दंसणं उवरय-

उ० ४
द्रव्य-शस्त्रस्य परम्परा विद्यते न भाव-शस्त्रस्येति निरूपणम् ।

सत्थस्स पलियंतकरस्स, आयाणं निसिद्धा सगडब्भि, किमत्थि ओवाहि पासगस्स न विज्जइ ?, नत्थित्ति बेमि ॥ सीउसणिज्जं सम्मत्तं ।

'जे कोहदंसी'त्यादि– यो हि क्रोधं स्वरूपतो वेत्ति, अनर्थपरित्यागरूपत्वाद् ज्ञानस्य, परिहरति च, स मानमपि परिहरति, यः क्रोधं पश्यति स मानमपि पश्यति, एवं सर्वत्राप्यायोज्यं यावत्स दुःखदर्शीति, सुगमत्वान्न विव्रियते । साम्प्रतं क्रोधादेः साक्षान्निवर्त्तनमाह–' से मेहावी 'त्ति– स मेधावी अभिनिवर्त्तयेत्, किं तत् ? क्रोधं यावद् दुक्खं स्वमनीषिकापरिहारार्थमाह–' एयं पासगस्स ' इत्यादि–एतदनन्तरोक्तमुद्देशादेरारभ्य पश्यकस्य–तीर्थकृतो दर्शनमभिप्रायः । किम्भूतस्य ? उपरतशस्त्रस्य पर्यन्तकृतः । पुनरपि किम्भूतोऽसौ ?, ' आयाणं 'ति—आदानं– कर्म्मणामुपादानं निषेध्य पूर्वस्वकृतकर्म्मभिदऽसाविति । किं चास्य भवतीत्याह–' किमत्थी 'त्यादि–पश्यकस्य–केवलिनः ' उपाधिः '–द्रव्यतो हिरण्यादि, भावतोऽष्टविधं कर्म्म स उपाधिः, किमस्ति ? आहोश्विन्न विद्यते ?, ' नत्थि 'त्ति– नास्तीत्येतदऽहं ब्रवीमि, सुधर्म्मस्वामी जम्बूस्वामिनं कथयति,–यन्मया भगवदन्तिकेऽश्रावि न पुनः स्वमत्या । इतिश्रीचन्द्रगच्छाम्भोजदिनमणीनां श्रीमहेश्वरसूरिसर्वशिरोमणीनां पट्टे श्रीअजितदेवसूरिविरचितायां दीपिकायां श्रीमदाचाराङ्गशीतोष्णीयाध्ययनं तृतीयं समाप्तम् ॥

अथ चतुर्थं सम्यक्त्वाध्ययनं प्रारभ्यते । तत्रायमभिसम्बन्धः । अनन्तराध्ययनत्रयेण सप्तपदार्थात्मकं तत्त्वमभिहितम् । तत्वार्थश्रद्धानं च सम्यक्त्वमुच्यते, तदत्र प्रतिपाद्यते । अस्योद्देशाः चत्वारः । प्रथमोद्देशके सम्यग्दर्शनं १, द्वितीये सम्यग्ज्ञानं २ तृतीये अज्ञानतपोव्युदासेन सम्यक्त्वस्वरूपः ३ चतुर्थे तु सम्यक्चारित्रम् । तदस्य सूत्रम्—

" से बेमि जे य अतीता जे य पडुप्पन्ना जे य आगमिस्सा अरहंता भगवंतो ते सव्वे एवमाइक्खन्ति एवं भासंति एवं पण्ण-

विंति एवं परूविंति– सव्वे पाणा सव्वे भूया सव्वे जीवा सव्वे सत्ता न हंतव्वा, न अज्जावेयव्वा, न परिघितव्वा न परियावेयव्वा, न उद्दवेयव्वा, एस धम्मे सुद्धे निइए सासए समिच्च लोयं खेयण्णेहिं पवेइए, तंजहा–उट्ठिएसु वा अणुट्ठिएसु वा उवट्ठिएसु वा अणुवट्ठिएसु वा उवरयदंडेसु वा अणुवरयदंडेसु वा सोवहिएसु वा अणोवहिएसु वा संजोगरएसु वा असंजोगरएसु वा, तच्चं चेयं तहा चेयं अस्सिं चेयं पवुच्चइ ”

‘ से बेमी ’त्यादि–सोऽहं ब्रवीमि– यच्छ्रद्धाने सम्यक्त्वं भवति तदहं तत्त्वं ब्रवीमीति । ‘जेय अतीता’ इत्यादि– येऽतीता अतिक्रान्ताः, ये चागामिनस्ते चैवं प्ररूपयन्तीति–सम्बन्धः । अर्हन्ति पूजासत्कारादिकमर्हन्तः, भगा ऐश्वर्याद्युपेता भगवन्तस्ते सर्वे एवमाचक्षते एवमाचक्षिरे एवमाख्यास्यन्ति । एवं सामान्यतः सदेवमनुजायां पर्षदि अर्द्धमागधभाषया भाषंते । एवं प्रकर्षेण जीवादीन्पदार्थान् ज्ञापयन्ति प्रज्ञापयन्ति । एवं सम्यग्ज्ञानदर्शनचारित्राणि मोक्षमार्गः, मिथ्यात्वाऽविरतिप्रमाद-कषाययोगा बन्धहेतवः, इत्यादिना प्रकारेण प्ररूपयन्ति । किमेतद् ?, दर्शयति–‘सव्वे पाण’त्ति–सर्वे प्राणा इति प्राणिनः, सर्वे भूताः, भवन्ति भविष्यन्ति अभूवन् इति भूतानि-चतुर्दशभूतग्रामान्तःपातीनि, सर्वे जीवाः सर्वे सत्वाः सातासातसुखदुःखवेदिनः, सर्वेऽप्येकार्थाः । एते च सर्वे न हन्तव्या दण्डकशादिभिः । ण अज्जावेयव्वा–नाज्ञापयितव्याः–प्रसह्याभियोगदानतः, णपरिघेतव्वा– परिग्राह्या-भृत्यदासदास्यादिममत्वपरिग्रहतः, न परितावेयव्वा–शारीरमानसपीडोत्पादनतः, न उद्दवेयव्वा नोपद्रावयितव्याः प्राणव्यपरोपणतः । एस धम्मेत्ति– एषोऽनन्तरोक्तः-सर्वे प्राणा न हन्तव्या इत्यादिको, धर्म्मो दुर्गत्यर्गलामुक्तिसोपानदेश्यः । किम्भूतः ?, शुद्धः- पापानुबन्धरहितः, तथा नित्योऽप्रच्युतिरूपः पंचसु विदेहेषु सदाभावात्, शाश्वद्गतिहेतुत्वात्

उ० १
सर्व-
कालिन–
सर्वज्ञो-
पदेश-
स्वरूपम् ।

शाश्वतः। 'समेच्च'त्ति-अमुं च लोकं जन्तुगणाख्यं दुःखसागरावगाढं समेत्य-ज्ञात्वा तदुत्तारणाय खेदज्ञैः जन्तुदुःखविच्छेतृभिः प्रवेदितः-प्रतिपादितः। 'तंजह'त्ति- तद्यथेत्यादिना दर्शयति- उट्ठिएत्ति- उत्थिताः तेषु निमित्तभूतेषु तानुद्दिश्य वा धर्म्मः प्रवेदितः। केन? भगवता। वायणान्तरेऽपि- उपस्थितेषु उपस्थिताः-धर्मशुश्रूषवो जिघृक्षवो वा, तद्विपर्ययेणाऽनुपस्थिताः तेषु ननु भावोपस्थितेषु चिलातिपुत्रादिष्वेव धर्म्मकथा युक्तिमती, अनुपस्थितेषु तु कं गुणं पुष्णाति?, उच्यतेऽनुपस्थितेष्वपीन्द्रनागादिषु विचित्रत्वात् कर्म्मपरिणतेः क्षयोपशमापादनाद् गुणवत्येवेति यत्किञ्चिदेतत्। उवरयदंडेसुत्ति- प्राणिन आत्मानं वा दण्डयतीति दण्डः, स च मनोवाक्कायलक्षणः, उपरतो दण्डो येषां ते, तथा तद्विपर्ययेणाऽनुपरतदण्डास्तेषूभयरूपेष्वपि, तत्रोपरतदण्डेषु तत्स्थैर्यगुणान्तराधानार्थं देशना, इतरेषु तूपरतदण्डत्वार्थमिति। 'सोवधिएसु'- सोपधिना धनधान्यादिपरिग्रहेण वर्त्तन्त इति सोपधिकाः, तद्विपर्ययेणानुपधिकास्तेष्विति। 'संजोगरएसु'त्ति- संयोगः-पुत्रकलत्रादिसम्बन्धस्तत्र रताः, तद्विपर्ययेणाऽसंयोगरताः तेष्विति। तदेवमुभयरूपेष्वपि भगवता देशनाऽकारि। 'तच्चं चेयं'ति तत् तथ्यं-सत्यादि, एवं सम्यग्दर्शनश्रद्धानं विधेयम्। 'अस्सिं चेयं'ति पवुच्चति-एतच्चाऽस्मिन् प्रवचने सम्यग्मोक्षमार्ग्गविधायिनि समस्तदम्भवर्जिते प्रकर्षेण उच्यते प्रोच्यते। ननु यत्र न हिंस्यात् सर्वभूतानीत्यभिधायाऽन्यत्र वाक्ये यज्ञपशुवधाभ्यनुज्ञानात् पूर्वोत्तरबाधेति। तदेवं सम्यक्त्वस्वरूपमभिधाय तदवाप्तौ यद् विधेयं तद्दर्शयितुमाह—

"तं आइत्तु न निहे न निक्खिवे जाणित्तु धम्मं जहा तहा, दिट्ठेहिं निव्वेयं गच्छिज्जा, न लोगस्सेसणं चरे"

'तं आइत्तु' इत्यादि-तत् तत्त्वार्थश्रद्धानलक्षणं सम्यग्दर्शनमादाय-गृहीत्वा तत्कार्याकरणतो न निहेति- न गोपयेत् न

निक्षिपेत् न त्यजेत्। किं कृत्वा ? 'जाणित्तु'–ज्ञात्वा किं ? धर्म्मं-श्रुतचारित्राख्यं 'जहातहा'–यथावस्थितमित्यर्थः। श्रुतचारित्राख्यं धर्म्ममवगम्य किं कुर्यादित्याह–'दिट्ठेहिं' ति–दृष्टैरिष्टानिष्टरूपैर्निर्वेदं गच्छेत्- विरागं कुर्यात्, शब्दैः श्रुतैः रसैरास्वादितैः गन्धैराघ्रातैः स्पर्शैः स्पृष्टैः सद्भिरेवं भावयेद्, यथा शुभेतरता परिणामवशाद् भवतीत्यतः कस्तेषु रागो द्वेषो वेति ?। किञ्च–'नो लोगस्से'त्यादि–लोकस्य–प्राणिगणस्य एषणा–अन्वेषणा दृष्टेषु शब्दादिषु प्रवृत्तिः, इतरेषु तु हेयबुद्धिः तां न चरेद्-नो विदध्यात्। यस्य चैषा लोकैषणा नास्ति, तस्यान्याप्यप्रशस्ता मतिर्नास्तीति दर्शयति—

"जस्स नत्थि इमा जाई अण्णा तस्स कओ सिया ? दिट्ठं सुयं मयं विण्णायं जं एयं परिकहिज्जइ, समेमाणा पलेमाणा पुणो पुणो जाइं पकप्पंति"

'जस्स नत्थी'त्यादि– यस्य साधोरिमा ज्ञातिः–लोकैषणा बुद्धिर्नास्ति- न विद्यते तस्याऽन्या सावद्यारम्भप्रवृतिः कुतः स्यादिति ?, एवमुक्तं भवति– भोगेच्छारूपां लोकैषणां परिजिहीर्षोर्नैव सावद्यानुष्ठानप्रवृत्तिरुपजायते, तदर्थत्वात् तस्या इति। शिष्यमतिस्थैर्यार्थमाह-'दिट्ठ' मित्यादि– यन्मया कथ्यते तत् सर्वज्ञैर्दृष्टं, ततः शुश्रूषुभिः श्रुतं, एतद् भव्यानां मतं, ज्ञानावरणीयक्षयोपशमाद् विशेषेण ज्ञातं विज्ञातं। 'जं एयं' ति– यदेतत् मत्कथिते सम्यक्त्वादिके भवता यत्नवता भाव्यमिति। ये पुनर्यथोक्तकारिणो न स्युः, ते कथम्भूता भवेयुरित्याह–'समेमाणा' इत्यादि– तस्मिन्नेव मनुष्यादिजन्मनि शाम्यन्तो–गार्ध्येनात्यर्थमासेवां कुर्वन्तः, 'पलेमाणा'–प्रलीयमानाः पौनःपुन्येन एकेन्द्रियादिकां जातिं प्रकल्पयन्ति–संसाराऽविच्छित्तिं विदधतीत्यर्थः। यद्येवं ततः किं ? कर्त्तव्यमित्याह—

लोकैषणाऽभावे सावद्य-प्रवृत्त्यभाव इति सूचा।



१०

"अहो य राओ य जयमाणे धीरे सया आगयपण्णाणे पमत्ते बहिया पास अप्पमत्ते सया परिक्कमिज्जासित्ति बेमि" ॥ सम्मत्तस्स पढमोद्देसो ।

'अहो य राओ'त्ति अहोरात्रं यतमान एव यत्नवानेव मोक्षाध्वनि, धीरः परिषहोपसर्गाऽक्षोभ्यः, सदा-सर्वकालं आगतं स्वीकृतं प्रज्ञानं-सदसद्विवेको यस्य स तथा। 'पमत्ते'ति-प्रमत्तान्-असंयतान् सर्वतीर्थिकान् परतीर्थिकान् वा धर्माद् बहिर्व्यवस्थितान् 'पास'त्ति-पश्य-अवलोकय। तान् तथाभूतान् भगवत्प्रणीतसमाचाराचरणविमुखान् दृष्ट्वा, किं कुर्यादित्याह-अपमत्तेति-अप्रमत्तः सन् मोक्षाध्वनि सदा पराक्रमेथाः। ब्रवीमि पूर्ववत्, इति सम्यक्त्वाध्ययने प्रथमोद्देशकः

अथ प्रथमोद्देशके सम्यग्दर्शनं प्रतिपादितं। तच्च सम्यग्ज्ञानाद् भवति तदर्थं द्वितीयोद्देशकः प्रारभ्यते। तस्यादिमं सूत्रम्—

"जे आसवा ते परिस्सवा जे परिस्सवा ते आसवा, जे अणासवा ते अपरिस्सवा जे अपरिस्सवा ते अणासवा, एए पए संबुज्झमाणे लोयं च आणाए अभिसमिच्चा पुढो पवेइयं"

'जे आसवा' इत्यादि- ये आश्रवाः आश्रवत्यष्टप्रकारं कर्म्म यैरारम्भैस्ते आश्रवाः, परिसमन्तात् श्रवति-गलति अष्टविधं कर्म्मेति यैरनुष्ठानैस्ते परिश्रवाः। य एवाश्रवाः कर्म्मबन्धस्थानानि, त एव परिश्रवाः-कर्म्मनिर्जरास्पदानि। इदमुक्तं भवति- यानीतरजनाचरितानि स्रगङ्गनादीनि सुखकारणतया तानि कर्म्मबन्धहेतुत्वादाश्रवाः, पुनस्तान्येव तत्त्वविदां विषयसुखपराङ्मुखानां निःसारतया संसारसरणिदेश्यानीति कृत्वा वैराग्यजनकानि, अतः परिश्रवा निर्जरास्थानानि भरतसगरसंयतिपुण्डरिकादिवत्। सर्ववस्तूनामनैकान्तिकतां दर्शयितुमेतदेव विपर्ययेणाह- य एव परिश्रवाः-निर्जरास्थानानि अर्हत्साधु-

उ० १
आश्रव-
परिश्रवसूत्रपरमार्थ-
दर्शनम्।

तपश्चरणदशविधचक्रवालसमाचार्यनुष्ठानादीनि, तान्येव कर्मोदयावष्टब्धशुभाध्यवसायस्य दुर्गतिमार्गप्रवृत्तसार्थवाहस्य जन्तोर्महाशातनावतः सातर्द्धिरसगौरवप्रवणस्याश्रवा भवन्ति– पापोपादानकारणानि जायन्ते। यावन्ति कर्म्मनिर्जरार्थं संयमस्थानानि असंयमस्थानान्यपि तावन्त्येव, कण्डरीकादिवत्। सरागस्य वनवासोऽपि गृहतुल्यः, निरागस्य गृहमपि तपोवनमिति वचनाद्, यतः–वनेऽपि दोषाः प्रभवन्ति रागिणां गृहेऽपि पञ्चेन्द्रियनिग्रहस्तपः। अकुत्सिते कर्म्मणि यः प्रवर्त्तते, निवृत्तरागस्य गृहं तपोवनमिति। तथाहि–रागद्वेषवासितान्तःकरणस्य विषयसुखोन्मुखस्य दुष्टाशयत्वात्सर्वं संसाराय, पिचुमन्दरसवासितास्यस्य दुग्धशर्करादिकटुत्वापत्तिवत्। सम्यग्दृष्टेस्तु विदितसंसारसमुद्रस्य त्यक्तविषयाभिलाषस्य संजातसंवेगस्य इतरजनसंसारकारणमपि मोक्षायेति भावार्थः। पुनरेतदेव गतप्रत्यागतसूत्रं सप्रतिषेधमाह–'जे अणासवे'त्यादि–आश्रवेभ्योऽन्येऽनाश्रवाः–व्रतविशेषास्तेऽपि कर्म्मोदयादशुभाध्यवसायिनोऽपरिश्रवाः कर्म्मणः। तथा अपरिश्रवाः पापोपादनकारणानि केनचिदुपाधिना प्रवचनोपकारादिना क्रियमाणा अनाश्रवाः–कर्मबन्धनानि न भवन्ति। यद्येवं ततः किमित्याह—"एए पए संबुज्झमाणे'ति–एतान्यनन्तरोक्तानि पदानि ये आश्रवा इत्यादीनि सम्यक्–अविपर्यासेन बुध्यमानः–संबुध्यमानः सन्, 'लोगं च आणाए'त्ति–लोकं जन्तुगणं आश्रवद्वारायातेन कर्म्मणा बद्ध्यमानं तपश्चरणादिना मुच्यमानं 'आज्ञया'–तीर्थकरप्रणीतागमानुसारेण अभिसमेत्य–ज्ञात्वा 'पुढो पवेइयं'ति—पृथक् प्रवेदितं–पृथगाश्रवोपादानं निर्ज्जरोपादानं वा इत्येतच्च ज्ञात्वा, को नाम धर्म्मे चरणं प्रति नोद्यच्छेत्–नोद्यमं कुर्यात् ?, एवं तीर्थकरैः प्रवेदितम्। अथाऽन्योऽपि ज्ञानी परहिताय आवेदयतीत्याह—

"आघाइ नाणी इह माणवाणं संबुज्झमाणाणं संसारपडिवण्णाणं विन्नाणपत्ताणं अट्टावि संता अदुवा पमत्ता अहासच्चमिणं तिबेमि, नाणागमो मच्चुमुहस्स अत्थि, इच्छापणीया वंकनिकेया कालगहीया निचयनिविट्ठा पुढो पुढो जाइं पकप्पयंति"।

'आघाइत्ति'—देशीत्वाद् आख्याति—आचष्टे, इहेति—प्रवचने, केषांचिन्मानवानां, सर्वसंवरचारित्रार्हत्वात्तेषां, उपलक्षणं चैतद् देवादीनां, तत्रापि केवल्यादिव्युदासाय विशेषणमाह—'संसारपडिवन्नाणं'ति—संसारं चतुर्गतिलक्षणं प्रतिपन्नाः संसारप्रतिपन्नाः। तत्रापि ये धर्म्मं भोत्स्यन्ते गृहीष्यन्ते च मुनिसुव्रतस्वामिघोटकदृष्टान्तेन तेषामेवाख्यातीति दर्शयति—'संबुज्झमाणाणं'—यथोपदिष्टं धर्म्मं सम्यगवबुध्यमानानां, पुनः किम्भूतानां ?, 'विण्णाणपत्ताणं'ति—विज्ञानप्राप्तानां—अहितप्राप्तिपरिहाराध्यवसायो विज्ञानं तत्प्राप्ता विज्ञानप्राप्तास्तेषाम्। यथा च ज्ञानी धर्म्ममाचष्टे तथा दर्शयति—'अट्टावि संत'त्ति—विज्ञानं प्राप्ता धर्म्मं कथ्यमानं कुतश्चिन्निमित्तादार्त्ता अपि सन्तः चिलातिपुत्रादय इव, अथवा प्रमत्ता विषयाभिष्वङ्गादिना शालिभद्रादय इव तथाविधकर्म्मक्षयोपशमापत्तेर्यथा प्रतिपद्यन्ते तथाऽऽचष्टे। यदिवाऽऽर्त्ता दुःखिनः, प्रमत्ताः—सुखिनः, तेऽपि प्रतिपद्यन्ते धर्म्मं, किं पुनरपरे ?, एतच्चान्यथा मा मंस्था इति दर्शयितुमाह—'अहासच्च' मित्यादि—सत्यमिदं यन्मया कथितं, इत्येतदहं ब्रवीमि—दुःप्राप्यं प्राप्य सम्यक्त्वं प्रमादो न कार्यः। स्यात् किमालम्ब्य प्रमादो न कार्यस्तदाह—'नाणागमो' इत्यादि—न हि अनागमो मृत्योर्मुखस्य कस्यचिदपि संसारोदरवर्त्तिनोऽस्ति। ये विषयाभिलाषिणो धर्म्मं नावबुद्ध्यन्ते, ते किम्भूता ? भवन्तीत्याह—'इच्छापणीय'त्ति—इच्छया प्रणीताः—स्वेच्छाचारिणः, एवंभूतास्ते वंकनिकेताः—असंयमाश्रयभूता इत्यर्थः, एवंभूतास्ते कालगृहीताः—पौनःपुन्येन मरणभाजः। अथवा ते इच्छाचारिणः कालगृहीताः—

उ० २
आर्त्तप्रमत्तानामपि ज्ञानिना धर्मदेशना कथितेति सूचनम्।

धर्माचरणाय कालो-अवसरो गृहीतो यैस्ते तथा। तथाहि-पाश्चात्ये वयसि परुत्परारि वा अपत्यपरिणयनोत्तरकालं वा धर्म्मं करिष्याम इत्येवं गृहीतकालाः। ये चैवंभूतास्ते निचये निविष्टाः-निचये कर्म्मनिचये तदुपादाने वा सावद्यारम्भनिचये निविष्टा अध्युपपन्नाः। ते किमपरं कुर्वन्तीति दर्शयितुमाह-' पुढो पुढो ' इत्यादि-पृथक् पृथक् एकेन्द्रियादिकां जातिमनेकशः प्रकल्पयन्ति-प्रकुर्वन्ति। पाठान्तरं वा-' एत्थ मोहे पुणो पुणो '-अत्रास्मिन् इच्छाप्रणीतादिके हृषीकानुकूले मोहे कर्म्मरूपे मोहे वा निमग्नाः पुनः पुनः तत्र प्रकुर्वन्ते, येन तदप्रच्युतिः स्यात्। तदप्रच्युतौ च किं स्यादित्याह—

" इहमेगेसिं तत्थ तत्थ संथवो भवइ, अहोववाइए फासे पडिसंवेदयंति, चिट्ठं कम्मेहिं कूरेहिं चिट्ठं परिचिट्ठइ, अचिट्ठं कूरेहिं कम्मेहिं नो चिट्ठं परिचिट्ठइ, एगे वयंति अदुवावि नाणी, नाणी वयंति अदुवावि एगे "

' इहमेगेसिं ' इत्यादि-इहाऽस्मिंश्चतुर्दशरज्ज्वात्मके लोके एकेषां-प्रमादवतां तत्र तत्र नरकादिषु यातनास्थानेषु संस्तवः-परिचयो भूयो भूयो गमनाद् भवति। ततः किमित्याह-' अहोववाइए 'ति—एते एव औपपातिकान्-नारकादिभवान् स्पर्शान्-दुःखानुभवान् प्रतिसंवेदयन्ति-अनुभवन्ति। ' चिट्ठं '-भृशमत्यर्थं क्रूरैः-वधबन्धादिभिः कर्म्मभिः-क्रियाभिः चिट्ठं-भृशमत्यर्थमेव विरूपां दशां वैतरणीतरणासिवनपत्राभिघातशाल्मलीवृक्षालिङ्गनादिजनितामनुभवन् तमस्तमादिस्थानेषु परितिष्ठति। यस्तु नात्यर्थं हिंसादिभिः कर्म्मभिर्वर्त्तते, सोऽत्यन्तवेदनानिचितेष्वपि नरकेषु नोत्पद्यते। स्यात्-क एवं वदतीत्याह-' एगे वयंति 'त्ति-एके-चतुर्दशपूर्वविदादयो वदन्ति-ब्रुवते। अथवाऽपि ज्ञानी वदति, ज्ञानं सकलपदार्थाविर्भावकमस्यास्तीति ज्ञानी स चैतद् ब्रवीति। यद् दिव्यज्ञानी केवली भाषते, श्रुतकेवलिनोऽपि तदेव भाषन्ते। एतद् दर्शयति—

इच्छाचारिणो धर्म्मप्राप्त्यभावः संसारपरिभ्रमणं च।

' णाणी वयन्ति 'त्ति–ज्ञानिनः केवलिनो यद् वदन्ति अथवाऽप्येके–श्रुतकेवलिनो यद् वदन्ति तद् यथार्थभाषित्वादेकमेव । एकेषां सर्वार्थप्रत्यक्षत्वादऽपरेषां तदुपदेशप्रवृत्तेरिति वक्ष्यमाणेऽपि एकवाक्यता । तदाह—

" आवंति केयावंति लोयंसि समणा य माहणा य पुढो विवायं वयंति, से दिट्ठं च णे सुयं च णे मयं च णे विण्णायं च णे उड्ढं अहं तिरियं दिसासु सव्वओ सुपडिलेहियं च णे–सव्वे पाणा सव्वे जीवा सव्वे भूया सव्वे सत्ता हन्तव्वा अज्जावेयव्वा परियावेयव्वा परिघितव्वा उद्दवेयव्वा, इत्थवि जाणह नत्थित्थ दोसो, अणारियवयणमेयं । तत्थ जे आरिआ ते एवं वयासी–से दुद्दिट्ठं च भे, दुस्सुयं च भे, दुम्मयं च भे, दुव्विण्णायं च भे, उड्ढं अहं तिरियं दिसासु सव्वओ दुप्पडिलेहियं च भे, जं णं तुब्भे एवं आइक्खह, एवं भासह, एवं परूवेह, एवं पण्णवेह–सव्वे पाणा ४ हंतव्वा ५, इत्थवि जाणह नत्थित्थ दोसो, अणारियवयणमेयं । वयं पुण एवमाइक्खामो एवं भासामो एवं परूवेमो एवं पण्णवेमो–सव्वे पाणा ४ न हंतव्वा १ न अज्जावेयव्वा २ न परिघितव्वा ३ न परियावेयव्वा ४ न उद्दवेयव्वा ५, इत्थवि जाणह नत्थित्थ दोसो, आरियवयणमेयं । पुव्वं निकाय सययं पत्तेयं पत्तेयं पुच्छिस्सामि, हं भो पवाइया ! किं भे सायं दुक्खं असायं ? समिया पडिवण्णे यावि एवं बूया–सव्वेसिं पाणाणं सव्वेसिं भूयाणं सव्वेसिं जीवाणं सव्वेसिं सत्ताणं असायं अपरिनिव्वाणं महब्भयं दुक्खंति बेमि ॥ " सम्मत्तस्स बीओ उद्देसो समत्तो ।

' आवंति ' इत्यादि—आवंती–यावन्तः, ' केयावंती '– केचन मनुष्यलोके श्रमणपापण्डिकाः ' ब्राह्मणाः ' द्विजातीयाः, ' पुढो 'त्ति–पृथक् पृथक् विवादं वदन्ति, विरुद्धो वादो विवादस्तं । यावन्तः केचन परलोकं ज्ञीप्सवस्ते आत्मीयदर्शनानुरागितया पाराक्यं दर्शनमपवदन्ति । श्रमणा ब्राह्मणा वा यद् विरुद्धवादं वदन्ति तत्सूत्रेणैव दर्शयति– ' से दिट्ठं च

पाषण्डिनां वचनस्यानार्यताप्रदर्शनम् ।

णे' इत्यादि–सेति-तच्छब्दार्थे यदहं वक्ष्ये तद् दृष्टमुपलब्धं दिव्यज्ञानेनाऽस्माभिः, नोऽस्माकं सम्बन्धिना तीर्थकृता आगमप्रणायकेन, श्रुतं वाऽस्माभिर्गुर्वादिसकाशात्, अस्मद्गुरुशिष्यैर्वा तदन्तेवासिभिर्वा मतं–अभिमतं युक्तियुक्तत्वाद् अस्माकमस्मत्तीर्थंकराणां वा । 'विण्णायं च णे'–विज्ञातं च तत्त्वभेदपर्यायैरस्माभिरस्मत्तीर्थकरेण वा । ततश्चोर्ध्वाधस्तिर्यक्षु दशस्वपि दिक्षु सर्वतः–सर्वैः प्रकारैः सुष्ठु प्रत्युत्प्रेक्षितं च–पर्यालोचितं च अस्माभिरस्मत्तीर्थकरेण वा । किं ? तदित्याह–'सव्वे पाणे' इत्यादि–सर्वे प्राणाः सर्वे जीवाः सर्वे भूताः सर्वे सत्त्वाः हन्तव्या आज्ञापयितव्याः परिग्रहीतव्याः परितापयितव्या अपद्रापयितव्याः, अत्रापि– धर्मचिन्तायामप्येवं जानीथ, यथा नास्त्यत्र यागार्थं देवतोपयाचितकतया वा प्राणहननादौ दोषः पापानुबन्ध इति । एवं यावन्तः केचन पाषण्डिका औद्देशिकभोजिनो ब्राह्मणा वा धर्म्मविरुद्धं परलोकविरुद्धं वा वादं भाषन्ते । अयं च जीवोपमर्दकत्वात्पापानुबन्धी अनार्यप्रणीत इत्याह–'अणारियवयणमेयं'ति– अनार्यवचनमेतत्, अनार्याः–क्रूरकर्म्माणः तेषां प्राण्युपघातकारीदं वचनम् । ये तु न तथाभूतास्ते किम्भूतं प्रज्ञापयन्तीत्याह च–'तत्थ जे आरिया' इत्यादि–तत्र–तस्मिन् धर्म्मावसरेऽन्यत्रापि च आर्या–धर्म्माधिकारिणस्ते एवमवादिषुर्यथा–तद् यदनन्तरोक्तं दुर्दृष्टमेतद् युष्माभिर्युष्मत्तीर्थकरेण वा, एवं यावद् दुःप्रत्युत्प्रेक्षितम् । तदेवं दुर्दृष्टादिकं प्रतिपाद्य दुष्प्रज्ञापनानुवादद्वारेण तदभ्युपगमे दोषाविष्करणमाह–'जण्णं तुब्भे' इत्यादि–णं वाक्यालंकारे, यदेतद् वक्ष्यमाणं यूयमेवमाचड्ध्वमित्यादियावत्–अत्रापि यागोपहारादौ जानीथ यूयं, यथा नास्त्येव च प्राण्युपमर्दनानुष्ठाने दोषः पापानुबन्ध इति । तदेवं परवादे दोषाविर्भावनेन धर्मविरुद्धतामाविर्भाव्य स्वमतवादमार्या आविर्भावयन्ति–'वयं पुण' इत्यादि–पुनः शब्दः पूर्वस्माद्विशेषमाह– वयं पुन-

यथा धर्म्मविरुद्धवादो न भवति, तथा प्रज्ञापयामः-सर्वे प्राणा न हन्तव्या इत्यादि । 'एत्थवि जाणह'- अत्राऽपि अस्मदीयवचने नास्ति दोषः । अत्राप्यधिकारे जानीथ यूयं, यथात्र हननादिप्रतिषेधविधौ नास्ति दोषः पापानुबन्धः । सावधारणत्वाद् वाक्यस्य नास्त्येव दोषः । प्राण्युपघातप्रतिषेधाच्चार्यवचनमेतत् । एवमुक्ते सति ते पापण्डिका ऊचुः । भवदीयमार्यवचनं अस्मदीयमनार्यवचनमित्येतन्निरन्तराः सुहृदः प्रत्येष्यन्ति युक्तिविकलत्वात् । तदत्राचार्यो यथा परमतस्यानार्यता स्यात्तथा दिदर्शयिषुः स्ववाग्यन्त्रिता वादिनो न विचलयिष्यन्तीति कृत्वा प्रत्येकमतप्रच्छनार्थमाह-'पुव्व' मित्यादि-पूर्वं-आदावेव 'समय'-आगमं यद् यदीयागमेऽभिहितं तत् निकाच्य-व्यवस्थाप्य पुनस्तद्विरूपापादनेन परमतानार्यता प्रतिपाद्येत्यतस्तदेव परमतं प्रश्नयति; यदिवा पूर्वं प्राश्निकान्निकाच्य ततः पापण्डिकान् प्रश्नयितुमाह-'पत्तेय' मित्यादि-एकमेकं प्रति प्रत्येकं, भोः प्रावादुकाः भवतः प्रश्नयिष्यामि, किं 'मे'-युष्माकं सातं मनआह्लादकारि दुःखं ? उताऽसातं-मनःप्रतिकूलं ?, एवं पृष्टाः सन्तो यदि सातमित्येवं ब्रूयुस्ततः प्रत्यक्षागमलोकबाधा स्यात् । अथ चासातमित्येवं ब्रूयुः, ततः 'समिया'-सम्यक् प्रतिपन्नास्तान् प्रावादुकान् स्ववाग्यन्त्रितानप्येवं ब्रूयात्, अपिः संभावने, सम्भाव्यते एतद्भणनं-यथा न केवलं भवतां दुःखमसातं, सर्वेषां प्राणिनां दुःखमसातं- मनसोऽनभिप्रेतं, 'अपरिनिव्वाणं'ति- अपरिनिर्वाणं अनिर्वृत्तिरूपं महद्भयं दुःखमित्येतत् परिगणय्य सर्वेऽपि प्राणिनो न हन्तव्या इत्यादि वाच्यं, तद्धनने च दोषः, यस्त्वऽदोषमाह- तदनार्यवचनम् । इति अधिकारसमाप्तौ ब्रवीमीति पूर्ववत् इति द्वितीयोद्देशकः समाप्तः ॥

अथ तृतीय आरभ्यते—

उ० २ हिंसाप्ररूपकान्प्रति सुखदुःखप्रश्नकरणद्वारा तद्वचनानार्यतेति प्रकटनम् ।

" उवेहे णं बहिया य लोगं, से सव्वलोगंमि जे केइ विण्णू, अणुवीइ पास निक्खितदंडा, जे केइ सत्ता पलियं चयंति, नरा मुयच्चा धम्मविउत्ति अंजू, आरंभजं दुक्खमिणंति णच्चा, एवमाहु संमत्तदंसिणो, ते सव्वे पावाइया दुक्खस्स कुसला परिण्णमुदाहरंति इय कम्मं परिण्णाय सव्वसो "

पापण्डिलोकोपेक्षको गुणभाजनो भवतीति ।

'उवेहेणं' इत्यादि–एवं पापण्डिलोकं धर्माद् बहिर्व्यवस्थितं ' उवेह 'त्ति–उपेक्षस्व तदनुष्ठानं मा अनुमंस्थाः । चः समुच्चयार्थः, तदुपदेशं अभिगमनपर्युपासनदानसंस्तवादिकं च मा कृथाः । यः पापण्डिलोकोपेक्षकः स कं गुणमवाप्नुयादित्याह– ' से सवलोयंसि ' यः पापण्डिलोकमनार्यवचनमवगम्य तदुपेक्षां विधत्ते, स सर्व्वस्मिन् लोके–मनुष्यलोके ये केचन विद्वांसः सन्ति, तेभ्योऽग्रणीर्विद्वत्तमः स्यादित्यत आह–' अणुवीइ 'त्ति–अनुचिन्त्य–पर्यालोच्य ' पास 'त्ति–पश्य-अवगच्छ, ये केचन लोके निक्षिप्तदण्डाः–निश्चयेन क्षिप्तः कायमनोवाङ्मयः प्राण्युपघातकारी दण्डो यैस्ते विद्वांसो भवन्त्येव । के चोपरतदण्डा ? इत्यत आह–' जे केइ सत्ता पलियं 'ति–ये केचनावगतधर्माणः सत्त्वाः–प्राणिनः ' पलित 'मिति कर्म्म तत् त्यजन्ति, ये चोपरतदण्डा भूत्वाऽष्टप्रकारं कर्म्म घ्नन्ति ते विद्वांसः । के पुनरशेषकर्म्मक्षयं कुर्वन्तीत्याह–' नरे ' इत्यादि नरा मनुष्यास्ते कर्मक्षयकर्त्तारः मनुष्येषु अर्च्याः–पूज्याः नान्ये । अथवा ' मियच्चा '–मृतार्चा-मृतेव मृता संस्काराभावादर्चा–शरीरं येषां ते मृतार्चाः निःप्रतिकर्मशरीरा इत्यर्थः । किञ्च–' धम्मविदु 'त्ति धर्म्मं–श्रुतचारित्राख्यं विदन्तीति धर्म्मविदः, इति हेतौ । यत एव धर्म्मविदोऽत एव ऋजवः–कौटिल्यरहिताः । किमालम्ब्यैतद् विधेयमित्याह–' आरंभजं दुक्खमिदं '–आरम्भाज्जातमारम्भजं किं तत् ? दुःखं ' इदं 'ति–सकलप्राणिप्रत्यक्षं, ' णच्च 'त्ति–ज्ञात्वा मृतार्चा धर्मविद ऋजवश्च भवन्तीति । एतच्च

समस्तवेदिनो भाषन्त इति दर्शयति–' एव 'मित्यादि–एवं-पूर्वोक्तप्रकारेण आहुः–उक्तवन्तः सम्यक्त्वदर्शिनः समस्तदर्शिनो वा । कस्मात् त ऊचुरित्याह–' ते सव्वे ' इत्यादि—यस्मात् सर्वेऽपि सर्वविदः प्रावादिकाः–प्रकर्षेण मर्यादया वदितुं शीलं येषां ते प्रावादिकाः यथावस्थितार्थस्य प्रतिपादनाय वावदूकाः । ' दुक्खकुसल 'त्ति–दुःखस्य–शारीरमानसलक्षणस्य तदुपादानस्य वा कर्म्मणः कुशला निपुणास्तदपनोदोपायवेदिनः सन्तस्ते सर्वेऽपि ज्ञपरिज्ञया परिज्ञाय हेयार्थस्य प्रत्याख्यानपरिज्ञामुदाहरन्ति । ' इय कम्मं परिण्णाय 'त्ति–इत्येवं पूर्वोक्तया नीत्या कर्म्मबन्धोदयसत्कर्मताविधानतः परिज्ञाय ' सर्वशः '–सर्वैः प्रकारैः कुशलाः प्रत्याख्यानपरिज्ञामुदाहरन्ति । यदि नाम कर्म्मपरिज्ञामुदाहरन्ति ततः किं ? कार्यमित्याह–

" इह आणाकंखी पंडिए अणिहे, एगमप्पाणं संपेहाए धुणे सरीरं, कसेहि अप्पाणं जरेहि अप्पाणं–जहा जुन्नाइं कट्ठाइं हव्ववाहो पमत्थइ, एवं अत्तसमाहिए अणिहे, विगिंच कोहं अविकंपमाणे "

'इह आणाकंखी' इत्यादि–इहाज्ञाकांक्षी– इह– प्रवचने आज्ञां भगवद्वचनरूपामाकांक्षितुं शीलमस्येति आज्ञाकांक्षी सर्वज्ञोपदेशानुष्ठायी । यश्चैवम्भूतः स पण्डितो विदितवेद्यः । एवंभूतश्च ' अणिह 'त्ति–अस्निहः–कुटुम्बादिस्नेहरहितः, एवम्भूतः स किं कुर्यादित्याह–'एगमप्पाणं'त्ति–एवम्भूत एकमेवात्मानं धनधान्यादिपरिग्रहव्यतिरिक्तं संप्रेक्ष्य आलोच्य ' धुणे शरीरं' ति–धूनीयात् आत्मव्यतिरिक्तं कर्मशरीरं तद्विधूननं कुर्यादित्यर्थः। ' कसेहि 'त्ति–आत्मानं तपसा कृशं कुरु । तथा ' जरेहि '–शरीरकं जरीकुरु, तपसा तथा कुरु यथा जराजीर्णमिव प्रतिभासते । ' जहा जुण्णाइं ' इत्यादि–यथा जीर्णानि–निःसाराणि काष्ठानि हव्यवाहो–हुताशनः ' पमत्थ 'ति–प्रमथ्नाति प्रकर्षेण शीघ्रं भस्मसात्करोति, तथा त्वमपि, ' एवं अत्तसमाहिए '

ति–एवमनेन पूर्वोक्तविधिना आत्मसमाहितो ज्ञानदर्शनचारित्रोपयुक्तः सन् तपोग्निना कर्मेन्धनानि दहस्व–भस्मसात्कुरु । किम्भूतः सन्, 'अणिहे 'ति–अस्नेहः स्नेहवर्जितः सन्, अत्र स्नेहपदेन रागनिवृत्तिं विधाय द्वेषनिवृत्तिं विधित्सुराह– 'विगिंच 'त्ति–त्यज, कं ? क्रोधमप्रीतिद्वेषलक्षणं, क्रोधाध्मातः कम्पनं करोति अत एव अविकम्पमानः सन् ।

" इमं निरुद्धाउयं संपेहाए, दुक्खं च जाण अदु आगमेस्सं, पुढो फासाइं च फासे, लोयं च पास विफंदमाणं, जे निव्वुडा पावेहिं कम्मेहिं अणियाणा ते वियाहिया, तम्हा अतिविज्जो नो पडिसंजलिज्जासित्ति बेमि ॥ सम्मतस्स तइओ उद्देसो " ।

'इमं निरुद्धाउयंति 'ति–इमं मनुष्यत्वं निरुद्धायुष्कं–निरुद्धं–परिगलितं आयुष्यकं सम्प्रेक्ष्य–पर्यालोच्य क्रोधपरित्यागं कुर्यात् । 'दुक्खं च जाण 'त्ति–क्रोधाद् दुःखमेवोत्पद्यते तज्जानीहि– तज्जनितकर्म्मविपाकापादितं चागामि दुःखं सम्प्रेक्ष्य क्रोधादिकं परित्यजेरित्यर्थः । आगामिदुःखस्वरूपमाह–' पुढो ' इत्यादि–आगामिभवे पृथक् पृथक् सप्तनरकादिषु दुःखान् शीतोष्णादिरूपान् स्पृशेत्–अनुभवेत् । तेन चातिदुःखेन अपरोऽपि लोको दुःखित इत्येतदाह–' लोयं च ' इत्यादि–न केवलं क्रोधादिविपाकादात्मा दुःखान्यनुभवति, लोकं च शारीरमानसदुःखोपपन्नं विस्फन्दमानमस्वतन्त्रमितश्चेतश्च दुःखप्रतिकाराय धावन्तं पश्य विवेकचक्षुषा अवलोकय । ये त्वेवं न, ते किम्भूता भवन्तीत्याह–' जे निव्वुड ' इत्यादि–ये तीर्थंकरोपदेशवासितान्तःकरणा विषयकषायोपशमात् निर्वृत्ताः–शीतीभूताः पापेषु कर्म्मसु, अनिदानाः–निदानरहिताः, ते परमसुखास्पदतया व्याख्याताः, औपशमिकसुखभाक्त्वेन प्रसिद्धा इत्यर्थः । यत एवं ततः किमित्याह–' तम्हातिविज्जो 'त्ति–यस्माद् रागद्वेषाभिभूतो दुःखभाग् भवति, तस्मादतिविद्वान् विदितागमसद्भावः सन् न प्रतिसंज्वलेत्–क्रोधाग्निनात्मानं नोपदीपयेत्–

उ० ३
आयुष्यपरिगलनं दृष्ट्वा क्रोधादिदोषाः त्याज्या इति ।

कषायोपशमं कुर्वित्यर्थः ॥ सम्यक्त्वाध्ययने तृतीयोद्देशकः समाप्तः ॥

अथ चतुर्थोद्देशकः प्रारभ्यते, तस्यादिमं सूत्रम्—

" आवीलए पवीलए निप्पीलए जहित्ता पुव्वसंजोगं हिच्चा उवसमं, तम्हा अविमणे वीरे, सारए समिए सहिए सया जए, दुरणुचरो मग्गो वीराणं अनियट्टगामिणं विगिंच मंससोणियं एस पुरिसे दविए वीरे आयाणिज्जे वियाहिए जे घुणाइ समुस्सयं वसित्ता बंभचेरंसि " ।

' आवीलए ' इत्यादि–आ-इषत्पीडयेत्, अविकृष्टेन तपसा शरीरकमापीडयेत्, एतच्च प्रथमप्रव्रज्यावसरे । ततः उर्ध्वमधीतागमः परिणतार्थसद्भावः सन् प्रकृष्टेन विकृष्टतपसा प्रपीडयेत् । पुनरध्यापितान्तेवासिवर्ग्गः संक्रामितार्थसारः शरीरं तित्यक्षुर्मासार्द्धमासक्षपणादिभिः शरीरं निश्चयेन पीडयेत् निःपीडयेत् । किं कृत्वेति कुर्यादित्याह–' जहित्त 'त्ति–जहित्वा पूर्वसंयोगं त्यक्त्वा धनधान्यपुत्रकलत्रादिकं, ' हिच्चा ' इत्यादि– हित्वा-गत्वा किं तत् ? उपशमं प्रतिपद्यापीडयेत् तपसा शरीरमिति भावार्थः । यतः कर्म्मपीडनार्थमुपशमप्रतिपत्तिः स्यात् । तत्प्रतिपत्तौ चाऽविमनस्कतेत्याह–' तम्हा अविमणे 'त्ति– यस्मात्कर्म्मक्षयाय संयमस्तत्र न चित्तवैमनस्यमिति, तस्मादविमनाः– विगतं भोगकषायादिषु मनो यस्य स विमना न विमना अविमनाः । एवंविधः कः ?, ' वीरे 'त्ति–वीरः कर्माष्टक्षयकृत् । अविमनस्कस्य किं स्यात् ?, तदाह– ' सारए ' इत्यादि–सुष्ठु आ मर्यादया संयमानुष्ठाने रतः सारतः, एवं समित्या समितः, एवं ज्ञानादिसहितः स एव सदा-सततं यतः-यत्नवान् सदायतः । दुरनुचरोऽयं मार्गः केषां ? वीराणां, अनिवर्त्तगामिनां–अनिवर्त्तो मोक्षस्तत्र गन्तुं शीलं येषां

उ० ४
साधोः
कर्मक्षप-
णार्थं तप-
स्याक्रम-
सूचनम् ।

ते अनिवर्त्तगामिनस्तेषां । तथा च तन्मार्गानुचरणं कृतं भवति, तथा दर्शयति–'विगिंच' इत्यादि–मांसशोणितं दर्पकारि विकृष्टतपोऽनुष्ठानादिना विवेचय–पृथक्कुरु–तद्ह्रासं विधेहि । एवं वीराणां मार्गानुचरणं कृतं भवतीति । यश्चैवंभूतः स कं गुणमवाप्नुयादित्याह—' एस पुरिसे ' इत्यादि—एष-मांसशोणितयोरपनेता पुरि शयनात् पुरुषः, द्रवः–संयमः स विद्यते यस्याऽसौ द्रविकः, कर्मरिपुविदारणत्वाद् वीरः । किञ्च—'आयाणिज्जे'त्ति–मांसशोणितयोरपनेता मुमुक्षूणामादानीयो ग्राह्य आदेयवचनश्च व्याख्यात इति । कश्चैवंभूत इत्याह–'जे धुणाइ'त्ति–संयमे स्थित्वा यः समुच्छ्रयं–शरीरं कर्मापचयं वा तपश्चरणादिना धुनाति–कृशीकरोति स आदानीयो व्याख्यातः, वसित्वा–उषित्वा ब्रह्मचर्ये । उक्ता अप्रमत्ताः तद्विधर्मणस्तु प्रमत्तानभिधित्सुराह—

" नित्तेहिं पलिच्छिन्नेहिं आयाणसोयगढिए बाले, अव्वोच्छिन्नबंधणे अणभिक्कंतसंजोए तमंसि अवियाणओ आणाए लंभो नत्थित्ति बेमि " ।

' नित्तेहिं 'ति–नेत्राणि–चक्षुरादीनि इन्द्रियाणि तैः परिच्छिन्नैर्यथाविधविषयग्रहणं प्रति निरुद्धैः, ' आयाण ' इत्यादि–पुनर्मोहोदयादादानश्रोतोगृद्धः–आदीयते सावद्यानुष्ठानेन स्वीक्रियते इत्यादानं कर्म्म संसारबीजभूतं, तस्य श्रोतांसि–इन्द्रियविषया मिथ्यात्वाऽविरतिकषाययोगा वा, तेषु गृद्धोऽध्युपपन्नः स्यात् । कोऽसौ ? बालोऽज्ञः रागद्वेषमोहाभिभूतान्तःकरणः । यश्चादानश्रोतोगृद्धः स किम्भूतः स्यादित्याह–' अव्वोच्छिन्न 'ति अव्यवच्छिन्नं जन्मशतानुवृत्तिबन्धनम्–अष्टप्रकारं कर्म्म यस्य स तथा । किञ्च—'अणभिक्कंत' इत्यादि–अनभिक्रान्तोऽनभिलंघितः संयोगो धनधान्यहिरण्यपुत्रकलत्रादिकृतोऽसंयम-



उ० ४ बालस्य भगवदाज्ञाया अभाव इति ।

संयोगो वा येनासौ अनभिक्रान्तसंयोगः । ' तमंसि ' इत्यादि–मोहात्मके तमसि वर्त्तमानस्यात्महितं मोक्षोपायं वा अविजानानः, ' आणाए लंभो 'ति–आज्ञायाः–तीर्थंकरोपदेशस्य लाभो नास्तीत्येवं तदहं ब्रवीमि । अज्ञानतमसि वर्त्तमानस्य बोधिलाभो नासीन्नास्ति न भावीत्येतदेवाह—

" जस्स नत्थि पुरा पच्छा मज्झे तस्स कुओ सिया ? से हु पन्नाणमंते बुद्धे आरंभोवरए संममेयंति पासह, जेण बंधं वहं घोरं परियावं च दारूणं, पलिछिंदिय बाहिरगं च सोयं, निक्कमदंसी इह मच्चिएहिं, कम्माणं सफलं दट्ठूण तओ निज्जाइ वेयवी "

' जस्स ' इत्यादि–यस्य कस्यचिदज्ञानवतः ' पुरा '–पूर्वजन्मनि बोधिलाभो नास्ति–सम्यक्त्वं नासीत्, पश्चादप्येष्येपि जन्मनि न भावि, मध्ये–मध्यजन्मनि तस्य कुतः स्यात् ? । किञ्च–' सेहु ' इत्यादि–यस्यापार्द्धपुद्गलावर्त्तसंसारोऽस्ति, स एव हुत्ति–निश्चितं प्रज्ञानवान्–प्रकृष्टज्ञानवानित्यर्थः । अत एव बुद्धोऽवगततत्त्वः । यत एवंभूतोऽत एवारम्भोपरतः–सावद्यानुष्ठानरहित इत्यर्थः । एतच्चारम्भोपरमणं शोभनमिति दर्शयन्नाह–' संममेयं ' इत्यादि–यदिदं सावद्यारम्भोपरमणं सम्यक्–शोभनमेतत् सम्यक्त्वमेतदित्येवं ' पासह 'त्ति-पश्यत, एवं ज्ञात्वा–अंगीकृत्वा गृह्णीत यूयं । किमित्यारम्भोपरमणं सम्यगिति ? चेदाह–' जेण बन्ध ' मित्यादि–येन कारणेन सावद्यारम्भप्रवृत्तो बन्धं–निगडादिभिः, वधं कशादिभिः, घोरं· प्राणसंशयरूपं परितापं–शारीरं मानसं दारुणं–असह्यमवाप्नोति । अत आरम्भोपरमणं सम्यक् कुर्यात् । किं कृत्वेत्याह–' पलिछिन्दिय ' इत्यादि–परिछिन्द्य–अपनीय किं तत् ?, ' सोयंत्ति–श्रोतः–पापोपादानं, तच्च बाह्य एव बाह्यकं धनधान्यकलत्रपुत्रादिरूपं हिंसाद्याश्रवद्वारात्मकं वा, चशब्दादान्तरं च रागद्वेषात्मकं विषयपिपासारूपं चेति । किञ्च-' निक-

उ० ४
अज्ञानान्धकारवर्तिनः त्रिकालबोधिलाभाभावप्रदर्शनम् ।

मदंसी'ति–निष्क्रान्तः कर्म्मणो निःकर्म्मा–मोक्षः संवरो वा, तं द्रष्टुं शीलमस्येति निष्कर्म्मदर्शी, 'इह मच्चिएहिं 'ति–इह संसारे मर्त्येषु मध्ये य एव निष्कर्म्मदर्शी स एव बाह्याऽभ्यन्तरश्रोतसश्छेत्ता, इत्यत आह–' कम्माणं ' इत्यादि–सप्रपंचा-शत्या हेतुप्रकृत्या क्रियन्त इति कर्म्माणि–ज्ञानावरणीयादीनि, तेषां सफलत्वं दृष्ट्वा ' ततो 'त्ति– ततस्तस्मात् कर्म्मणः तदु-पादानादाश्रवाद्वा निश्चयेन याति निर्याति निर्गच्छति तत्र विधत्ते । कोऽसौ ? ' वेयवी 'त्ति–वेदवित् वेद्यते सकलं चराचर-मनेनेति वेदः–आगमस्तं वेत्तीति वेदवित् सर्वज्ञोपदेशवर्त्तीत्यर्थः । न केवलं ममैवायमभिप्रायः, किन्तु सर्वेषामपि तीर्थकृताम-यमाशय इति दर्शयितुमाह—

" जे खलु भो ! वीरा ते समिया सहिया सया जया संघडदंसिणो आओवरया अहातहं लोयं उवेहमाणा पाईणं पडिणं दाहिणं उईणं इय सच्चंसि परिचिट्ठिंसु, साहिस्सामो नाणं, वीराणं समियाणं सहियाणं सया जयाणं संघडदंसीण आओवरयाणं अहातहं लोयं समुवेहमाणाणं किमत्थि उवाही पासगस्स न विज्जइ ? नत्थित्ति बेमि ॥ " सम्मत्तं समत्तज्झयणं चउत्थं ॥

' जे खलु भो ' इत्यादि– खलुशब्दो निश्चयार्थे, ये इति-ये केचन अतीतानागतवर्त्तमानाः, भो इत्यामंत्रणे, वीराः कर्म्माष्टविदारणसमर्थाः, समिताः समितिभिः, सहिता ज्ञानादिभिः, सदा यताः–सर्वकालं जितेन्द्रिया इत्यर्थः, 'संघडदंसिणो' त्ति–निरन्तरदर्शिनः शुभाशुभस्य, ' आओवरय 'त्ति–आत्मोपरताः पापकर्म्मेभ्यः, ' अहातहं 'ति– यथा तथावस्थितलोकं चतुर्दशरज्ज्वात्मकं कर्म्मलोकं वोपेक्ष्यमाणाः, ' पश्यन्त :' सर्वासु प्राच्यादिषु दिक्षु व्यवस्थिता इत्येवं प्रकाराः, ' सच्चं 'ति–सत्यमवितथं तपः संयमो वा, ' परिचिट्ठिंसु 'त्ति–तत्र परिचिते स्थिरे तस्थुः । उपलक्षणार्थत्वात् त्रिकालविषयता द्रष्टव्या ।

उ० ४
आगमज्ञः कर्म्माभावोपाये वर्त्तेत इति ।

तत्रातीतकाले अनन्ता अपि सत्ये तस्थुः । वर्त्तमाने पंचदशसु कर्म्मभूमिषु संख्येयास्तिष्ठन्ति । अनागतेऽपि अनन्ता अपि स्थास्यन्ति । तेषां चातीतानागतवर्त्तमानानां सत्यवतां यज्ज्ञानं–योऽभिप्रायः तदहं कथयिष्यामि भवतां, शृणुत यूयम् । किम्भूतानां तेषां वीराणामित्यादीनि विशेषणानि पूर्वोक्तार्थानि सुगमानि । किं भूतं ज्ञानमिति चेदाह–'किमत्थि 'त्ति किं प्रश्ने अस्ति–विद्यते कोऽसौ ? उपाधिः कर्म्मजनितविशेषरूपं, तद्यथा–नारकस्तिर्यग्योनः सुखी दुःखी सुभगो दुर्भग-इत्यादि आहोस्विन्न विद्यते इति परमतमाशंक्य त ऊचुः, 'पासगस्स णत्थि'–पश्यकस्य सम्यग्वादादिकमर्थं पूर्वोपात्तं पश्यतीति पश्यः पश्य एव पश्यकः तस्य कर्म्मजनितोपाधिर्न विद्यते इत्येतदनुसारेणाऽहमपि ब्रवीमि न स्वमनीषिकयेति । गतः सूत्रानुगमस्तद्गतौ च समाप्तश्चतुर्थोद्देशक इति समाप्तं सम्यक्त्वाध्ययनं चतुर्थमिति ॥ श्रीचन्द्रगच्छाम्भोजदिनमणीनां श्रीमहेश्वरसूरिसर्वसूरिशिरोमणीनां पट्टे श्रीअजितदेवसूरिविरचितायां श्रीमदाचारांगदीपिकायां श्रीसम्यक्त्वाध्ययनं समाप्तम् ॥

उक्तं चतुर्थाध्ययनं, साम्प्रतं लोकसाराख्यं पंचमाध्ययनं प्रारभ्यते, तस्य षडुद्देशकास्तस्यादिमं सूत्रम्—

" आवंती केयावंती लोयंसि विप्परामुसंति अट्ठाए अणट्ठाए, एएसु चेव विप्परामुसंति, गुरू से कामा, तओ से मारस्संते, जओ से मारस्संते तओ से दूरे, नेव से अंतो नेव दूरे "

'आवंती' इत्यादि– यावन्तः केचन लोके जीवा मनुष्या वा स्युः आरम्भप्रवृत्ताः, विपरामृशन्ति– विविधमनेक-प्रकारं विपरामृशन्ति–उपतापयन्ति दण्डकशाताडनादिकैर्जीवान् घातयन्तीत्यर्थः । किमर्थं ? 'अट्ठाए 'ति– अर्थार्थं–अर्थ्यते धर्मार्थकामरूपैरर्थं–प्रयोजनमुद्दिश्य प्राणिनो घातयन्तीति अर्थार्थं अर्थाद्वा । तत्र धर्मार्थं पृथ्व्यादिकं समारभते । अर्थार्थं

उ० ४
पश्यकस्य नास्त्युपाधिरिति सूचनम् ।

आरम्भप्रवृत्तानां पुनः पुनर्जन्ममरणादिसूचनम्।

कृष्यादि करोति । कामार्थं स्रक्चन्दनाङ्गनादीहते । एवं शेषेष्वपि कार्येषु वाच्यम् । अनर्थाद्वा प्रयोजनमनुद्दिश्यैव प्राण्युपघातादिकं करोति । 'एते'त्ति– एतेष्वपि कार्येषु अर्थं विनाऽपि षड्जीवनिकायान् प्रपीड्यत इत्यर्थः । किमर्थमसौ एवंविधानि कर्म्माणि कुरुते ?, तदुच्यते–' गुरु से काम 'त्ति–तस्याऽविवेकिनः काम्यन्ते इति कामाः शब्दादयः ते गुरवोऽतिदुस्त्यजत्वात् कामा उल्लङ्घयितुं न क्षमाः अतस्तदर्थं कार्येषु प्रवर्तते । तत्प्रवृत्तौ पापोपचयः । पापोपचयाद् यत्स्यात्तदाह–' तओ से ' इत्यादि– ततः षड्जीवनिकायोपघातात् कामगुरुत्वाद् मरणं मारः आयुषः क्षयस्तस्यान्तर्वर्तते, पुनः पुनर्मरणं मारस्तस्मान्न मुच्येतेत्यर्थः । ततः किमपरमित्याह–' तओ से ' इत्यादि–यतोऽसौ मृत्योरन्तस्ततोऽसौ दूरे–अर्थान्तराद् ज्ञानादित्रयलक्षणाद् मोक्षाद्वा दूरे । पुनः सोऽपि किम्भूतो भवतीत्याह–'नेव से ' इत्यादि–नैवासौ विषयसुखस्यान्तर्वर्त्तते, तदभिलाषापरित्यागाच्च नैवाऽसौ दूरे । यस्तु भिन्नग्रन्थिको दुरावाप्तसम्यक्त्वः संसाराब्धितीरवर्त्ती स किमध्यवसायी स्यादित्याह–

" से पासइ फुसियमिव कुसग्गे पणुन्नं निवइयं वाएरियं, एवं बालस्स जीवियं मंदस्स अवियाणओ, कूराइं कम्माइं बाले पकुव्वमाणे तेण दुक्खेण मूढे विप्परियासमुवेइ, मोहेण गब्भं, मरणाइ एई एत्थ मोहे पुणो पुणो "

'से पासई'त्यादि–सोऽपगतमिथ्यात्वपटलः सम्यक्त्वप्रभावावगतसंसारासारः पश्यति । किं तत् ?, 'फुसियमिव 'त्ति–स्पृष्टं कुशाग्रोदकबिन्दुमिव बालस्य–अज्ञानस्य जीवितमिति सम्बन्धः । तत् किम्भूतमित्याह–'पणुन्नं'ति– प्रणुन्नं– अनवरतापरापरोदकपरमाणूपचयात्प्रणुन्नं– प्रेरितं वातेन ईरितं चलमानं निपतदेव निपतितं दार्ष्टान्तिकं सूचयति । एवममुना प्रकारेण कुशाग्रस्थितजलबिन्दुपतनमिव बालस्याऽलब्धपरमार्थस्य जीवितं, स चाज्ञानत्वाद् जीवितं बहु मन्यते । यत एव बालोऽत

॥ १२५ ॥

एव मन्दः– सदसद्विवेकविकल इत्यर्थः । अतएव परमार्थं ‘ अवियाणउ ’त्ति– न जानाति । अतः परमार्थमजानन् एवंभूतः जीवितमेव पश्यतीति भावः । परार्थमजानानश्च यत्कुर्यात्तदाह– ‘ कूराइ ’मित्यादि– क्रूराणि कर्म्माणि हिंसानृतस्तेयादीनि अष्टादशपापस्थानानि सकललोकचमत्कृतिकारीणि बालोऽज्ञः प्रकुर्वाणः, तेन क्रूरकर्म्मोपादितेन दुःखेन मूढोऽविवेकी विपर्यासमेवोपयाति– अनन्तजन्ममरणलक्षणं विपर्यासं कथ्यते, तमुपैति– प्राप्नोति । किञ्च– ‘ मोहेण ’त्ति– मोहेनाऽज्ञानेन मोहनीयकर्म्मणा वा मोहितः सन् कर्म्म बध्नाति, तेन कर्म्मबन्धेनानन्तशो गर्भमवाप्नोति । ‘ एत्थ मोहे ’त्ति–अत्राऽस्मिन् मोहे पौनःपुन्येन अनादिकमपर्यन्तं चातुर्गतिकं संसारं पर्यटति । किञ्च––

“ संसयं परिआणओ संसारे परिन्नाए भवई, संसयं अपरियाणओ संसारे अपरिन्नाए भवइ ”

‘संसयं’ इत्यादि– संशयं– अर्थानर्थगतं परिजानतो हेयोपादेयप्रवृत्तिः स्यात्, इत्येतदेव परमार्थतः संसारपरिज्ञानमिति दर्शयति– तेन संशयं परिजानता संसारश्चतुर्गतिकः तदुपादानं वा मिथ्यात्वाविरत्यादि अनर्थरूपतया परिज्ञातं भवति ज्ञपरिज्ञया, प्रत्याख्यानपरिज्ञया तु परिहृतमिति । यस्तु पुनः संशयं न जानाति, स तु संसारमपि न जानातीति दर्शयितुमाह– ‘ संसयमपरिजाणउ ’त्ति– संशयं सन्देहं द्विविधमप्यऽपरिजानतो हेयोपादेयप्रवृत्तिर्न स्यात्, तदप्रवृत्तौ च संसारोऽनित्योऽशुचिरूपो व्यसनोपनिपातबहुलो निःसारो न ज्ञातो भवति । कुतः पुनरेतद् निश्चीयते, यथा तेन संसारः परिज्ञात इति १ ॥

“ जे छेए से सागारियं न सेवइ, कट्टु एवमवियाणओ बिइया मंदस्स बालया, लद्धा हुरत्था पडिलेहाए आगमित्ता आणविज्जा अणासेवणयत्ति बेमि ”

संसारपरिज्ञानवतो मैथुनसेवा-नास्तीति।

'जे छेए' इत्यादि– यश्छेको निपुण उपलब्धपुण्यपापः, स सागारिकं– मैथुनं न सेवते त्रिकरणशुद्धेन, स एव यथावस्थितसंसारवेदी। यस्तु पुनर्मोहिनीयोदयात् पार्श्वस्थादिकः तत्सेवते, सेवित्वा च सातगौरवभयात् किं कुर्यादित्याह– 'कट्टु' इत्यादि– रहसि मैथुनप्रसङ्गं कृत्वा पुनर्गुर्वादिना पृष्टः सन्नपलपति। तस्य चैवमकार्यमपलपतोऽविज्ञापयतो वा किं स्यादित्याह– 'बिइया' इत्यादि– मन्दस्य– विवेकरहितस्य एकमकार्यसेवनमियं द्वितीया बालता– अज्ञानता। एकतो मैथुनसेवनं कृतं, द्वितीयं गुरुणा पृष्टः अलीकजल्पनं तदकरणतथा वा पुनरनुत्थानमिति। 'लद्धा हुरत्थ'त्ति– लब्धानपि कामान् 'हुरत्थे' बहिस्तद्विपाकं प्रत्युत्प्रेक्ष्य चित्ताद् बहिः कुर्यात्। 'आगमेत्ता'– आगम्य– ज्ञात्वा विषयानुषङ्गं नरकादिगमनं, तदनासेवनयाऽपरान् 'आणवेज्जा'– आज्ञापयेत्, स्वतोऽपि परिहरेदित्येतदऽहं ब्रवीमि तदाह—

"पासह एगे रूवेसु गिद्धे परिणिज्जमाणे, इत्थ फासे पुणो पुणो, आवंती केयावंती लोयंसि आरंभजीवी, एएसु चेव आरंभजीवी, इत्थवि बाले परिपच्चमाणे रमई पावेहिं कम्मेहिं असरणे सरणंति मन्नमाणे इहमेगेसिं एगचरिया भवइ, से बहुकोहे बहुमाणे बहुमाए बहुलोभे बहुरए बहुनडे बहुसढे बहुसंकप्पे आसवसत्ती पलिउच्छन्ने उट्ठियवायं पवयमाणे, मा मे केइ अदक्खू अन्नाणपमायदोसेणं सययं मूढे धम्मं नाभिजाणइ, अट्टा पया माणव! कंमकोविया जे अणुवरया अविज्जाए पलिमुक्खमाहु आवट्टमेव अणुपरियट्टंतित्ति बेमि" ॥ आवंतीए पढमोद्देसो समत्तो ॥

'पासह' इत्यादि– हे जना यूयं पश्यत! एके–केचन कामाभिलाषिणोऽपुष्टधर्म्माणः रूपेषु–वनितांगसौन्दर्येषु गृद्धान्– अध्युपपन्नान् सतः 'परिनिज्झत्ति'– परिनिज्यमानान् नरकादियातनास्थानेषु परिणीयमानान् प्राणिन इति। ते चेन्द्रियानुव-

त्तिनः संसारान्तः किमाप्नुयुरित्याह–'एत्थफासे' इत्यादि–अत्राऽस्मिन् संसारे इन्द्रियवशगः सन् कर्म्मपरिणतिरूपान् स्पर्शान् पौनःपुन्येनाप्नुयादित्यर्थः । कोऽसौ ? एवंभूतः स्यादित्याह–'आवंती'त्यादि–यावन्तः केचन गृहस्था लोके आरम्भजीविनस्ते पौनःपुन्येन दुःखान्यऽनुभवेयुरित्यर्थः । 'एतेसु'त्ति एतेषु सावद्यारम्भप्रवृत्तेषु गृहस्थेषु शरीरयापनार्थं वर्त्तमानस्तीर्थिकः पार्श्वस्थादिर्वा आरंभजीवी–सावद्यानुष्ठानवृत्तिः पूर्वोक्तदुःखभाग्भवति । योऽप्यवाप्य सम्यक्त्वरत्नं लब्ध्वापि मोक्षैककारणं विरतिपरिणामं सफलतामनीत्वा कर्म्मोदयात् सोऽपि सावद्यानुष्ठायी स्यादित्याह–'एत्थवि बाले' इत्यादि–अत्रापि जिनप्रणीताभ्युपगते बालो रागद्वेषाकुलितः 'परितप्पमाणे'त्ति–परितप्यमानः विषयादिषु रमते, कैरपि पापैः कर्म्मभिः विषयार्थं सावद्यानुष्ठाने धृतिं विधत्ते । किं कुर्वाण इत्याह–'असरण' मित्यादि–पापकर्म्मभिस्तप्यमानः कुत्राऽपि परिपच्यमानः सावद्यानुष्ठानमशरणमेव शरणमिति मन्यमानो भूयो भूयो नानावेदना अनुभवेदिति । किञ्च–'इहमेगेसि' मित्यादि– इह मनुष्यलोके एकेषां चरणं–चर्या एकाकिनो विहरणं भवति विषयकषायनिमित्तं । यस्यैकचर्या स्यात्, स किम्भूतः स्यादित्याह–'से बहु कोहे' त्यादि– स विषयाभिलाषुको बहुक्रोधः बहुमानः बहुमायी बहुलोभः, अतएव बहुरजो बहुपापः, अथवा बहुषु आरंभादिषु रतो बहुरतः, अत एव च बहुनटः– नटवद् भोगार्थं बहून् वेषान् विधत्त इति बहुनटः । तथा बहुभिः प्रकारैः शठो बहुशठः, तथा च बहुसंकल्पः–संकल्पाः कर्त्तव्याध्यवसायाः, इत्येवं चौरादीनामपि एकचर्या वाच्या । स एवम्भूतः किमवस्थः स्यादित्याह–'आसव' इत्यादि–आश्रवेष्वारम्भादिषु सक्तं–संगः तद्विद्यते यस्याऽसावाश्रवसक्ती हिंसाद्यनुषङ्गवान् । पुनः किम्भूतः–'पलिउ' इत्यादि–पलितं कर्म्म तेनावच्छिन्नः कर्म्माच्छादित इत्यर्थः । स चैवम्भूतः किं

संसारस्वरूपानभिज्ञस्यैकाकिविचरणादिदोषा बहव इति ।

ब्रूयादित्याह–'उट्ठिय' इत्यादि–धर्म्मचरणायोद्यत उत्थितस्तद्वादं प्रवदन् स्वतीर्थिकोऽप्येवं यथाऽहं धर्म्मचरणायोद्यत इत्येवं प्रवदन् कर्म्मणाऽवच्छाद्यते। स चाजीविकाभयात्कथं प्रवर्त्तत इत्याह–'मा मे' इत्यादि–मा मां केचन अन्येऽद्राक्षुरवद्यकारिणमित्यतः प्रच्छन्नमकार्यं विदधाति। 'अन्नाण'त्ति–एतच्चाज्ञानदोषेण प्रमाददोषेण वा विधत्ते। किञ्च–'सययं'सततमनवरतं मूढो–मूर्खः धर्मश्रुतचारित्राख्यं नाभिजानाति न विवेचयतीत्यर्थः। यद्येवं ततः किमित्याह–'अट्टा' इत्यादि–आर्त्ता विषयकषायैः, प्रज्ञायन्त इति प्रज्ञाः जन्तवः, हे मानवाः! मनुजस्यैवोपदेशार्हत्वान्मानवग्रहणं, कर्म्मणि अष्टप्रकारे कोविदा, न धर्म्मानुष्ठाने। के पुनस्त इत्याह–'जे अणुव' इत्यादि– ये केचनानिर्दिष्टनामानोऽनुपरताः– सावद्यानुष्ठानेभ्योऽनिवृत्ताः, 'अविज्जाए'ति–विद्या ज्ञानदर्शनचारित्ररूपा, न विद्या अविद्या–मोक्षमार्गविकलाः, अविद्यातः परिसमन्तान्मोक्षमाहुस्ते धर्म्मं नाभिजानीते इति सम्बन्धः। धर्म्ममजानानाश्च किमाप्नुयुरित्याह–'आवट्ट' इत्यादि–आवर्त्तं– संसारं भूयो भूयो पर्यटन्ते–परिवर्त्तन्ते इत्यर्थः, प्रथमोद्देशकः समाप्तः ॥

अविद्यावादिनो धर्ममजानानाः संसारे परिभ्रमन्ति।

अथ द्वितीयोद्देशकः प्रारभ्यते, तत्रादिमं सूत्रम् ॥

"आवन्ती केयावन्ती लोए अणारंभजीविणो तेसु, एत्थोवरए तं झोसमाणे, अयं संधीति अदक्खू, जे इमस्स विग्गहस्स अयं खणेत्ति अन्नेसी एस मग्गे आरिएहिं पवेइए, उट्ठिए नो पमायए, जाणित्तु दुक्खं पत्तेयं सायं पुढोछंदा इह माणवा पुढो दुक्खं पवेइयं से अविहिंसमाणे अणवयमाणे, पुट्ठो फासे विपणुन्नए ॥ "

'आवन्ती' इत्यादि– यावन्तः केचन मनुष्यलोके अनारम्भजीविनः– अनारम्भेन जीवितुं शीलमित्यनारम्भजीविनोऽ-

अनारम्भ-जीवि स्वरूप-प्रदर्शनम्।

नगाराः समस्तारम्भनिवृत्ता इत्यर्थः। संयमशरीरपालनार्थमनवद्यभोजिनः। यद्येवं ततः किमित्याह–'एत्थोवरए'त्ति–अत्राऽस्मिन् सावद्यारम्भे कर्त्तव्ये उपरतः संकुचितगात्रः। पापारम्भादुपरतः किं कुर्यात् ?, 'तं झोस' इत्यादि– तत् सावद्यानुष्ठानसमायातं कर्म्म झोषयन्– क्षपयन् मुनिभावं भजत इति। किमभिसन्धायात्रोपरतः स्यादित्याह– 'अयं संधी'त्यादि–अयं आर्यक्षेत्रसुकुलोत्पत्तिश्रद्धासंवेगलक्षणः सन्धिरवसरो मिथ्यात्वक्षयानुदयलक्षणो, अथवा कर्म्मविवरसन्धिरित्येनं स्वात्मन्यवस्थितमद्राक्षीत् भवान्, अतः क्षणं न प्रमादयेत्– विषयविमुखो भूयादित्यर्थः। अप्रमत्तः कः स्यादित्याह–'जे इमस्स' इत्यादि–उपलब्धतत्त्वोऽस्य विग्रहस्य शरीरस्य, तस्याऽयं क्षणः सुखदुःखात्मकः एवम्भूतश्च भावीत्येवं क्षणान्वेषणशीलः सोऽन्वेषी सदाऽप्रमत्तः स्यादिति। अयं मार्ग्गः केन कथित इत्याह–'एस मग्गे' इत्यादि– एषो मोक्षसाधनलक्षणो मार्ग्गः आर्यैर्वीतरागैः प्रवेदितः प्रतिपादित इत्यर्थः। 'उट्ठिए'त्ति– ज्ञात्वा प्राणिनां प्रत्येकं दुःखं तदुपादानं वा कर्म्म तथा प्रत्येकं सातं च मन आह्लादकारि ज्ञात्वा समुत्थितो न प्रमादयेत्। न केवलं दुःखं कर्म्म वा, प्रत्येकं तदुपादानभूतोऽध्यवसायोऽपि प्राणिनां भिन्न एवेति दर्शयितुमाह–'पुढो' इत्यादि– पृथग् विभन्नः छंदोऽभिप्रायो येषां ते पृथक्छन्दाः– नानाकर्मबन्धाध्यवसायस्थानाः, इहेति संसारे के ते ? मानवा मनुष्याः, उपलक्षणत्वादन्येऽपि संज्ञिनां पृथक्संकल्पत्वात् तत्कार्यं कर्म्मापि पृथगेव, तत्कारणमपि दुःखं नानारूपं पवेइयं– प्रवेदितं– कथितं दुःखं सर्व्वेषां पृथक् प्रवेदितम्। नाऽन्यकृतमन्य उपभुंक्ते। स्वकृतभोक्तारः सर्व्वेऽपि प्राणिन इत्येतन्मत्वा किं कुर्यादित्याह–'से अविहिंसमाणे' इत्यादि– सोऽनारम्भजीवी प्रत्येकं सुखदुःखाध्यवसायी प्राणिनो विविधैरुपायैरहिंसन्, तथा अनपवदन्– मृषावादमब्रुवन्, एवं परस्वमगृह्णन्, इत्या-

योज्यम् । एतद्विधायी किमपरं कुर्यादित्याह—' पुट्ठो फासे ' इत्यादि— स एवं महाव्रतव्यवस्थितः सन् स्पृष्टः परीषहोपसर्गैस्तान् तत्कृतान् शीतोष्णादिस्पर्शान् दुःखस्पर्शान् वा तत्सहिष्णुतया अनाकुलो भवभावनादिभिः प्रेरयन्नात्मानं भावयेत् । यः परीषहान् सहति स किं गुणः स्यादित्याह—

" एस समिया परियाए वियाहिए, जे असत्ता पावेहिं कम्मेहिं उदाहु ते आयंका फुसंति, इति उदाहु धीरे ते फासे पुट्ठो अहियासइ, से पुव्विं पेयं पच्छापेयं भेउरधम्मं विद्धंसणधम्ममधुवं अणिइयं असासयं चयावचइयं विप्परिणामधम्मं पासह एयं रूवसंधिं "

' एस समिया ' इत्यादि—एषोऽनन्तरोक्तो यः परीषहाणां प्रणोदकः समिया— सम्यक्पर्यायः वियाहिएति— व्याख्यातो नापर इति । तदेवं परीषहोपसर्गाक्षोभ्यतां प्रतिपाद्य व्याधिसहिष्णुतां प्रतिपादयन्नाह—' जे असत्ता ' इत्यादि— ये समतृणमणिलेष्टुकाञ्चनाः ' पावेहिं 'ति—पापेषु कर्मसु अशक्ताः— अक्षमाः । ' उदाहु '—कदाचित् तान् तथाभूतान् साधून् ' आतंकाः ' आशुजीवितापहारिणः शूलादयो व्याधिविशेषाः स्पृशन्ति— अभिभवन्ति । यदि नामैवं ततः किमित्याह— ' इति उदाहु धीरे ' इत्यादि—इत्येतद् वक्ष्यमाणमुदाहृतवान् कोऽसौ ? धीरो—धीः—बुद्धिस्तया राजते स च तीर्थकृद् गणधरो वा । किं तदुदाहृतवान् इत्याह—' ते फासे ' इत्यादि— तैरातंकैः स्पृष्टः सन् तान् दुःखाननुभवन् व्याधिविशेषापादितान् अधिसहते । किं कृत्वा ? ' से पुव्विपेयमि 'त्यादि—एतादृशं दुःखं पूर्वभवेऽपि भुक्तमस्ति, एतादृशमसातजनितं केवलिभिर्भुक्तमस्ति, सनत्कुमारदृष्टान्तेन मयैवैतत्सोढव्यमित्याकलय्य नोद्विजितव्यम् । अपि च— एतदौदारिकं शरीरं मृन्मयामघटादपि निस्सारतमम् । सर्वदा विशरारुं इति दर्शयन्नाह—' भिउरधम्म 'मित्यादि— भिद्यत इति भिदुरं, स धर्मोऽस्य शरीरस्येति भिदु-

उ० २
परीषहादिप्राप्तौ शरीरस्वरूपविचारणां कृत्वा तद्दुःखं सहनीयमिति ।

रधर्म्मं, पुनः किम्भूतम् ?, ' विद्धंसणधम्मं '–विध्वंसधर्म्मं पाणिपादाद्यवयवविध्वंसनात् । तथा ' अधुवं '–सूर्योदयवदऽध्रुवं, तथा ' अणिइयं '–अनित्यकं भुक्तान्नवत् । तथा ' असासयं '–अशाश्वतं–गजभुक्तकपित्थफलमध्यसारवत् । ' चओवचइयं'– इष्टाहारोपभोगतयोपष्टम्भाच्चयः, तदभावेन तद्विघटनादपचयः, चयापचयौ विद्यते यस्य तत् चयापचयिकम् । अत एव ' विप्परिणामधम्मयं '– विविधपरिणामोऽन्यथात्मको धर्मः स्वभावो यस्य तत् विपरिणामधर्म्मकं । एतादृशस्य शरीरस्य का मूर्छा ?, नास्य कुशलानुष्ठानमृतेऽन्यथा साफल्यमित्येतदेवाह–' पासह ' इत्यादि–पश्यतैनं पूर्वोक्तं रूपसन्धिं भिदुरधर्म्मा-द्याघ्रातौदारिकं । दृष्ट्वा च विविधातङ्कजनितान् स्पर्शानध्यासयेदिति । एतत्पश्यतश्च यत्स्यात्तदाह—

" समुप्पेहमाणस्स इकाययणरयस्स इह विप्पमुक्कस्स नत्थि मग्गे विरयस्सत्ति बेमि "

' समुप्पेह ' इत्यादि– सम्यगुत्प्रेक्षमाणस्य– पश्यतः अनित्यताघ्रातमिदं शरीरमित्येवमवधारयतो नास्ति मार्ग इति सम्बन्धः । ' एकाययणरयस्स '– एकायतनस्य– समस्तपापारम्भेभ्यः आत्मा आयत्यते–आनियम्यते यस्मिन् कुशलानुष्ठाने वा यत्नवान् क्रियते इत्यायतनं–ज्ञानादित्रयं, एकमद्वितीयमायतनमेकायतनं तत्र रतस्तस्य न विद्यते नरकतिर्यग्गतिरूपो मार्गः । कस्य ? ' विरयस्स '–विरतस्य हिंसाद्याश्रवद्वारेभ्यो निवृत्तस्य इति अधिकारसमाप्तौ ब्रवीमीति पूर्ववत् सुधर्म्मास्वा-म्याह । साम्प्रतमविरतवादिनं प्रतिपादयन्नाह—

" आवंती केयावंती लोगंसि परिग्गहावंति, से अप्पं वा बहुं वा अणुं वा थूलं वा चित्तमंतं वा अचित्तमंतं वा एएसु चेव परि-ग्गहावंती, एतदेव एगेसिं महब्भयं भवइ, लोगवित्तं च णं उवेहाए, एए संगे अवियाणओ " ॥

॥ १३२ ॥ 'आवंती' इत्यादि– यावन्तः केचन लोके परिग्रहवन्तः स्युस्त एवम्भूतपरिग्रहसद्भावादित्याह– 'से अप्पं वा' इत्यादि– तत्– द्रव्यं यत्परिगृह्यते, तद् अल्पं वा स्तोकं वा स्यात् कपर्दकादि, बहुं वा स्यान्नवविधपरिग्रहादि, तच्च चित्तवद् अचित्तवद्वेति। एतेन च परिग्रहेण परिग्रहवन्तः सन्तः एतेष्वेव परिग्रहवत्सु गृहस्थेष्वन्तर्वर्त्तिनो व्रतिनोऽपि स्युः। एतच्चा- (उ० २ परिग्रहो महाभय-)
ल्पादिपरिग्रहेण परिग्रहाभिमानिनां चाहारशरीरादिकं महतेऽनर्थायेति दर्शयन्नाह –'एवमेगेसि' मित्यादि–एतदेवाल्पबहुत्वा- (मिति सू-)
दिपरिग्रहेण परिग्रहत्वमेकेषां परिग्रहवतां नारकादिगमनहेतुत्वाद् महाभयं भवति। यतः–परिग्रहो महाभयमतोऽपदिश्यते। (चनम्।)
'लोगवित्तं' इत्यादि– लोकस्य– असंयतलोकस्य वित्तं– द्रव्यं लोकवृत्तं वा आहारादिसंज्ञारूपं, 'उवेहाए' ति– उपेक्ष्य ज्ञात्वा ज्ञपरिज्ञया प्रत्याख्यानपरिज्ञया परिहरेत्। तत्परिहर्तुश्च यत्स्यात्तदाह–'एए संगे' ति– एतान्–अल्पादिसंयोगान् शरीराहारादिसङ्गान् वा अविजानतः, अकुर्वाणस्य वा, तत्परिग्रहजनितं महाभयं न स्यात्। किञ्च—

"से सुपडिबद्धं सूवणीयंति नच्चा पुरिसा परमचक्खू विपरिक्कम्मा, एएसु चेव बंभचेरंति वेमि, से सुयं च मे अज्झत्थयं च मे–बंधपमुक्खो अज्झत्थेव, इत्थ विरए अणगारे दीहरायं तितिक्खए, पमत्ते बहिया पास, अपमत्तो परिव्वए, एयं मोणं सम्मं अणुवासिज्जासित्ति वेमि" ॥ लोगसारस्स द्वितीयोद्देसो ॥

'से सुपडिबद्धे' ति– से तस्य परिग्रहकर्तुः सुष्ठु प्रतिबद्धं, सुप्रतिबद्धं सुष्ठूपनीतं सुज्ञानादि, इत्येतत् ज्ञात्वा, हे पुरुष! हे मानव! 'परमचक्खू'– परमं ज्ञानचक्षुर्यस्याऽसौ परमचक्षुर्मोक्षैकदृष्टिर्वा सन् विविधं तपोनुष्ठानविधिना संयमे कर्म्मणि वा पराक्रमस्व। अथ किमर्थं पराक्रमणोपदेश इत्यत आह–'एएसु चेव' इत्यादि– ये इमे परिग्रहविरताः परमचक्षुषश्चैतेष्वेव ॥ १३३ ॥

परमार्थतो ब्रह्मचर्यं, नान्येषु नवविधब्रह्मचर्यगुप्त्यभावात्। इत्यधिकारसमाप्तौ ब्रवीमि। अत्र यत्कथितं कथयिष्यामि तदहं सर्वज्ञोपदेशादित्याह–'से सुअं च मे' इत्यादि– तच्च कथितं यच्च कथयिष्यामि, तत् श्रुतं च मया तीर्थंकरसकाशात्। तथा आत्मन्यधि अध्यात्मं–ममैतच्चेतसि व्यवस्थितम्। किं तदध्यात्मनि स्थितमिति दर्शयति–'बन्धपमोक्खो' इत्यादि– बन्धात् प्रमोक्षो बन्धप्रमोक्षः, तथा अध्यात्मन्येव– ब्रह्मचर्ये व्यवस्थितस्यैवेति। किञ्च–'एत्थ विरए'त्ति– अत्रास्मिन् परिग्रहजिघृक्षिते विरतः, कोऽसौ ? अनगारः, स एवंभूतो दीर्घरात्रं–यावज्जीवं परिग्रहाभावात्। एवंविधस्य क्षुत्पिपासादिकमागच्छति तत् तितिक्षेत– सहेत। पुनरप्युपदेशदानायाह–'पमत्ते बहिय'त्ति– प्रमत्तान् विषयादिभिः प्रमादैर्बहिर्धर्म्माद् व्यवस्थितान् पश्य परतीर्थिकादीन्। दृष्ट्वा च किं कुर्यादिति दर्शयति–'अपमत्तो परिव्वए'ति– अप्रमत्तः सन् संयमानुष्ठाने परिव्रजेदिति। किञ्च–'एयं मोण'मित्यादि– एतत्पूर्वोक्तं संयमानुष्ठानं मौनं सर्वज्ञोक्तं सम्यगनुवासयेः– प्रतिपालयेः। इतिरधिकारसमाप्तौ ब्रवीमीतिं पूर्ववत्। लोकसाराध्ययने द्वितीयोद्देशकः॥ अथ तृतीय आरभ्यते अस्यादिमं सूत्रम्—

"आवंति केयावंति लोयंसि अपरिग्गहावंती एएसु चेव अपरिग्गहावंती, सुचा वई मेहावी पंडियाण निसामिया समियाए धम्मे आरिएहिं पवेइए जहित्थ मए संधी झोसिए एवमन्नत्थ संधी दुज्झोसए भवइ, तम्हा बेमि नो निहणिज्ज वीरियं॥"

'आवंति' इत्यादि– यावन्तः केचन लोके अपरिग्रहवन्तो विरता यतयः, ते सर्वे एतेषु चाल्पादिषु द्रव्येषु त्यक्तेषु सत्सु अपरिग्रहवन्तो भवन्ति, यदि वैतेष्वेव षट्सु जीवनिकायेषु ममत्वाभावात् अपरिग्रहा भवन्ति। कथमपरिग्रहभावं भवतीति चाह–'सोचा वई' इत्यादि वाचं–तीर्थंकरागमरूपां श्रुत्वा मेधावी– मर्यादावान्, 'पंडियाण' इत्यादि– पण्ड-

उ० २
साक्षात् श्रुतमित्यादि प्रदर्श्य मौना भिवासनाकार्येति प्रकटनम्।

तानां विधिनियमात्मकं वचनं निशम्य सचित्ताचित्तपरिग्रहत्यागादऽपरिग्रहो भवति। किम्भूतस्तैर्धर्म्मः प्रवेदित इत्याह– 'समियाए' इत्यादि– शमतया– समशत्रुमित्रतया। किंभूतैः? 'आरिएहिं'– आर्यैः– वीतरागैश्च प्रवेदितः– कथितः। स्याद् अन्यैरपि स्वाभिप्रायेण धर्म्माः प्रवेदिता एवेत्यतस्तद्व्युदासार्थं भगवानेवाह–'जहेत्थे'त्यादि– यथाऽत्र मया ज्ञानादिको मोक्षसन्धिः 'झोसिउ'त्ति– सेवितः। अतो य एव भगवद्वचनानुयायी स एव मोक्षमार्गो नान्यः। एतदेवाह– 'एवमन्नत्थे'त्यादि– यथाऽत्र मया सन्धिर्झोषितः, एवमन्यत्र– अन्यपाषण्डिकमार्गे न सन्धिः–कर्म्मसन्ततिरूपो दुर्झोषो भवति– दुःक्षयो भवति, असमीचीनतया तदुपायाभावात्। अतो भगवद्वचनविकला धर्म्मकरणी मोक्षाध्वगमनयोग्या न भवति। यतः– जं अन्नाणी कम्मं खवेइ बहुआइं वासकोडिहिं। तं नाणी तिगुत्तो खवेइ उसासमित्तेणं ॥ १ ॥ ततः किमित्याह– 'तम्हा बेमि'– यथास्मिन्मार्ग्गे व्यवस्थितेन मयाऽपि विप्रकृष्टतरेण तपसा कर्म्म क्षपितं, ततोऽन्योऽपि साधुः संयमानुष्ठाने वीर्यं नो निहन्येत्– नो निगूहयेत्, अनिगूहितबलवीर्यो भूयात्। एतदहं ब्रवीमि:इत्येतद् वर्द्धमानस्वाम्याह। सुधर्म्मस्वाम्यपि स्वशिष्याणां कथयति स्म। कश्चैवम्भूतः स्यादित्याह—

"जे पुव्वुट्ठाई नो पच्छानिवाई, जे पुव्वुट्ठाई पच्छानिवाई, जे नो पुव्वुट्ठाई नो पच्छानिवाई सेऽवि तारिसिए सिया, जे परिन्नाय लोगमन्नेसयंति"

'जे पुव्वुट्ठाइ' इत्यादि– यः कश्चिद् विदितसंसारस्वभावतया धर्म्मचरणैकप्रवणमनाः पूर्वं प्रव्रज्यावसरे संयमानुष्ठाने-नोत्थातुं शीलमस्येति पूर्वोत्थायी, पश्चाच्च श्रद्धासंवेगतया विशेषेण वर्द्धमानपरिणामो नो निपाती, सिंहतया निष्क्रान्तः सिंह-

भगवत्कथित एव मोक्षमार्गः तत्र वीर्यंस्फोरणीयमिति।

तया विहारी च गणधरादिवत् प्रथमो भङ्गः। द्वितीयं भंगं सूत्रेणैव दर्शयति– यः पूर्वोत्थायी पश्चाद् निपाती, नंदिषेणवत्, कश्चिद् दर्शनतोऽपि गोष्ठामाहिलवत्। तृतीयभंगस्याभावादनुपादानं स चायं– नो पूर्वोत्थायी पश्चान्निपातीति, तथाहि– उत्थाने सति निपातः चिन्त्यते सति धर्म्मिणि धर्म्मचिन्ता, तदुत्थानप्रतिषेधे च दूराच्छादितैव निपातचिन्ता। चतुर्थभंगदर्शनायाह–' जे णो पुव्वुट्ठाई '–यो हि नो पूर्वोत्थायी न पश्चान्निपाती सोऽविरत एव, गृहस्थः सन् नोत्थायी भवति, सम्यग्विरतेरभावात्। शाक्यादयो वा चतुर्थभंगपतिता द्रष्टव्याः। एतदेव दर्शयति–' सेवि तारिसए 'त्ति–सोऽपि शाक्यादिगणो महाव्रताभावेन सावद्ययोगानुष्ठानतया तादृश एव, अत एव नो पूर्वोत्थायी नो पश्चान्निपाती गृहस्थतुल्य एव। सर्वदा सारंभकत्वेन उभयथाप्यसंवृत्तत्वादुदायिनृपमारकवत्। अन्येऽपि ये सावद्यानुष्ठायिनस्तेऽपि तादृक्षा एवेति दर्शयति–' जे परिन्नाय ' इत्यादि– येऽपि स्वयूथिकाः पार्श्वस्थादयो द्विविधयापि परिज्ञया लोकं परिज्ञाय पुनः पचनपाचनाद्यर्थं तमेव लोकमन्वाश्रितास्तेऽपि तादृशा एवेति। स्वमनीषिकापरिहारार्थमाह—

" एयं नियाय मुणिणा पवेइयं, इह आणाकंखी पंडिए अणिहे, पुव्वावररायं जयमाणे, सया सीलं सुपेहाए सुणिया भवे अकामे अझंझे, इमेण चेव जुज्झाहि किं ते जुज्झेण वज्झओ ? "

' एयं नियाये 'त्यादि–एतद् यदुत्थानादिकं प्रागुपन्यस्तं केवलज्ञानावलोकेन ' नियाय '-ज्ञात्वा मुनिना तीर्थकृता प्रवेदितं-कथितम्। इदं पुनरेव प्रवेदितमित्याह–' इह आणाकंखी 'त्ति– इहास्मिन् मौनीन्द्रप्रवचने स्थितः सन् आज्ञां– तीर्थकरोपदेशं आकांक्षितुं शीलमस्येत्याज्ञाकांक्षी आज्ञानुसारमार्ग्गप्रवर्तकः, स किम्भूतः ?, ' अणिह 'त्ति–अनिहःनिस्नेहः–

रागद्वेषविकलः, पुनः किम्भूतः ? 'पुव्वावर' इत्यादि—पूर्वरात्रं रात्रेः प्रथमो यामः, अपरः रात्रेः पाश्चात्यो यामः, एतद् यामद्वयमपि यतमानः–सदाचारमाचरन् मध्यवर्त्तियामद्वयमपि यथोक्तविधिना स्वपन् वैरात्रिकं विदध्यात् । रात्रियतनाप्रतिपादनेन दिवाऽपि प्रतिपादितैव भवति यतना । 'सदासीलं'ति-सदा-सर्वकालं शीलमष्टादशभेदभिन्नं संयमं वा, अथवा शीलं चतुर्द्धा, तद्यथा–महाव्रतसमाधानं १ तिस्रो गुप्तयः २ पचेन्द्रियदमः ३ कषायनिग्रहः ४ इत्येतत्संप्रेक्ष्य मोक्षांगतयाऽनुपालयेत् । कथं शीलवान् भवेदेतदाह–' सुणिया भवे'ति–श्रुत्वा भवेदऽकामः, 'अझंझः'–मायालोभेच्छारहितः । तेनाऽहिंसकः सत्यवादीत्याद्यपि द्रष्टव्यम् । अहं च भवदुपदेशात् सिंहेनाऽपि युद्ध्येऽशेषकर्म्ममलकलंकरहितः स्यां, तथैव सत्यमार्ग्गमुपदिशत इत्युक्ते भगवानाह–' इमेणं चेव जुज्झाहि '– अनेनैवौदारिकेण शरीरेण इन्द्रियात्मकेन विषयसुखपिपासुना स्वैरिणा सार्द्धं युध्यस्व-सन्मार्ग्गावतरणतो वशीकुरु । किमपरेण–बाह्यतस्ते युद्धेन । अन्तरारिषड्वर्गकर्मरिपुजयाद्वा सर्वं सेत्स्यति भवतो, नातोऽपरं दुष्करमस्तीति । किन्त्वियमेव सामग्री अगाधसंसारार्णवे पर्यटतो भवकोटिसहस्रेष्वपि दुष्प्रापेति दर्शयितुमाह—

"जुद्धारिहं खलु दुल्लहं, जहित्थ कुसलेहिं परिन्नाविवेगे भासिए, चुए हु बाले गब्भाइसु रज्जइ, अस्सिं चेयं पवुच्चइ, रूवंसि वा छणंसि वा, से हु एगे संविद्धपहे मुणी, अन्नहा लोगमुवेहमाणे, इय कम्म परिण्णाय सव्वसो से न हिंसइ, संजमई नो पगब्भइ, उवेहमाणो पत्तेयं सायं, वण्णाएसी नारभे कंचणं सव्वलोए एगप्पमुहे विदिसिपइन्ने निव्विण्णचारी अरए पयासु" ॥

'जुद्धारिह'मित्यादि– खलुरवधारणे, दुर्लभमेव दुःप्राप्यमेवेति, तच्च भावयुद्धार्हं शरीरं लब्ध्वा कश्चित् तेनैव भवेन कश्चि-

त्सप्ताष्टभवैर्भरतवत् कश्चिदपार्द्धपुद्गलपरावर्त्तेन सिद्ध्यति । अपरो न सेत्स्यत्येव । किमित्येवं ?, यत आह–' जहित्थ ' इत्यादि–यथाऽत्र कुशलैर्वीतरागैरत्राऽस्मिन् संसारे परिज्ञाविवेकः बुद्धिः– विज्ञानताविशेषः भाषितः–कथितः । स च तथैवाङ्गीकर्त्तव्यो बुद्धिमद्भिरिति । तदेव परिज्ञाननानात्वं दर्शयन्नाह–' चुए हु बाले ' इत्यादि– दुर्लभं मानुषत्वं प्राप्य च मोक्षैकहेतुं धर्म्मं, पुनरपि कर्म्मोदयात् तस्माच्युतो बालो–अज्ञो गर्भादिषु रज्यते– गर्भ आदिर्येषां ते गर्भादयस्तेष्वेव गार्द्ध्यमुपयाति, यथैभिः सार्द्धं मम वियोगो मा भूत् इत्यध्यवसायी भवति । पुनरप्याह–' अस्सिं चेय 'मित्यादि–अस्मिन्नित्यार्हते प्रवचने एतत्पूर्वोक्तं प्रोच्यते, एतच्च वक्ष्यमाणमत्रैवोच्यते इति दर्शयन्नाह–' रूवंसि ' वा इत्यादि– रूपे चक्षुरिन्द्रियगोचरे वाशब्दात् स्पर्शरसादौ च ' छणंसि वा '– क्षणनं–हिंसनं तत्र प्रवर्त्तते, वाशब्दादनृतस्तेयादौ च, बालो विषयादिनिमित्तं धर्म्मभ्रष्टः सन् गर्भादिषु रज्यते, अत्रार्हते मार्ग्गे इदमुच्यते । यस्तु गर्भहेतुं ज्ञात्वाऽऽश्रवेभ्यो निवर्त्तते स किम्भूतः स्यादित्याह–' सेहु एगे ' इत्यादि– स जितेन्द्रियो, हुरवधारणे, स एवैकोऽद्वितीयो, मुनिर्जगत्त्रयमन्ता । पुनः किम्भूतः ?, ' संविद्धपहे '– संविद्धपथः–सम्यग्विद्धस्ताडितः पन्था–मोक्षमार्ग्गो ज्ञानादिको येन स तथा, स एव मुनिः क्षुण्णमोक्षमार्ग्गः । किञ्च–' अन्नहा ' इत्यादि–अन्येन प्रकारेण अन्यथा, विषयकषायाभिव्याप्तं हिंसादिषु प्रवृत्तं लोकमुत्प्रेक्ष्यमाणः संविद्धपथो मुनिः स्यात् । लोकं वाऽन्यथोत्प्रेक्ष्य किं कुर्यादित्याह– ' इतिकम्म 'मित्यादि– इति पूर्वोक्तं कर्म्महेतुभिर्यद् बद्धं कर्म्म तदुपादानं च सर्वतः परिज्ञाय– ज्ञात्वा सर्वतः परिहरेत् । कथं परिहरतीत्याह–' से ण हिंसइ ' इत्यादि– स कर्म्मपरिहर्ता त्रिविधेनापि– कायादियोगेनापि न हिनस्ति । किञ्च–' संयमति '–आत्मानं संयमयति, सप्तदशप्रकारं संयमं करोति । ' नो पगब्भ-

उ० ३
मोक्षयोग्य-
सामग्र्याः
प्राप्ति-
दुर्लभेति
सूचनम् ।

ति'–गर्भधार्ष्ट्ये, असंयमं कृत्वा नैव प्रगल्भते, न धार्ष्ट्यमुपयाति, न धृष्टतामवलम्बते इत्यर्थः। किमालम्ब्यैतत्कुर्यादित्याह–'उवेहमाणे'ति–उत्प्रेक्ष्यमाणो–अवगच्छन् प्रत्येकं प्राणिनां सातं–मनोऽनुकूलं, नान्यसुखेनाऽन्यः सुखी नापि परदुःखेन दुःखी, अतः प्राणिनो न हिंस्यात्। प्रत्येकं सातमिष्टमवलोकयमानः किं कुर्यादित्याह–'वण्णाएसी'–वर्ण्यते–प्रशस्यते येन स वर्णः-साधुकारः तदादेशी–वर्णाभिलाषी सन्नारभते कंचन पापारम्भं सर्वस्मिन्नपि लोके। किम्भूतः सन्नेतत्कुर्यादित्याह–'एगप्पमुहे'ति-एको-मोक्षोऽशेषमलकलङ्करहितत्वात् संयमो वा रागद्वेषाभावात्, तत्र प्रगतं मुखं यस्य स तथा, मोक्षे तदुपाये वा दत्तैकदृष्टिर्न कंचन पापमारभते। किञ्च–'विदिसिपइन्ने'–विदिक्–मोक्षसंयमाभिमुखा दिक्, ततोऽन्या विदिक्, तां प्रकर्षेण तीर्णो विदिक्तीर्णः। स चैवम्भूतोऽप्यारम्भी न भवेत्। पुनः किम्भूतः? 'निविन्नचारी'–चरणं चारोऽनुष्ठानं निर्विण्णस्याचारोऽस्यास्तीतिनिर्विण्णचारी। कुत इति चेत्, यतः प्रजासु अरतः, प्रजायन्त इति प्रजाः प्राणिनः, तत्राऽरत इति, तदारम्भनिवृत्तो निर्ममो वा, स निर्विण्णचार्येव भवति। यः पुनः प्रजासु अरक्तः, स किम्भूतः स्यात्? इत्याह—

" से वसुमं सव्वसमन्नागयपन्नाणेणं अप्पाणेणं अकरणिज्जं पावकम्मं तं नो अन्नेसी, जं संमंति पासहा तं मोणंति पासहा, जं मोणंति पासहा तं संमंति पासहा, न इमं सक्कं सिढिलेहिं अदिज्जमाणेहिं गुणासाएहिं वंकसमायारेहिं पमत्तेहिं गारमावसंतेहिं, मुणी मोणं समायाए धुणे सरीरगं, पंतं लूहं सेवंति वीरा, सम्मत्तदंसिणो एस ओहन्तरे मुणी, तिण्णे मुत्ते विरए वियाहिएत्ति बेमि ॥ "
आवन्तीए तइयोद्देसो सम्मत्तो।

'से वसुम'मित्यादि–वसुर्द्रव्यं स चात्र संयमः, तद् विद्यते यस्य स निवृत्तारम्भो मुनिर्वसुमान्। स च–'सव समन्ना'

इत्यादि–स च समन्वागतप्रज्ञानः–सम्यक्तया अन्वागतं क्रमागतं प्रज्ञानं पदार्थाविर्भावकं यस्यात्मनः स तथा। एवंविधेनापि अकरणीयं पापकर्म्ममिति, तन्नो कदाचिदप्यन्विपति, परमार्थोपलब्धस्वरूपेणात्मना न सावद्यनुष्ठायी स्यादिति भावः। ' जं सम्मं ' इत्यादि–यदिदं सम्यग्ज्ञानं सम्यक्त्वं वा तत् सहचरितं अनयोरेकत्र भावात्। ज्ञानग्रहणेऽपि सम्यक्त्वग्रहणं ज्ञेयं, यदिदं सम्यग्ज्ञानं सम्यक्त्वं वेत्येतत् पश्यत तन्मुनेर्भावो मौनं संयमानुष्ठानमित्येतत्पश्यत। यच्च मौनमित्येतत् पश्यत, तत्सम्यग्ज्ञानं नैश्चयिकसम्यक्त्वं वा पश्यत, सम्यक्त्वज्ञानचरणानामेकताऽध्यवसेयेति भावार्थः। एतच्च न येन केनचिद् शक्यमनुष्ठातुमित्याह–' न इमं सक्क ' मित्यादि–नैतत् सम्यक्त्वादित्रयं सम्यगनुष्ठातुं शक्यं, कैः? शिथिलैः अल्पपरिणामतया मन्दवीर्यैः–संयमतपसोर्धृतिदृढिमरहितैः। किम्भूतैः? ' अदिज्जमाणेहिं '–आद्रीयमानैः–पुत्रकलत्रादिस्नेहातिजलेनाद्रीयमानैः स्नेहाकुलैरित्यर्थः। पुनः किम्भूतैः? ' गुणासाएहिं '–गुणाः शब्दादयः, त एव स्वादो येषां ते गुणास्वादास्तैः तथा। पुनः किम्भूतैः? ' वंकसमायारेहिं '–वक्रसमाचारैः–मायाविभिरित्यर्थः। किम्भूतैः–' पमत्तेहिं '–प्रमत्तैः विषयकषायादिपञ्चलक्षणैः। आगारमावसद्भिः–सेवमानैः सावद्यारम्भार्जनपरैः एतादृशैर्मौनमनुष्ठातुमशक्यं, अशक्यमिति सर्वत्र योज्यम्। कथं तर्हि शक्यमित्याह–मुणी मोणमित्यादि–मुनिर्वीतरागो मौनं संयमं समस्तारम्भवर्जनरूपं समादाय गृहीत्वा ' धुणे 'त्ति–धुनीयादपनयेत्शरीरकमौदारिकं कर्म्मशरीरं वा। कथमस्य धुननमित्याह–'पंतंति'– प्रान्तं पर्युषितं वल्लचनकादि अल्पं वा, तदपि रूक्षं, विकृतेरभावात् तत्सेवन्ते तदभ्यवहरन्ति, के? ते वीराः कर्म्मविदारिणः, किम्भूताः सम्यक्त्वदर्शिनः। यश्च प्रान्तरूक्षसेवी स किं गुणः स्यादित्याह–' एस ओहंतरे 'ति–एष एतादृशलक्षणः ओघं–भवौघं भवाम्बुधिं तीर्ण्णः। तीर्ण्ण एवासौ।

उ० ३ नैश्चयिकसम्यक्त्वमुनिभावयोरेकताप्रदर्शनम्।

अन्यक्त-भिक्षोर्विहारादेर्गर्हा ।

इति तृतीयोद्देशकः समाप्तः ॥ अथ चतुर्थोद्देशकः आरभ्यते, तस्यादिमं सूत्रम्—

"गामाणुगामं दूइज्जमाणस्स दुज्जायं दुप्परकंतं भवइ अवियत्तस्स भिक्खुणो"

'गामाणुगामं' इत्यादि–ग्रस्यते बुद्ध्यादिगुणानिति ग्रामः, ग्रामादनु– पश्चादपरो ग्रामः, ग्रामानुग्रामः, तं दूयमानस्य–विहरतः एकाकिनः साधोर्यत्स्यात्तदाह–'दुज्जातं'ति– दुष्टं यातं दुर्यातं, गमनक्रियाया गर्हा । गच्छत एवानुकूलप्रतिकूलोपसर्गसद्भावादर्हन्नकस्येव दुष्टव्यन्तरीकृतजङ्घाछेदवत् । 'दुप्परकंतं'–दुष्टं पराक्रान्तं स्थानं एकाकिनो भवति, उपकोशागृहगतसाधुवत् । एतच्च न सर्वस्यैव दुर्यातदुःपराक्रान्तं च भवतीत्यतो विशिनष्टि । 'अवियत्तस्स'त्ति– अव्यक्तस्य साधोः । स चाव्यक्तः श्रुतवयोभ्यां स्यात् । किञ्च—

"वयसावि एगे बूइया कुप्पंति माणवा, उन्नयमाणे य नरे महया मोहेण मुज्झइ, संबाहा बहवे भुज्जो २ दुरइक्कम्मा अजाणओ अपासओ, एयं ते मा होउ, एयं कुसलस्स दंसणं तद्दिट्ठिए तम्मुत्तीए तप्पुरक्कारे तस्सन्नी तन्निवेसणे, जयं विहारी चित्तनिवाई पंथनिज्झाई पलिबाहिरे, पासिय पाणे गच्छिज्जा ॥"

'वयसावि' इत्यादि– वचसाप्येके अपुष्टधर्म्माणोऽनवगतपरमार्था उक्ताः सन्तः कुप्यंति । के ते ?, मानवाः क्रोधाभिभूता भवन्ति । ब्रुवते च– कथमहं तिरस्कृतः ? किं मया कृतमित्यादि । किं पुनः वचसाप्यभिहिता ऐहिकामुष्मिकापकारिणः स्वपरबाधकस्य क्रोधस्यावकाशं ? ददतीत्याह–'उन्नयमाणे'ति– उन्नतो मानोऽस्येत्युन्नतमानः, उन्नतं वात्मानं मन्यते, स चैवंभूतो मनुष्यो नरो महता मोहेन–प्रबलमोहिनीयोदयेनाज्ञानोदयेन वा मुह्यति–कार्याकार्यविचारणान्धविकलो भवति ।

स च महामोहमोहितः केनचित् शिक्षणार्थमभिहितो निराकृतो वा जात्यादिमदस्थानान्यतरसद्भावेनोन्नतमन्दरारूढः कुप्यति। मानगृहीतो यथा तथा प्रलापी भवति, अनेकश आत्मानं विडम्बयति। एवमेकाकिनः पर्यटतः किं स्यात्तदाह–'संबाहा' इत्यादि– तस्याव्यक्तस्यैकाकिनः पर्यटतः सम्बाधा–पीडा उपसर्गजनिता नानान्तकजनिता वा भूयोभूयो बहवः स्युः। ताश्चाव्यक्तेन निरवद्यविधिना दुरतिलङ्घनीयाः। किम्भूतस्य दुरतिलङ्घनीया दुरतिक्रमा? 'अजाणउ' त्ति– तासां बाधानां सहनोपायमजानानस्य सम्यक्करणं सहनफलं वाऽपश्यतो दुरतिक्रमणीयाः पीडाः भवन्ति। एतत्प्रदर्श्य भगवान् विनेयमाह–'एयं ते मा होउ' त्ति– एवं एतदेकचर्याप्रतिपन्नस्य बाधा–फलं ते– तव मदुपदेशवर्तिनो मा भवतु। ग्रामानुग्रामपर्यटनेन आगमानुसारितया सदा गच्छान्तर्वर्ती भव। सुधर्मस्वाम्याह–'एयं ते कुसलस्स दंसण' त्ति–एतद्यत्पूर्वोक्तं, तद्वर्द्धमानस्वामिनो दर्शनम्। सततमागमानुसारितया आचार्यसमीपवर्तिना च किं विधेयमित्याह–'तद्दिट्ठिए' तस्याचार्यस्य दृष्टिस्तद्दृष्टिस्तया सततं वर्त्तितव्यं हेयोपादेयपदार्थेषु। 'तम्मोत्तिए'–तेनोक्ता सर्वसङ्गेभ्यो विरतिर्मुक्तिस्तया सदा यतितव्यं। 'तप्पुरक्कारे'–तस्याचार्यस्य पुरस्कारः सर्वकार्येष्वग्रतः स्थापनं, तद्विषये यतितव्यं। तथा तस्याज्ञापूर्वकस्याचार्यस्य संज्ञा तत्संज्ञा तद्वान् सर्वकार्येषु स्यात्, न स्वमतिविरचनया कार्यं विदध्यात्। 'तन्निवसणे'–तस्य गुरोर्निवेशनं–स्थानं यस्याऽसौ तन्निवेशनः, सदा गुरुकुलवासी स्यात्। गुरुकुलवासे निवसन् किम्भूतः स्यादित्याह–'जयं विहारी' यतमानो यतनया विहारी स्यात् प्रत्युपेक्षणादिकाः क्रियाः कुर्यात्। किञ्च–'चित्तनिवाती'– चित्तं–आचार्यस्याभिप्रायस्तेन निपतितुं क्रियायां प्रतिवर्त्तितुं शीलमस्येति चित्तनिपाती सदा स्यादिति। 'पंथनिज्झायी'–गुरोः क्वचिद्ग-



गुरुकुलवासे चारित्ररक्षागुणादि प्राप्तिर्भवतीति प्रदर्शनम्।

जीवविराधनायां प्रायश्चित्तं करणीयमिति ।

तस्य पन्था तं निर्ध्यातुं प्रलोकितुं शीलमस्येति पथनिर्ध्यायी, उपलक्षणं चैतत्, शिशयिषोः संस्तारकप्रलोकी बुभुक्षोराहारान्वेषीत्यादिना गुरोराराधकः सदा स्यात्। किञ्च–' पलिबाहिरे 'त्ति– रलयोरैक्यत्वात्परिः–समन्तात् गुरोरवग्रहात् पुरतः पृष्ठतोऽवस्थानात् सदा कार्यादृते बाह्यः स्यात्। ' किञ्च पासिय पाणे गच्छिज्जा '–कचिद् गुर्वादिना कस्मिंश्चित्कार्ये प्रेषितः सन् युगमात्रदृष्ट्या प्राण्युपघातं परिहरन् व्रजेत्। किञ्च—

" से अभिक्कममाणे पडिक्कममाणे संकुचमाणे पसारेमाणे विणियट्टमाणे संपलिमज्जमाणे एगया गुणसमियस्स रीयओ कायसंफासं समणुचिण्णा एगतिया पाणा उद्दायंति, इहलोगवेयणविज्जावडियं जं आउट्टिकयं कम्मं तं परिन्नाय विवेगमेइ, एवं से अप्पमाएण विवेगं किट्टइ वेयवी "

' से ' इत्यादि–स भिक्षुः सदा गुर्वादेशविधायी एतद्व्यापारवान् भवति। ' अभिक्कम 'त्ति–अभिक्रामन् गच्छन् प्रतिक्रामन्–निवर्त्तमानः संकुचन्–हस्तपादादि, संकोचनतः प्रसारयन् हस्तादीनवयवान्, विनिवर्त्तमानः समस्ताशुभव्यापारात् सम्यक् परिः–समन्तात् हस्तपादादीनवयवान् निक्षेपस्थानानि वा रजोहरणादिना प्रमृजन् गुरुकुलवासे वसेत्। एवं चाप्रमत्तत्वेन पूर्वोक्ताः क्रियाः कुर्वतोऽपि कदाचिदवश्यंभावितया यत्स्यात्तदाह–' एगया ' इत्यादि एकदा–कदाचिद् गुणसमितस्य–गुणयुक्तस्याप्रमत्ततया रीयमाणस्य सम्यगनुष्ठानवतः कस्यांचिदवस्थायां कायः शरीरं तत्संस्पर्शमनुचीर्णाः कायसङ्गमागताः प्राणिनः एके परितापमाप्नुवन्ति, एके ग्लानतामुपयान्ति, एकेऽवयवविध्वंसमापद्यन्ते, एके प्राणिनोऽपद्रान्ति प्राणैर्विमुच्यन्ते। क १, 'इहलोगे' इत्यादि–इह लोके इहास्मिन् लोके जन्मनि वेदनमनुभवनमिहलोकवेदनं, तेनैव वेदनमनुभवनीयं इहलोकवेद-

नवेद्यं, तत्रापतितं इहलोकवेदनवेद्यापतितम् । इदमुक्तं भवति, प्रमत्तयतिनाऽपि यदऽकामतः कृतं कर्म्म कायसंघट्टनादिना तदैहिकभवानुबन्धि, तेनैव भवेन क्षिप्यमाणत्वात् । आकुट्टीकृतकर्म्मणि तु यद् विधेयं तदाह–' जं आउट्टीकम्मं 'ति–यत् पुनः कर्म्माकुट्या कृतं, आगमोक्तकारणमन्तरेणोपेत्य प्राण्युपमर्द्देनेन विहितं, तत्परिज्ञाय विवेकं–प्रायश्चित्तशोधनमुपैति, तत्करोति येन कर्म्मणोऽभावो भवति । यथा च कर्म्मणो विवेको भवति, तथा दर्शयितुमाह–' एवं से ' इत्यादि—एवमिति वक्ष्यमाणप्रकारेण से तस्य कर्म्मणोऽप्रमादेन विवेकं–दशविधप्रायश्चित्तलक्षणं कीर्त्तयति । कः?, वेदवित्–तीर्थंकरः, आगमविद् गणधरश्च । किम्भूतः पुनरप्रमादवान् भवतीत्याह—

" से पभूयदंसी पभूयपरिन्नाणे उवसंते समिए सहिए सया जए, दट्ठुं विप्पडिवेएइ अप्पाणं किमेस जणो करिस्सइ ? एस से परमारामो जाओ लोगंमि इत्थीओ, मुणिणा हु एयं पवेइयं, उब्बाहिज्जमाणे गामधम्मेहिं अवि निब्बलाए अवि ओमोयरियं कुज्जा अवि उड्ढं ठाणं ठाइज्जा अवि गामाणुगामं दूइज्जिज्जा अवि आहारं वुच्छिंदिज्जा अवि चए इत्थीसु मणं, पुव्वं दण्डा पच्छा फासा पुव्विं पासा पच्छा दंडा, इच्चेए कलहा संगकरा भवंति, पडिलेहाए आगमित्ता आणविज्जा अणासेवणाएत्ति बेमि, से नो काहिए नो पासणिए नो संपसारए नो ममायए णो कयकिरिए वइगुत्ते अज्झप्पसंवुडे परिवज्जइ सया पावं एयं मोणं समणुवासिज्जासित्ति बेमि "

॥ ५–४–आवंतीए चउत्थोद्देसो सम्मत्तो ॥

' से पभूयदंसी ' इत्यादि– स साधुः प्रभूतं कर्म्म विपाकादिकं अतीतानागतवर्त्तमानं वा कर्म्मविपाकं द्रष्टुं शीलमस्येति प्रभूतदर्शी । पुनः किम्भूतः, ' प्रभूतपरिज्ञानः '–प्रभूतं सत्त्वरक्षणोपायपरिज्ञानं यस्य स प्रभूतपरिज्ञानः, यथावस्थितसंसार-

स्वरूपदर्शीत्यर्थः। पुनः किम्भूतः, उपशान्तः कषायक्षयात्, पुनरपि किम्भूतः, समितः– पञ्चभिः समितिभिः सहितः, पुनः सहितः ज्ञानान्वितः, सदा सर्वकालं, स एवम्भूतो गुरोरन्तिकमावसन् रुयाद्यनुकूलपरीपहोत्पत्तौ ‘ जए ’ति– यत्नं कुर्यात्। ततः किं विदध्यादित्याह–‘ दट्ठुं ’ति–दृष्ट्वा–अवलोक्य स्त्रीजनमुपकारिणं, आत्मानं प्रवेदयति– पर्यालोचयति। ‘किमेस’त्ति– किमेष स्त्रीजनो मम त्यक्तजीविताशंसस्य करिष्यति ? । एतत् स्त्रीजनस्य स्वभावं चिन्तयेदिति दर्शयति–‘ एस से ’ इत्यादि– एषः स्त्रीजनः आरामयतीत्यारामः, परमश्चासावारामश्च परमारामः, ज्ञाततत्त्वमपि जनं हासविलासादिभिर्मोहयतीत्यर्थः। ‘ जाओ ’ इत्यादि– याः काश्चनाऽस्मिन् लोके स्त्रियः ता मोहरूपायेत्यर्थः। एतन्मुनिना श्रीवर्द्धमानस्वामिना प्रवेदितं कथितमित्यर्थः। ‘ उब्बाहिज्ज ’ इत्यादि– उत्प्राबल्येन मोहोदयाद् बाध्यमानः–पीड्यमानः कैः ? ग्रामधर्म्मैः– ग्रामा इन्द्रियार्थास्तेषां धर्म्माः स्वभावाः, तैर्बाध्यमानो गुर्वादिनाऽनुशास्यते, कथमित्याह–‘ अवि ’ इत्यादि– अपि निश्चितं निर्बलं– निःसारं तदाशकः– तद्भोजी अवमोदर्यं कुर्यात्। तेनाप्यनुपशमेऽप्युर्ध्वस्थानं तिष्ठेत्, शीतोष्णादौ कायोत्सर्गेणाऽऽतापनां कुर्यात्। तेनाप्यनुपशमे ग्रामानुग्राममपि विहरेत्। तेनाप्यनुपशमे आहारमपि व्यवच्छिन्द्यात्। अपि च स्त्रीषु यन्मनः प्रवृत्तं तत्त्यजेत्। किं कारणं स्त्रीषु मनो न विधेयं ? इत्याह– ‘ पुव्वं दण्डा ’ इत्यादि– स्त्रीसङ्गप्रसक्तानामपरमार्थदृशां पूर्वं– प्रथममेव तत्सङ्गाऽविच्छेदार्थमर्थोपार्जनक्रियाप्रवृत्तस्य कृषिवाणिज्यादिक्रियाः कुर्वतः दण्डा ऐहिकरूपाः, ते च स्त्रीसंभोगात्प्रथममेव क्रियन्ते, इति पूर्वमित्युक्तम्। पश्चाद्विषयजनितनिमित्तं कर्म्मविपाकापादितनरकादिदुःखविशेषाः स्पर्शा भवन्ति। पूर्वं वा सुखादिस्पर्शाः पश्चाद् दण्डा ललिताङ्गस्येव। इत्येते स्त्रीसम्बन्धाः कलहः-संग्रामस्तत्रासङ्गः– सम्बन्धस्तत्करा भवन्ति। यद्येवं ततः





नारीजन्यपरीपहोत्पत्तौ संयमाभिमुखी विचारणा कार्येति प्रदर्शनम्।

किमित्याह–' पडिलेहाए 'ति– ऐहिकामुष्मिकापायतः स्त्रीसङ्गप्रत्युत्प्रेक्षया ' आगमे 'ति– ज्ञात्वा आज्ञापयेदात्मानमनासेवनयेति । इत्यधिकारसमाप्तौ, ब्रवीम्यहं तीर्थंकरवचनानुसारेण । पुनरपि तत्परिहरणोपायमाह–' से णो काहिए '– स स्त्रीसङ्गपरित्यागी स्त्रीनेपथ्यकथां शृङ्गारकथां वा नो कुर्यात् । ' से नो पासणिए '–तासामङ्गप्रत्यङ्गादिकं न पश्येत् । तथा ' णो संपसारए '– ताभिः सह सम्प्रसारणं पर्यालोचनं न कुर्यात् । ' नो ममाइए ' न तासु स्वार्थपरासु ममत्वं कुर्यात् । तथा ' णो कयकिरिए '– नैव कृतक्रियो भूयात्, इयं पूर्वं ममोपकारिणी अतोऽहमप्येनां भजामीत्यर्थः । नैव स्त्रीणां वैयावृत्त्यं कुर्यात् । ' वयगुत्ते '—तथैव वाङ्मात्रेणापि नालपेत् । ' अज्झप्प ' इत्यादि– आत्मन्यधि अध्यात्मं मनः तेन संवृत्तो अध्यात्मसंवृत्तः- स्त्रीभोगाऽदत्तमनाः सूत्रार्थोपयुक्तनिरुद्धमनोयोगो भवेत् । ' परिवज्जए ' इत्यादि– परिः-समन्ताद् वर्जयेत् पापं तदुपादानं कर्म्म वा । ' एवं मोण 'त्ति–एतद् यदुद्देशकादेरारभ्योक्तं मुनेरिदं मौनं मुनिभावो वा तदात्मनि समनुपासयेरात्मनि विदध्याः । इति परिसमाप्तौ, ब्रवीमीति पूर्ववत् इति चतुर्थोद्देशकः समाप्तः ॥

साम्प्रतं च पञ्चमोद्देशकः प्रारभ्यते । इहाऽनन्तरोद्देशकेऽव्यक्तस्यैकचरस्य प्रत्यपाया दर्शिताः । अतस्तान् परिजिहीर्षुणा सदाऽऽचार्यसेविना भवितव्यम् । अस्यादिमं सूत्रम्–

" से बेमि तंजहा– अवि हरए पडिपुन्ने समंसि भोमे चिट्ठइ उवसंतरए सारक्खमाणे, से चिट्ठइ सोयमज्झगए से पास सव्वओ गुत्ते, पास लोए महेसिणो जे य पन्नाणमंता पबुद्धा आरम्भोवरया सम्ममेयंति पासह, कालस्स कंखाए परिव्वयंतित्ति बेमि"

' से बेमि ' इत्यादि– स इति यद्गुण आचार्यो भवति, तदहं तीर्थंकरोपदेशानुसारेण ब्रवीमि । तद्यथेति–' अविहर-

उ० ४ भोगजन्य दोषान् विचार्य मुनिभावे स्थिरता कार्या ।

तद्दोपदूरीकरणार्थमाचार्यसेवाकरणमाचार्यस्वरूपप्रदर्शनं च ।

ए 'त्ति-अपि निश्चितं, भंगसमुच्चयार्थो वाऽपिशब्दः । ते च भङ्गाः । एको ह्रदो परिगलत्श्रोताः, पर्यागलत्श्रोताश्च, शीताशीतोदाप्रवाहह्रदवत् । १ । अपरस्तु परिगलत्श्रोताः नो पर्यागलत्श्रोताः पद्मह्रदवत् । २ । तथाऽपरो नो परिगलत्श्रोताः पर्यागलत्श्रोताश्च, लवणोदधिवत् । ३ । अपरस्तु नो परिगलत्श्रोताः नो पर्यागलत्श्रोताश्च, मनुष्यलोकाद् वहिः समुद्रवत् । ४ । तत्राचार्यः श्रुतमङ्गीकृत्य प्रथमभङ्गपतितः, श्रुतस्य दानग्रहणसद्भावात् । १ । साम्परायिककर्म्मापेक्षया तु द्वितीयभङ्गपतितः, कषायोदयाभावेन ग्रहणाभावात् तपःकायोत्सर्गादिना क्षपणोपपत्तेश्च । २ । आलोचनामङ्गीकृत्य तृतीयभङ्गपतितः, आलोचनाया अप्रतिश्राविवात् । ३ । कुमार्गं प्रति चतुर्थभङ्गपतितः, कुमार्गस्य हि प्रवेशनिर्गमाभावात् । ४ । इह प्रथमभङ्गपतितेनाधिकारः, तथाभूतस्यायं ह्रदद्दष्टान्तः । स च ह्रदो निर्म्मलजलप्रतिपूर्णो जलजैः सर्वर्त्तुजैरुपशोभितः, समे भूभागे विद्यमानोदकनिर्गमप्रवेशो नित्यमेव तिष्ठति, न कदाचिच्छोपमुपयाति, सुखोत्तारावतारसमन्वितः, उपशान्तरजाः, नानाविधांस्तु यादसां गणान् रक्षन् तिष्ठति । तथाऽसौ आचार्योऽपि सर्वगुणाधारभूतोऽपि शीताशीतोदाह्रदवदऽवधार्यः । स चाचार्यः प्रथमभंगपतितः पञ्चविधाचारसमन्वितोऽष्टविधाचार्यसम्पदुपेतः षट्त्रिंशत्गुणाधारो ह्रदकल्पो निर्म्मलज्ञानप्रतिपूर्णः समे भूभागे रुयादिविवर्जिते स्थाने तिष्ठतीत्यर्थः । किम्भूतः ?, उपशान्तरजाः- उपशान्तमोहनीय इति । ' सारक्खमाणो 'त्ति-षड्जीवनिकायान् रक्षन् स्वतः परतश्च सदुपदेशतो नरकादिपाताद्वा । ' सोतमज्झ 'त्ति- श्रोतोमध्यगतः-श्रुतार्थदानग्रहणसद्भावात् श्रोतोमध्यगतत्वम् । स च किम्भूतः ?, ' से पास ' इत्यादि- स चाचार्योऽक्षोभ्यह्रदकल्पोऽवधारणीयो भवति । पुन किम्भूतः?, ' सवओ 'त्ति-सर्वतो इन्द्रियनोइंद्रियरूपतया गुप्त्या गुप्त इत्ये-

तत्पश्य—अवलोकय। आचार्यव्यतिरेकेण एवंविधा बहवः सन्ति। 'पास लोए'ति—इह मनुष्यलोके पूर्वोक्तस्वरूपा महर्षयो महामुनयः सन्तीत्येतत्पश्य, किम्भूतास्ते ?, 'जे य पन्नाणमंतत्ति'—ये च प्रज्ञानमन्तः परमोत्कृष्टज्ञानयुक्ता आगमस्य वेत्तारः, पुनः किम्भूताः, प्रबुद्धाः, पुनः किम्भूताः ? आरंभोपरताः। 'सम्ममेयं'ति—एतन्मयोक्तं संमं-माध्यस्थ्यं भूत्वा यूयं पश्यत। 'कालस्स'—कालं समाधिमरणकालस्तदभिकांक्षया साधवो मोक्षाध्वनि संयमे परिसमन्ताद् व्रजन्ति उद्यच्छन्ति। इतिरधिकारसमाप्तौ ब्रवीमीति एतत्प्रकरणपरिसमाप्तौ द्रष्टव्यमिति। आचार्याधिकारमुक्त्वा विनेयवक्तव्यतामाह—

"वितिगिच्छसमावन्नेणं अप्पाणेणं नो लहइ समाहिं, सिया वेगे अणुगच्छंति असिता वेगे अनुगच्छंति, अणुगच्छमाणेहिं अणणुगच्छमाणे कहं न निव्विज्जे ?"

'वितिगिच्छ' इत्यादि— विचिकित्सा—या चित्तविप्लुतिस्तां 'समावन्नेणं' समापन्ने—समुत्पन्नेऽप्यर्थे मतिविभ्रमो मोहोदयाद् भवति, तथाऽस्य महतस्तपसः सिकताकणकवलनिःस्वादस्य स्यात् सफलता ? न वेति ?, कृषीवलकरणादिक्रियावत्, एतादृशी मतिर्मिथ्यात्वोदयाद् भवति, ज्ञेयगहनत्वाच्च। तथाहि— अर्थस्त्रिविधः—सुखाधिगमो दुरधिगमोऽनधिगमश्च। सुखाधिगमो यथा—चक्षुष्मतश्चित्रकर्म्मनिपुणस्य रूपसिद्धिः, दुरधिगमस्तु अनिपुणस्य, अनधिगमस्त्वऽन्धस्य। तत्र सुखाधिगमो विचिकित्सारूप एव न भवति, अनधिगमोऽवस्त्वेव, दुरधिगमो देशकालस्वभावविप्रकृष्टस्तु विचिकित्सागोचरीभवति। तत्र धर्म्माधर्म्मादौ या विचिकित्सा तां समापन्नो समाधिं न लभते। विचिकित्साकलुषितान्तःकरणो हि कथयतोऽप्याचार्यस्य सम्यक्त्वाख्यां बोधिं नाप्नोति। यश्चाप्नोति स गृहस्थो यतिर्वा इत्याह—'सिया वेगे अणुगच्छन्ति'—सिताः पुत्रकलत्रादिमोहेन बद्धाः,

शङ्कोत्पत्तौ जिनकथितं सत्यमेवेत्यालम्बनीयम्।

एके वा लघुकर्म्माणः, सम्यक्त्वं यः प्रतिपादयति तमाचार्यमनुगच्छन्ति आचार्योक्तं प्रतिपद्यन्ते। तथा असिता वा गृहवासविमुक्ता वा एके विचिकित्सावादरहिता आचार्यमार्ग्गमनुगच्छन्ति। 'अणुगच्छमाणेहिं'ति-सिताऽसितैराचार्योक्तमनुगच्छद्भिर्बुध्यमानैः कश्चिदज्ञानोदयात् क्षपकादिः चिरप्रव्रजितोऽपि अननुगच्छन्-अनवधारयन् कथं न निर्विद्येत ?, न निर्वेदं तपसंयमयोर्गच्छेत् ?, निर्विण्णश्चेदमपि भावयेत्, यथा नाहं भव्यः स्यां, न च मे संयतभावोऽप्यस्तीति, यतः प्रकटमपि कथितं नावगच्छामि। एवं च निर्विण्णस्याचार्याः समाधिमाहुः-यथा भो साधो! मा विषादं कुरु, भव्यो भवान्। यतो भवता सम्यक्त्वमङ्गीकृतं, तच्च न ग्रन्थिभेदमृते, तद्भेदश्च न भव्यत्वं विना संजाघटीति, अभव्यस्य हि भव्याभव्यशंकाया अभावादिति। किञ्च—

" तमेव सच्चं नीसंकं जं जिणेहिं पवेइयं "

'तमेव' इत्यादि-यत्किमपि धर्माधर्माकाशादि जिनैः-रागद्वेषादिजयनशीलैः प्रवेदितं-कथितं तन्निःशंकं तत् तथ्यमेव इत्येवम्भूतं श्रद्धानं विधेयम्। सम्यक्पदार्थानवगमेऽपि न विचिकित्सा कार्येति, सा पुनर्विचिकित्सा प्रविव्रजिषोर्भवति आगमापरिकर्मितमतेः। तत्राप्येतत्पूर्वोक्तं भावयितव्यमित्याह—

" सड्ढिस्स णं समणुन्नस्स संपव्वयमाणस्स समियंति मन्नमाणस्स एगया समिया होइ १, समियंति मण्णमाणस्स एगया असमिया होइ २, असमियंति मण्णमाणस्स एगया समिया होइ ३, असमियंति मण्णमाणस्स एगया असमिया होइ ४, समियंति मण्णमाणस्स समिया वा असमिया वा समिया होइ उवेहाए ५, असमियंति मन्नमाणस्स समिया वा असमिया वा असमिया होइ

उवेहाए ६, उवेहमाणो अणुवेहमाणं बूया—उवेहाहि समियाए, इच्चेयं तत्थ संधी झोसिओ भवइ, से उट्ठियस्स ठियस्स गइं समणुपासह, इत्थवि बालभावे अप्पाणं नो उवदंसिज्जा" ॥

'सड्ढिस्स' इत्यादि— श्रद्धा धर्मेच्छा विद्यते यस्याऽसौ श्रद्धी— श्रद्धावान्, तस्य समनुज्ञस्य संविज्ञारिभिर्भावितस्य संप्रव्रजतः सम्यक् प्रव्रज्यामभ्युपगच्छतो विचिकित्सा— शंका भवेत्, तत्रेदमुपदेष्टव्यं, तदेव सत्यं यत् जिनैः प्रवेदितं, इत्येवं यथोपदेशं प्रवर्त्तमानस्य प्रवर्द्धमानकण्डकस्य सत उत्तरकालमपि तदधिकता तत्समता तन्न्यूनता तदभावो वा स्यात्। इत्येवंरूपां विचित्रपरिणामतां दर्शयितुमाह— 'समियंति' इत्यादि— तस्य श्रद्धावतः समप्रज्ञस्य तदेव निःशंकं यत् जिनैः प्रवेदितं इत्येवं मन्यमानस्य —कदा उत्तरकालमपि शंकादिरहिततया सम्यगेव भवति— न तीर्थंकरभाषिते शंकाद्युत्पद्यत इति १। कस्यचित्तु प्रव्रज्यावसरे श्रद्धानुसारितया सम्यगिति मन्यमानस्य तदुत्तरकालं ज्ञेयगहनतया व्याकुलमतेरेकदा मिथ्यात्वांशोदयेऽसम्यगिति भवति। २। 'असमिय'मित्यादि— कस्यचिन्मिथ्यात्वलेशानुविद्धस्य कथं पौद्गलिकः शब्द इत्यादिकमसम्यगिति मन्यमानस्यैकदा मिथ्यात्वपरिणामोपशमतया शंकाद्यभावे गुर्वाद्युपदेशतः सम्यगिति भवति। ३। 'असमियंति'त्ति— कस्यचिदागमाऽपरिमिलितमतेः कथमेकेनैव समयेन परमाणोर्लोकान्तगमनमित्याद्यसम्यगिति मन्यमानस्यैकदा कुहेतुवितर्काविर्भावावसरे नितरामस्याऽसम्यगेव भवति। ४। 'समियंति'— सम्यगित्येवं मन्यमानस्य शंकादिरहितस्य सतस्तद्वस्तु यत्तेन तथारूपतया भावितं तत्सम्यग्वा स्यात् असम्यग्वा, तथापि तस्य तत्र सम्यगुत्प्रेक्षया पर्यालोचनया सम्यगेवेति, ईर्यापथयुक्तस्य कचित्प्राण्युपमर्द्दवत्। ५। 'असमियंति'त्ति— असम्यगिति किंचिद्वस्तु मन्यमानस्य शंका स्यात् अर्वाग्दर्शितया

छद्मस्थस्य सतः, तद्वस्तु सम्यग्वा स्यात्? असम्यग् वा?, तस्य तदऽसम्यगेवोत्प्रेक्षया— असम्यग्पर्यालोचनया यद् यथा शंकयेत्तत्तथैव समापद्येतेति वचनादिति । ६ । 'उवेहमाणे' इत्यादि— आगमपरिकर्मितमतित्वाद् यथावस्थितपदार्थस्वभावदर्शितया सम्यगसम्यगिति चोत्प्रेक्षमाणः पर्यालोचनपरमनुत्प्रेक्षमाणं गतानुगतिकन्यायानुसारिणं शङ्कयाऽपधावन्तं ब्रूयाद्, यथोत्प्रेक्षस्व— पर्यालोचय, सम्यग्भावेन माध्यस्थ्यमवलम्ब्य किमेतदर्हदुक्तं जीवादितत्त्वं घटामियर्त्ति आहोश्विन्नेत्यक्षिणी निमील्य चिन्तयेति भावः । 'इच्चेवं तत्थ संधी'— इत्येवं पूर्वोक्तप्रकारेण तत्र तस्मिन् संयमे सन्धिः— कर्मसन्ततिरूपो झोषितः— क्षपितो भवति, यदि संयमे सम्यग्भावे वोत्प्रेक्षणं स्यात् नान्यथेति । सम्यगुत्प्रेक्षमाणस्य यत्स्यात्तदाह— 'से उट्ठियस्सत्ति'—से— तस्य सम्यगुत्थितस्य निःशङ्कस्य गुरोराज्ञायां स्थितस्य यां गतिर्भवति— या पदवी भवति तां सम्यगनुपश्यत यूयम् । तद्यथा— विश्वश्लाध्यता, ज्ञानदर्शनचारित्रेषु स्थैर्यं, श्रुतज्ञानसम्पूर्णता स्यादिति । तदभावे लोकनिन्दनीयत्वं संयमात् स्खलनात्मकत्वमादिकं, तां च पश्यत । यदि नामानुपस्थितस्य विरूपा मतिर्भवति, ततः किमित्याह— 'एत्थवि बाले'त्ति— अत्रापि— असंयमे बालभावरूपे इतरजनाचरिते आत्मानं सकलकल्याणास्पदं नोपदर्शयेत्, बालानुष्ठानविधायी मा भूदिति । अथवा बालाः शाक्यादयः तद्भावितो बालभावमाचरति वक्ति च— नित्यत्वादमूर्त्तत्वाच्चात्मनः प्राणातिपात एव नास्ति, आकाशस्येव, न हि वृक्षादिच्छेदे दाहे वाऽऽकाशस्य भिदा प्लोषो वा स्यात्, एवमात्मनोऽपि, इत्याद्यध्यवसायात् तद्धननादौ प्रवृत्तस्य तत्प्रतिषेधार्थमाह—

"तुमंसि नाम सच्चेव जं हंतव्वंति मन्नसि, तुमंसि नाम सच्चेव जं अज्जावेयव्वंति मन्नसि, तुमंसि नाम सच्चेव जं परिया-

उ० ५
अबोधे बालभावानुष्ठानं नाचरणीयम् ।

वेयव्वंति मन्नसि, एवं जं परिचित्तव्वंति मन्नसि, जं उद्दवेयव्वंति मन्नसि, अंजू चेयपडिबुद्धजीवी, तम्हा न हंता नवि घायए अणुसंवेयणमप्पाणेणं जं हंतव्वं नाभिपत्थए " ॥

'तुमंसि नामे 'त्यादि– योऽयं हन्तव्यत्वेन भवताऽध्यवसितः, स त्वमेव, नामशब्दः सम्भावनायां, यथा भवान् शिरःपाणिपादपार्श्वपृष्ठोरूदरवान् एवमसावपि, यं हन्तव्यमिति मन्यसे। यथा भवतो हननोद्यतं दृष्ट्वा दुःखमुत्पद्यते, एवमन्येषामपि, तद्दुःखापादनाच्च पापानुसङ्गः। इदमुक्तं भवति–नात्रान्तरात्मनः आकाशदेश्यस्य व्यापादनेन हिंसा,–अपि तु शरीरात्मनः, तस्य हि यत्र क्वचित् स्वाधारं शरीरमेतत् वरं वल्लभं, तद्वियोजीकरणमेव हिंसेति। न च संसारस्थस्य सर्वथा अमूर्तत्वावाप्तिः, येनाकाशस्येव विकारो न स्यात्। सर्वत्रैव च प्राण्युपमर्दचिकीर्षायामात्मतुल्यता भावयितव्येत्येतदुत्तरसूत्रैर्दर्शयितुमाह– त्वमपि नाम स एव, यं प्रेषणादिना आज्ञापयितव्यमिति मन्यसे। तथा त्वमपि नाम स एव, यं परितापयितव्यमिति मन्यसे। एवं यं परिगृहीतव्यमिति मन्यसे, यमपद्रावयितव्यमिति मन्यसे, असौ त्वमेव। यथा भवतोऽनिष्टापादनेन दुःखमुत्पद्यते, एवमन्यस्यापीत्यर्थः। यदिवा यं कायं हन्तव्यादितयाऽध्यवस्यसि तत्रानेकशो भवतोऽपि भावात् त्वमेवमसौ। एवं मृषावादादावप्यायोज्यम्। यदि नाम हन्तव्यघातकयोरुक्तक्रमेणैक्यं, ततः किमित्याह– 'अंजू चेय 'त्ति– ऋजुः– अज्ञः अगुणो वा साधुः, च शब्दोऽवधारणार्थे, एतस्य हन्तव्यघातकैकत्वस्य प्रतिबोधस्तेन जीवितुं शीलमस्येति प्रतिबुद्धजीवी, साधुरेवैतत्परिज्ञानेन जीवति नापर इति। यदि नामैवं ततः किमित्याह– ' तस्माद् ' हन्यमानस्यात्मन इव महद्दुःखमुत्पद्यते, तस्मादात्मौपम्यादन्येषां जन्तूनां न हन्ता स्यात्, नापरैर्घातयेत्, न च घ्नतोऽनुमन्येत। किञ्च– ' अणु-

उ० ५ हन्तव्यघातकयोरेकत्वं बुद्ध्वा हिंसादि दोषा दूरीकरणीया इति।

संवेदण ’त्ति– अनु– पश्चात् संवेदनं केन ? आत्मना, यत्परेषां मोहोदयाद्धननादिना दुःखोत्पादनं विधीयते, तत्पश्चादात्मना संवेद्यमिति ज्ञात्वा यत् किमपि हन्तव्यमिति चिकीर्षितं, तन्नाभिप्रार्थयेत्– नाभिलषेत्। ननु च संवेदनं सातासातरूपं तद् आत्मनो ज्ञानेन भिन्नेनाभिन्नेन वा भवति ? इत्यस्य प्रतिवचनमाह—

“ जे आया से विन्नाया, जे विन्नाया से आया, जेण वियाणइ से आया, तं पडुच्च पडिसंखाए, एस आयावाई समियाए परियाए वियाहिएत्ति बेमि ” ॥ लोगसारे पंचमोद्देसो।

‘ जे आया ’ इत्यादि– य आत्मा नित्य उपयोगलक्षणः, विज्ञाताप्यसावेव। न तु पुनः तस्मादात्मनो भिन्नं ज्ञानं पदार्थसंवेदकम्। ‘ जे विन्नाया ’ इत्यादि–यश्च विज्ञाता पदार्थानां परिच्छेदकः स एव नित्योपयोगलक्षण आत्मा एव। ‘ जेण वियाणइ ’–येन मत्यादिज्ञानेन सामान्यविशेषाकारतया वस्तु जानाति विजानाति असौ आत्मा, न तस्मादात्मनो भिन्नं ज्ञानं विद्यते। ज्ञानात्मनोश्चैकत्वे यद् भवति तदाह–‘ तं पडुच्च पडिसंखाए ’ति–तं ज्ञानपरिणामं प्रतीत्य-आश्रित्यात्मा तेनैव प्रतिसंख्यायते–व्यपदिश्यते, यथा मतिज्ञानी श्रुतज्ञानी यावत्केवलज्ञानी। यश्च ज्ञानात्मनोरेकत्वं मन्यते स किंगुणः स्यादित्याह–‘ एस आयावाई ’ इत्यादि– एषः अनन्तरोक्तया नीत्या यथावस्थितात्मवादी स्यात्, तस्य च सम्यग्भावेन शमितया वा ‘ पर्यायः ’–संयमानुष्ठानरूपो व्याख्यातः। इति ब्रवीमि ॥ पंचमोद्देशकः समाप्तः ॥

अथ षष्ठोद्देशकः प्रारभ्यते। इहानन्तरोद्देशके हृदोपमेनाचार्येण भाव्यमित्येतदुक्तम्। तथाभूताचार्यसम्पर्काच्च कुमार्ग्गपरित्यागो भवति, इत्युद्देशकादिसूत्रम्—

दोषदूरीकरणार्थं सदा तथाविधाचार्याज्ञायां वर्तितव्यम् ।

" अणाणाए एगे सोवट्ठाणा आणाए एगे निरुवट्ठाणा, एयं ते मा होउ, एयं कुसलस्स दंसणं, तद्दिट्ठीए तम्मुत्तीए तप्पुरक्कारे तस्सन्नी तन्निवेसणे "

' अणाणाए ' इत्यादि– अनाज्ञा तीर्थंकरानुपदेशः स्वमनीषिकाचरितोऽनाचारस्तया अनाज्ञया, तस्यां वा, एके–इन्द्रियवशवर्त्तिनो दुर्गतिं जिगमिषवः स्वाभिमानग्रस्ताः सह उपस्थानेन–धर्म्मचरणाभासेन वर्त्तन्ते इति सोपस्थानाः, किल वयमपि प्रव्रजिताः, सदसद्धर्मविवेकविकलाः सावद्यारम्भतया परिवर्त्तन्ते । ' आणाए निरुवट्ठाणा ' इत्यादि–एके तु न कुमार्गवासितान्तःकरणाः किं त्वालस्याद्युपबृंहितमतयः, आज्ञायां–तीर्थंकरप्रणीते सदाचारे निर्गतमुपस्थानमुद्यमो येषां निरुपस्थानाः–भगवत्प्रणीताचारविकलाः । एतत्कुमार्गाचरणं सन्मार्गावसीदनं च द्वयमपि ते–तव विनयोपगतस्य दुर्गतिहेतुत्वान्मा भूदिति सुधर्म्मास्वामी स्वमनीषिकापरिहारार्थमाह– ' एयं कुसलस्स दंसणं '– एतत्– अनाज्ञायां निरुपस्थानत्वं आज्ञायां सोपस्थानत्वं कुशलस्य–त्रैलोक्यस्वामिनो दर्शनं, कुमार्गं परित्यज्य सदाऽऽचार्यान्तेवासिना एवम्भूतेन भाव्यम् । 'तद्दिट्ठीए'– तस्य श्रीजिनाज्ञाकर्त्तुराचार्यस्य दृष्टिस्तद्दृष्टिस्तया वर्त्तितव्यं, तस्याचार्यस्य मुक्तिस्तया वर्तितव्यं, तमाचार्यं सर्वकार्येषु पुरः करोतीति तत्पुरस्कारः तन्मत्या क्रियानुष्ठायी, ' तस्सन्नी '– तत्संज्ञी तत्संज्ञायां वर्त्तते इति तत्संज्ञी, तन्निवेशनः– सदा गुरुकुलवासी । स एवम्भूतः किं गुणः स्यादित्याह—

" अभिभूय अदक्खू अणभिभूए पभू निरालंबणयाए जे महं अबहिमणे, पवाएण पवायं जाणिज्जा, सहसंमइयाए परवागरणेणं अन्नेसिं वा अंतिए सुच्चा " ॥

' अभिभूयेत्यादि '– अभिभूय– पराजित्य परीषहोपसर्गान् तत्त्वमद्राक्षीत्। किञ्च– ' अणभिभूय ' इत्यादि– न अभिभूतोऽनभिभूतः परीषहादिकुतीर्थिकैश्च, एवम्भूतः प्रभुः– समर्थो, निरालम्बनतायाः– नात्र संसारे मातापितृकलत्रादि-कमालम्बनमस्तीति तीर्थकृद्वचनमन्तरेण नरकादौ पततामित्येवम्भूतभावनायाः समर्थो भवति। कः पुनरेवमित्याह– ' जे महं ' इत्यादि– यः पुरस्कृतमोक्षो ' महान् ' महापुरुषो लघुकर्म्मा सर्वज्ञोपदेशवर्त्ती अबहिर्मनाः। कुतः शुभस्तदुपदेश-निश्चय इत्याह– ' पवाएणे 'त्यादि– प्रवादेनाचार्यपारम्पर्योपदेशेन सर्वज्ञोपदेशं जानीयात्। पुनः कथं जानीयात्? ' सह-सम्मइयाए '– सन्मत्या, स्वपरावभासकत्वात्सन्मतेः, ' परवागरणेण '– कदाचित्परव्याकरणेनापि जानीयात्। अन्नेसिं वा– अन्येषामप्याचार्यादीनामन्तिके श्रुत्वा यथावस्थितवस्तुसद्भावमवधारयेत्। अवधार्य च किं? कुर्यादित्याह—

निद्देसं नाइवट्टेज्जा मेहावी सुपडिलेहिय सव्वओ सव्वप्पणा सम्मं समभिजाणिया, इह आरामं परिण्णाय अल्लीणे गुत्ते परिव्वए निट्ठियट्ठी वीरे आगमेण सया परक्कमेज्जासित्ति बेमि " ॥

' निद्देस 'मित्यादि– निर्देशस्तीर्थंकराद्युपदेशस्तं नातिवर्त्तते मेधावी– मर्यादावान्। किं? कृत्वेत्याह–' सुपडिलेहिय ' त्ति– सुष्ठु प्रत्युत्प्रेक्ष्य हेयोपादेयतया कुतीर्थिकवादान्, सर्वज्ञवादं च ' सर्वतः '– सर्वैः प्रकारैर्द्रव्यक्षेत्रकालभावरूपैरात्मादीन् पदार्थान् पर्यालोच्य सहसन्मत्यादित्रिकेण परिच्छिद्य, ' सम्मं समभिजाणिय 'त्ति–सम्यगेव स्वपरतीर्थिकवादान् ' समभि-ज्ञाय '– बुद्ध्वा ततोऽपि परतीर्थिकप्रवादनिराकरणं कुर्यात्। किञ्च– ' इहारामं परिण्णाय ' इत्यादि– इहास्मिन् मनुष्य-लोके आरमणमारामो– रतिरित्यर्थः, स चारामः संयमस्तं परिज्ञाय आलीनो गुप्तश्च परिव्रजेत्– संयमानुष्ठाने विहरेत्।

पुनः पुनरुपदेशदाने किं ? कारणमिति सूचनम् ।

किम्भूत इत्याह– 'णिट्ठियट्ठी' इत्यादि– निष्ठितो– मोक्षस्तेनार्थी, 'वीरः' कर्म्मविदारणसमर्थः, 'आगमेन'– सर्वज्ञप्रणीतेनाचारादिना 'सदा'–सर्वकालं पराक्रमेथाः– कर्म्मशत्रून् प्रति मोक्षाध्वनि वा गच्छेत् । इतिरधिकारसमाप्तौ, ब्रवीमीति पूर्ववत् । किमर्थं ? पौनःपुन्येनोपदेशदानमित्याह—

" उड्ढं सोया अहे सोया, तिरियं सोया वियाहिया । एए सोया विअक्खाया जेहिं संगंति पासहा ॥ १३ ॥ ".

'उड्ढ' मित्यादि–श्रोतांसि–कर्म्माश्रवद्वाराणि, तानि च पूर्वभवाभ्यासाद् विषयानुबन्धीनि गृह्यन्ते, तत्रोर्द्ध्वं श्रोतांसि–वैमानिकाङ्गनाभिलाषेच्छा वैमानिकसुखनिदानं वा । अधो भवनपतिसुखाभिलाषिता । तिर्यग्–व्यन्तरमनुष्यतिर्यग्विषयेच्छा । यदिवा उर्द्ध्वं गिरिशिखरप्राग्भारनितम्बप्रपातोदकादीनि, अधोऽपि नदीकूलगुहालयादीनि, तिर्यगप्यारामसभाऽऽवसथादीनि, प्राणिनां विषयोपभोगस्थानानि विविधमाहितानि स्वकर्म्मपरिणत्या जनितानि । एतानि कर्म्माश्रवद्वाराणीति कृत्वा एभिः प्रकारैः पापोपादानभूतैर्यैः सङ्ग-कर्मानुषङ्गं पश्यत । अत आगमेन सदा पराक्रमेथाः । किञ्च–

" आवट्टं तु उवेहाए इत्थ विरमिज्ज वेयवी, विणइत्तु सोयं निक्खम्म एसमहं अकम्मा जाणइ पासइ पडिलेहाए नावकंखइ इह आगइं गइं परिन्नाय "

'आवट्ट' मित्यादि– आवर्त्तं रागद्वेषविषयावर्त्तं, तुशब्दः पुनःशब्दार्थे, भावावर्त्तं पुनरुत्प्रेक्ष्याऽत्रास्मिन् भावावर्त्ते वेदविद्-आगमविद् विरमेद्–आश्रवद्वारनिरोधं कुर्यात् । 'विणइत्तु 'त्ति– विनयेत्– अपनयेत् श्रोतः- आश्रवद्वारं, तद् विनेतुं निःक्रम्य–प्रव्रज्य, 'एस इत्यादि–एष इति प्रत्यक्षो यः कश्चन महापुरुषः आतिशायिककर्म्मविधायी 'अकर्म्मा' नास्य

कर्म विद्यत इत्यकर्म्मा, घातिकर्म्माभावाच्च जानाति विशेषतः, पश्यति च सामान्यतः। स चोत्पन्नदिव्यज्ञानो विदितवेद्यः सन् किं कुर्यादित्याह—' पडिलेहाए '—प्रत्युत्प्रेक्ष्य—पर्यालोच्य हृषीकविषयजनितसुखनिःस्पृहतया तां पूजां नाकाङ्क्षेदिति-नाभिलषतीति। किञ्च—' इहागति ' मित्यादि—इहास्मिन् मनुष्यलोके व्यवस्थितः सन्नुत्पन्नज्ञानः प्राणिनामागतिं गतिं च संसारभ्रमणं तत्कारणं च ज्ञपरिज्ञया ज्ञात्वा प्रत्याख्यानपरिज्ञया निराकरोति। तन्निराकरणे च यत्स्यात्तदाह—

" अच्चेइ जाईमरणस्स वट्टमग्गं विक्खायरए, सव्वे सरा नियट्टंति तक्का जत्थ न विज्जइ मई तत्थ न गाहिया, ओए अप्पइट्ठाणस्स खेयन्ने, से न दीहे न हस्से न वट्टे न तंसे न चउरंसे न परिमंडले न किण्हे न नीले न लोहिए न हालिद्दे न सुक्किले न सुरभिगंधे न दुरभिगंधे न तित्ते न कडुए न कसाए न अंबिले न महुरे न कक्खडे न मउए न गरुए न लहुए न उण्हे न निद्धे न लुक्खे न काऊ न रूहे न संगे न इत्थी न पुरिसे न अन्नहा परिन्ने सन्ने उवमा न विज्जए, अरूवी सत्ता अपयस्स पयं नत्थि "

' अच्चेइ ' इत्यादि— अतिक्रामति जातिमरणं तस्य वर्त्तमार्गं वर्तमानपन्थानं, मार्गं उपादानं कर्म्मेतियावत्, अत्येति अशेषकर्म्मक्षयं कुरुते। तत्क्षयाच्च किंगुणः स्यादित्याह—' विक्खाये 'त्यादि—विविधमनेकप्रकारं प्रधानपुरुषार्थतया आख्यातो व्याख्यातो मोक्षोऽशेषकर्म्मक्षयलक्षणस्तत्र मोक्षे रतः समाधिं प्राप्तः संतिष्ठते। यत्र न शब्दादीनां प्रवृत्तिर्विद्यत इतिदर्शयन्नाह—' सव्वेसरा ' इत्यादि— सर्वे स्वरा ध्वनयस्तस्मान्निवर्त्तन्ते, शब्दादिविषयेभ्यो निवर्त्तन्ते इत्यर्थः। ' तक्क 'त्ति— तर्को यत्र न विद्यते, सम्भवत्पदार्थविशेषास्तित्वाध्यवसाय ऊहविशेषः तर्कः, स नास्ति। किमिति तत्र तर्काभावः ?, मतिस्तत्र न विद्यते, मननं मतिर्मनसो व्यापारः पदार्थचिन्ता, मोक्षावस्थायां सकलविकल्पातीतत्वात्, न तत्र कर्म्मसहितस्य गमनं, मतिस्तत्र न

ग्राहिका । यतः— ओएति— ओजः—एकोऽशेषमलकलङ्काङ्करहितः । किञ्च—न विद्यते प्रतिष्ठानमौदारिकशरीरादेः कर्म्मणो वा यत्र सोऽप्रतिष्ठानो—मोक्षस्तस्य 'खेदज्ञो'-निपुणो, यदिवा प्रतिष्ठानो नरकस्तत्र स्थित्यादिपरिज्ञानतया खेदज्ञो-लोकनाडि-पर्यन्तपरिज्ञाता, तेन च समस्तलोकालोकखेदज्ञता आवेदिता भवति सर्वस्वरनिवर्त्तनं च । येनाभिप्रायेणोक्तवान् तमभिप्रायमाविष्कुर्वन्नाह—'से न दीहे' इत्यादि—स परमपदाध्यासी लोकान्तक्रोशषड्भागक्षेत्रावस्थानोऽनन्तज्ञानदर्शनोपयुक्तः, संस्थानमाश्रित्य-न दीर्घो न ह्रस्वो न वृत्तो न त्र्यस्रो न चतुरस्रो न परिमंडलोऽपि । वर्णमाश्रित्य—न कृष्णो न नीलो न लोहितो न हारिद्रो न शुक्लो, गन्धमाश्रित्य न सुरभिगन्धो न दुरभिगन्धोऽपि, रसमाश्रित्य न तिक्तो न कटुको न कषायो नाम्लो न मधुरश्च, स्पर्शमाश्रित्य न कर्कशो न मृदुर्न गुरुर्न लघुश्च न शीतो नोष्णो न स्निग्धो न रूक्षोऽपि, न कायवान् तथा न रुहः कर्म्मबीजाभावादपुनर्भव इत्यर्थः । न विद्यते सङ्गोऽमूर्तत्वाद् यस्य स तथा । न स्त्री न पुरुषो 'नान्यथे'ति—न नपुंसकः । केवलं सर्वैरात्मप्रदेशैः परिः समन्ताद् विशेषतो जानातीति परिज्ञः ज्ञानदर्शनयुक्त इत्यर्थः । 'उवमा न विज्जइ'—उपमीयते सादृश्यात् परिच्छिद्यते यया सोपमा— तुल्यता, सा मुक्तात्मनो न विद्यते लोकातिगत्वात्, कुतस्तेषामुपमा ? । कुत एतदिति चेदाह—अरूवी— तेषां मुक्तात्मनां या सत्ता सा अरूपिणी, अरूपित्वं च दीर्घादिप्रतिषेधेन प्रतिपादितमेव । किञ्च—'अपयस्स' त्ति— न विद्यते पदमवस्थाविशेषो यस्य सोऽपदः, तस्य पदं-अभिधानं तच्च नास्ति, वाच्यविशेषाभाव इत्येतद्दर्शयितुमाह—

से न सद्दे न रूवे न गंधे न रसे न फासे इच्चेवन्ति बेमि ॥ लोगसारस्स छट्ठो उद्देसो समत्तो ।

'से न सद्दे' इत्यादि— सो न शब्दरूपगन्धस्पर्शरूपः, एतावन्त एव वस्तुनो भेदाः स्युः, तत्प्रतिषेधाच्च नापरः कश्चिद्

विशेषः संभाव्यते, येनासौ व्यपदिश्यतेति । इति श्रीचन्द्रगच्छाम्भोजदिनमणीनां श्रीमहेश्वरसूरिसूरिशिरोमणीनां पट्टे श्रीअजितदेवसूरिविरचितायां दीपिकायां श्रीआचाराङ्गे पञ्चमाध्ययनं समाप्तम् ॥

अथोक्तं पञ्चमाध्ययनं, साम्प्रतं षष्ठमारभ्यते । अस्य चायमभिसम्बन्धः । इहानन्तराध्ययने लोकसारभूतोऽपि संयमो मोक्षश्च प्रतिपादितः । स च निस्सङ्गताव्यतिरेकेण कर्म्मधुननमन्तरेण च न भवतीत्यतस्तत्प्रतिपादनार्थमिदमुपक्रम्यते । तस्यादिमं सूत्रम्—

" ओबुज्झमाणे इह माणवेसु आघाइ से नरे, जस्स इमाओ जाईओ सव्वओ सुपडिलेहियाओ भवंति, आघाइ से नाणमणेलिसं, से किट्टइ तेसिं समुट्ठियाणं निक्खित्तदंडाणं समाहियाणं पन्नाणमंताणं इह मुत्तिमग्गं, एवं प्पेगे महावीरा विपरिक्कमंति, पासह एगे अवसीयमाणे अणत्तपन्ने से बेमि, से जहावि ( सेवि ) कुंमे हरए विणिविट्ठचित्ते पच्छन्नपलासे उम्मग्गं से नो लहइ भंजगा इव संनिवेसं नो चयंति एवं एगे अणेगरूवेहिं कुलेहिं जाया रूवेहिं सत्ता कलुणं थणंति नियाणओ ते न लभंति मुक्खं, अह पास तेहिं कुलेहिं आयत्ताए जाया । गंडी अहवा कोढी, रायंसी अवमारियं । काणियं झिम्मियं चेव, कुणियं खुज्जियं तहा ॥ १४ ॥ उदरिं च पास मूयं च, सूणीयं च गिलासणिं । वेवइं पीढसप्पिं च सिलिवयं महुमेहणिं ॥१५॥ सोलस एए रोगा, अक्खाया अणुपुव्वसो । अह णं फुसंति आयंका, फासा य असमंजसा ॥१६॥ मरणं तेसिं संपेहाए उववायं चवणं च नच्चा परियागं च संपेहाए "

' ओबुज्झमाणे 'त्यादि—अवबुध्यमानो—अनावारकज्ञानसद्भावाद् ' इहे 'ति मनुष्यलोके मानवेषु धर्म्ममाख्याति स नरो भवोपग्राहिकर्म्मसद्भावाद् मनुष्यभावव्यवस्थितः सन् कृतार्थोऽपि सत्त्वहिताय धर्म्ममाख्याति-धर्म्मं कथयति । किं तीर्थ-

कृदेव कथयति ? उतान्योऽपि विशिष्टज्ञानवान् धर्म्माविर्भावनं करोतीति ?, दर्शयितुमाह–' जस्सिमाउ 'त्ति–यस्याऽतीन्द्रियज्ञानिनः श्रुतधरस्य वा इमा जातय एकेन्द्रियादिकाः ' सव्वउ 'त्ति–सर्वैः प्रकारैः सूक्ष्मादिभेदैः ' सुपडिलेहिय 'त्ति–सुष्ठु शङ्कादिनिराकरणेन प्रत्युपेक्षिता ज्ञाता भवन्ति स धर्म्ममाचष्टे, नापरः। इदमेवाह–' आघाइ से ' ति– आख्याति कथयति स च तीर्थकृत्सामान्यकेवली वा। किमाख्याति ? ' णाण ' इत्यादि–ज्ञानं पञ्चधा मत्यादि, किम्भूतं ? ' अणेलिसं '–अनीदृशं नान्यत्रेदृशमस्तीत्यनीदृशमाख्याति। केषामग्रे धर्म्ममाचष्टे ? ' से किट्टइ '–स तीर्थकृद्गणभृदादिः कीर्त्तयति यथावस्थितान् भावान् तेषां धर्म्मचरणाय सम्यगुत्थितानाम्। यदिवा उत्थिताः–द्रव्यतो भावतश्च, द्रव्यतः शरीरेण भावतो ज्ञानादिभिः। तत्र स्त्रियः समवसरणस्था उभयथाप्युत्थिताः शृण्वन्ति, पुरुषास्तु द्रव्यतो भाज्याः। भावोत्थितानां तु धर्म्ममावेदयति, अनुत्थितानामग्रेऽपि तथैवाचष्टे। किम्भूतानां भावोत्थितानां ?, ' निक्खित्तदंडाणं 'ति–निक्षिप्तदण्डानां प्राण्युपमर्दरहितानां ' समाहितानां '– तपःसंयमे सावधानानां, प्रज्ञामतां इहास्मिन्मनुष्यलोके मुक्तिमार्ग्गं ज्ञानाद्यात्मकं कीर्त्तयति। ' एवमप्येके '-महावीरा लघुकर्म्माणः विविधं संयमसंग्रामशिरसि पराक्रमन्ते। एतद्विपरीतान् पश्यत यूयं, किम्भूतान् ? ' अणत्तपन्ने '–नात्मने हिता प्रज्ञा येषां ते नात्मप्रज्ञास्तान्। कुतः पुनः संयमेऽवसीदन्ति ? इत्यारेकायां सोऽहं ब्रवीमि। अत्र दृष्टान्तद्वारेण सोपपत्तिकं कारणमाह–'से जहा वि' इत्यादि–से इति स इति तच्छब्दार्थे, अपिशब्दश्चार्थे, स च वाक्योपन्यासार्थः, तद्यथा च कूर्म्मो महाह्रदे विनिविष्टं चित्तं यस्याऽसौ विनिविष्टचित्तो गार्द्ध्यमुपगतः पलाशैः पत्रैः प्रच्छन्नः ' उम्मग्गं 'ति–विवरं उन्मज्यतेऽनेनेति चोन्मज्जनं उर्द्ध्वं वा मार्ग्गमुन्मार्ग्गं सर्वथा विवरं रन्ध्रं तदसौ न लभते इत्यक्षरार्थो भावार्थस्त्वयं–

यथा कश्चिद् ह्रदो योजनशतसहस्रविस्तीर्णः पलाशप्रबलशैवलाच्छादितः नानारूपकरिमकरमत्स्यकच्छपादिजलचराश्रयः, तन्मध्ये चैकं विश्रसापरिणामापादितं कच्छपग्रीवाप्रमाणं विवरं, तत्रैकेन कूर्म्मेण निजयूथात्प्रभ्रष्टेन वियोगाकुलतया इतश्चेतश्च ग्रीवां प्रक्षिपता कुतश्चिद् भवितव्यतानियोगेन तद् रन्ध्रं प्राप्तं, तत्र चासौ शरच्चन्द्रिकया क्षीरोदसलिलप्रवाहकल्पयोपशोभितं ग्रहगणानेकतारकाकीर्णं नभस्तलमीक्षांचक्रे, दृष्ट्वा चातीव मुमुदे, आसीच्चास्य मनसि यदि तानि मद्वर्ग्याणि पश्यन्ति, तदा चारुतरं स्यात् । शेषं सुगमं, दशदृष्टान्तमध्ये कूर्म्मदृष्टान्तादवसेयम् । अस्यायमर्थोपनयः—संसारह्रदे जीवकूर्म्मः, कर्म्मशैवलविवरं—आर्यक्षेत्रसुकुलोत्पत्त्यादिकं मनुष्यावतारः, शेषं पूर्ववत् । तस्मादऽवाप्य भवशतदुरापं सम्यक्त्वं, क्षणमेकं तत्र प्रमादवता न भाव्यम् । पुनरप्याह—' भंजग ' इत्यादि— भंजगा— वृक्षास्त इव शीतोष्णप्रकम्पनछेदनशाखाकर्षणमोटनभञ्जनरूपानुपद्रवान् सहमाना अपि सन्निवेशं—स्थानं कर्मपरतया न त्यजन्ति, एवं ' एगे ' इत्यादि—एवं वृक्षोपमया एके कर्म्मगुरवोऽनेकरूपेषु उच्चावचेषु कुलेषु जाता धर्म्मचरणयोग्या अपि रूपेषु चक्षुरिन्द्रियानुकूलेषु उपलक्षणात् शब्दादिषु विषयेषु सक्ताः शारीरमानसदुःखिता राजोपद्रवोपद्रुता अग्निदाघदग्धसर्वस्वा नानादुःखोत्कीर्णमपि गृहवासं त्यक्तुमसमर्थाः । अपितु तत्स्था एव तेषु तेषु व्यसनोपनिपातेषु सत्सु ' करुणं ' स्तनन्ति—दीनमाक्रोशन्ति निदानतस्ते मोक्षं न लभन्ते, मोक्षं-दुःखापगमम् । दुःखविमोक्षाभावे च यथा नानाव्याधिव्याप्ताः संसारोदरे प्राणिनो वर्त्तन्ते । तद्दर्शयितुमाह—' अह पास तेहि 'मित्यादि— अथेत्यनन्तरं ' से 'त्ति—स प्राणी ते प्राणिनो वा, तेषूच्चावचेषु कुलेषु आत्मत्वाय—आत्मीयकर्म्मानुभवाय जाता उत्पन्नास्तदुदयाच्चेमामवस्थामनुभवन्तीत्यादि, षोडशरोगवक्तव्यतानुगतं श्लोकत्रयं—तत्र वातपित्तश्लेष्मसन्निपातजं चतुर्धा गण्डं, तदस्यास्तीति गण्डी—गण्डमालावान् । १ ।, तथा कुष्ठी— कुष्ठमष्टादशभेद-

। २ । राजांशी-क्षयी । ३ । अवमारियं-अपस्मारः स तु वातपित्तादिचतुर्द्धा, आकस्मिकी भ्रमिर्मूर्च्छा
मस्याऽस्तीति । ४ । तथा काणियंति-अक्षिरोगः । ५ । झिमियंति-जाड्यतोऽपि सर्वशरीरावयवाच्छादनं । ६ । कुणियंति-गर्भाधानदोषात्
ह्रस्वैकपादो न्यूनैकपाणिर्वा कुणिः । ७ । खुज्जियंति-कुब्जं पृष्ठादावस्यातीति कुब्जी । ८ । उदरी-वातपित्तादऽष्टधोदरं तद-
स्यास्तीत्युदरी । ९ । तत्र जलोदरी असाध्यः । ' पास मूयं 'त्ति-पश्यावधारय मूकं मन्मनभाषिणं वा । १० । ' सूणियं
च 'त्ति-शूनत्वं-श्वयथुर्वातपित्तश्लेष्मसन्निपातरक्ताभिघातजोऽयं पोढा । ११ । गिलासणीति-भस्मको व्याधिः । १२ । वेव-
इत्ति-वातसमुत्थः शरीरावयवानां कम्पः प्रकामं वेपते प्रकम्पते वेपतिका । १३ । ' पीढसप्पि 'त्ति-पीढं काष्ठं तेन सर्प्पति-
गच्छतीति काष्ठसर्प्पी । १४ । ' सिलवयं 'ति-श्लीपदं-पादादौ काठिन्यं । १५ । पुराणोदकभूमिष्ठाः सर्वर्त्तुषु शीतलाः ।
ये देशास्तेषु जायन्ते श्लीपदानि विशेषतः ॥ १ ॥ ' महुमेहणि 'त्ति-मधुमेहो वस्तिरोगः, स विद्यते यस्याऽसौ मधुमेही
। १६ । ' सोलस 'त्ति-तदेवं पोडशाप्येतेऽनन्तरोक्ता रोगा-व्याधयो ' अक्खाय 'त्ति-व्याख्याता आनुपूर्वशः-अनुक्रमेण, अह-
अथानन्तरं, णं-व्याक्यालङ्कारे, फुसन्ति-स्पृशन्ति-आतङ्का रोगाः स्पर्शा गाढप्रहारा असमञ्जसाः आतङ्काः सद्य जीवितापहा-
रिणः । अन्यच्च यत् संसारिणोऽधिकं स्यात्तदाह-' मरणं तेसिं 'त्ति- तेषां रोगेण संक्लेशितानां मरणं-प्राणत्यागलक्षणं सम्प्रे-
क्ष्य-पर्यालोच्य, पुनरुपपातं च्यवनं च देवानां, कर्म्मोदयात् सञ्चितं ज्ञात्वा तद् विधेयं, येन गण्डादिरोगाणामभावो भवति ।
किञ्च-' परियाग 'मित्यादि-कर्म्मणां मिथ्यात्वाविरतिकपाययोगाहितानामबाधोत्तरकालमुदयावस्थायां परिपाकं च ' सम्प्रे-
क्ष्य '-पर्यालोच्य तदुच्छित्तये यतितव्यमिति ।

" तं सुणेह जहा तहा संति पाणा अंधा तमसि वियाहिया, तमेव सइं असइं अइअच्च उच्चावयफासे पडिसंवेएइ, बुद्धेहिं एयं पवेइयं-संति पाणा वासगा रसगा उदए उदएचरा आगासगामिणो, पाणा पाणे किलेसंति पास लोए महब्भयं "

' तं सुणेह ' इत्यादि-तं कर्म्मविपाकं यथावस्थितं तथैव ममावेदयतः शृणुत यूयं, तदेव कर्म्मविपाकं सूत्रेणाह-' संति पाणा ' इत्यादि- सन्ति-विद्यन्ते प्राणाः प्राणिनो वा अन्धाः-चक्षुरिन्द्रियविकलाः, भावान्धा अपि सदसद्विवेकविकलाः, तमसि-अन्धकारे नरकगत्यादौ । भावान्धकारेऽपि च मिथ्यात्वाविरतिप्रमादकषायादिके कर्म्मविपाकापादिते व्यवस्थिता व्याख्याताः । किञ्च-' तमेव सइ ' मित्यादि- तामेवावस्थां कुष्ठाद्यापादितां एकेन्द्रियापर्याप्तकादिकां वा सकृदनुभूय कर्म्मोदयात्तामेवासकृदनेकशोऽतिगत्योच्चावचान्-तीव्रमन्दान् स्पर्शान् दुःखविशेषान् प्रतिसंवेदयति-अनुभवति । एतच्च बुद्धैः तीर्थकृद्भिः एतत्-अनन्तरोक्तं प्रवेदितं-कथितमित्याह-' संति पाण 'त्ति-सन्ति विद्यन्ते प्राणाः प्राणिनो वासका-भाषालब्धिसम्पन्ना द्वीन्द्रियादयः । रसमनुगच्छतीति रसगाः कटुतिक्तादिरसवेत्तारः । उदके चरन्तीत्युदकचराः-पूतरकमत्स्यकच्छपादयः । स्थलचारिणोपिऽजाविकादयोऽपि । आकाशे गमनं येषां तेऽप्याकाशगामिनः, पक्षिणश्च । ' पाणापाणे ' ति-इत्येवं, सर्वेऽपि प्राणिनोऽपरान् प्राणिनः आहाराद्यर्थं मत्सरादिना वा क्लेशयन्त्युपतापयन्ति । यद्येवं, ततः किमित्याह-' पास लोए 'ति-पश्य-अवलोकय लोके चतुर्दशात्मके कर्म्मविपाकात्सकाशात् महद् भयमित्याह—

" बहुदुक्खा हु जंतवो, सत्ता कामेसु माणवा, अबलेण वहं गच्छन्ति सरीरेण पभंगुरेण, अट्टे से बहु दुक्खे इइ बाले पकुव्वइ, एए रोगा बहू नच्चा आउरा परियावए, नालं पास, अलं तवेएहिं, एयं पास मुणी ! महब्भयं नाइवाइज्ज कंचणं "

उ० १ लोके जीवानां स्वरूप-कथनक्रम् ।

‘ बहुदुक्खा ’ इत्यादि–बहुदुःखा जन्तवः, हु निश्चितं स्वकृतकर्म्मभोक्तारः । ‘ सत्ताकामेसु ’ इत्यादि–यस्मादनादिभवाभ्यासेनाऽगणितोत्तरपरिणामाः सक्ताः कामेष्विच्छामदनरूपेषु मानवाः प्रतीताः । कामसक्ताश्च यदऽवाप्नुवन्ति तदाह–‘ अबलेणे ’त्यादि– अबलेन-बलरहितेन निःसारेणौदारिकेण शरीरेण ‘ प्रभङ्गुरेण ’–स्वत एव भङ्गशीलेन तत्सुखाधानाय कर्म्मोपचित्याऽनेकशो वधं गच्छन्ति । कः पुनः कामेषु रतिं कुर्यात् ? इत्याह–‘ अट्टे ’–मोहोदयाद् आर्त्तः, बहु दुःखं, प्राप्यमनेनेति बहुदुःखः, ‘ इइ बाले ’ति-इत्येवं बालोऽज्ञो रागद्वेषाभिभूतः प्रकरोति । किञ्च–‘एए रोगा ’ इत्यादि–एतान्–गण्डकुष्ठादिषोडशविधान् रोगानुत्पन्नान् ज्ञात्वा, ‘ आउर ’त्ति–तद्रोगवेदनातुरास्सन्तः चिकित्सायै प्राणिनः परितापयेयुः, लावकादिपिशिताशिनो वा भवेयुः, बहुविधप्राणिघातं वा कुर्युरित्यर्थः । प्राण्युपमर्दचिकित्सया किल्बिषानुसङ्ग एव । एतदेवाह–‘ नालं पास ’त्ति– पश्यैतद् विमलविवेकावलोकनेन ‘ नालं ’–न समर्थाश्चिकित्साविधयः कामोदयोपशमं विधातुम् । यद्येवं ततः किं ?, ‘ अलं तव ’त्ति–अलं–पर्याप्तं तव–सदसद्विवेकिनः, एभिः पापोपादानभूतैः चिकित्साविधिभिः । किञ्च–‘ एयं पास ’त्ति–एतत्प्राण्युपमर्दादिकं पश्यावधारय हे मुने ! हे साधो ! ‘ महब्भयं ’–महद्भयहेतुत्वान्महद्भयम् । यद्येवं ततः किं कुर्यादित्याह–‘ नाइवाइज्ज ’त्ति नाऽतिपातयेत् न हन्यात् कञ्चनमपि प्राणिनम् । यत एकस्मिन्नपि प्राणिनि हन्यमानेऽष्टप्रकारमपि कर्म्म बद्ध्यते, तच्चानुत्ताराय संसारसागरस्य, अतो महाभयमिति—

“ आयाण भो सुस्सूस ! भो धूयवायं पवेयइस्सामि–इह खलु अत्तत्ताए तेहिं तेहिं कुलेहिं अभिसेएण अभिसंभूया अभिसंजाया अभिनिव्वुडा अभिसंवुड्ढा अभिसंबुद्धा अभिनिक्कंता अणुपुव्वेण महामुणी ”

उद्देशः १
लोके महाभयं दृष्ट्वा जीवातिपातं त्याज्यमिति ।

अभि-सम्भूतादि स्वरूप-प्रदर्शनम् ।

'आयाण' इत्यादि– भो इत्यामन्त्रणे यदहमुत्तरत्रावेदिष्यामि भवतस्तद् आजानीहि–अवधारय, 'शुश्रूषस्व' श्रवणेच्छां विधेहि । भोरित्यामंत्रणे, अर्थगरीयस्त्वख्यापनाय, नात्र प्रमादो विधेयो, धूतवादं च कथयिष्याम्यहं, धूतमष्टप्रकारककर्म्मधूननं ज्ञातिपरित्यागो वा, तस्य वादो धूतवादस्तं प्रवेदयिष्यामि । कोऽसौ धूतवाद इत्याह–'इह खलु' इत्यादि–इहाऽस्मिन्संसारे खलु वाक्यालङ्कारे, आत्मनो भाव आत्मता-जीवास्तिता स्वकृतकर्म्मपरिणतिर्वा, तया अभिसम्भूताः सञ्जाताः, क्व ? 'तेहिं तेहिं'ति– तेषु तेषूच्चावच्चेषु कुलेषु यथास्वं कर्म्मोदयापादितेषु 'अभिषेकेण' शुक्रशोणितनिषेकादिक्रमेण । तत्राऽयं क्रमः–सप्ताहं कललं विद्यात् ततः सप्ताहमर्बुदम् । अर्बुदाज्जायते पेशी पेशीतोऽपि घनं भवेत् ॥ १ ॥ तत्र यावत्कललं तावदभिसम्भूताः, पेशीं यावदभिसञ्जाताः, ततः साङ्गोपाङ्गस्नायुशिरोरोमादिक्रमाभिनिवर्त्तनादऽभिनिवृत्ताः, ततः प्रसूताः सन्तोऽभिसंवृद्धाः, धर्म्मश्रवणयोग्यावस्थायां वर्त्तमाना धर्मकथादिनिमित्तमासाद्योपलब्धपुण्यपापतयाऽभिसम्बुद्धाः, ततः सद्विवेकं जानानाः अभिनिष्क्रान्ताः, ततोऽधीताचारादिशास्त्राः तदर्थभावनोपबृंहितचरणपरिणामाः, 'अणुपुव्वेणं'ति–अनुपूर्वेण क्रमपरम्परया शिष्यगीतार्थक्षपकपरिहारविशुद्धिकैकाकिविहारिजिनकल्पिकावसाना मुनयोऽभूवन्निति । अभिसम्बुद्धं च प्रविव्रजिषुमुपलभ्य यन्निजाः कुर्युस्तद्दर्शयितुमाह—

"तं परिक्कमंतं परिदेवमाणा माणे चयाहि इय ते वयंति, छंदोवणीया अज्झोववन्ना अक्कंदकारी जणगा रुयंति, अतारिसे मुणी ओहंतरए जणगा जेण विप्पजढा, सरणं तत्थ नो समेइ, कहं नु नाम से तत्थ रमइ ? एयं नाणं सया समणुवासिज्जासित्ति बेमि"

॥ धूताध्ययने प्रथम उद्देशकः ६–१ ॥

'तं परिक्कमंत' मित्यादि– तं-अवगततत्त्वं गृहवासात् पराङ्मुखं महापुरुषसेवितं पन्थानं पराक्रममाणमुपलभ्य माता-पितृकलत्रादयः परिदेवमाना आक्रन्दं कुर्वन्तः, 'छन्दोपनीताः'–तवाभिप्रायानुवर्त्तिनः स्म, 'अज्झुववन्नाः' त्वां विना न जीवामः, आक्रन्दकारिणः जनकाः-पित्रादयो रुदन्ति। तत्र मुनिः कीदृशो भवति ?, 'अतारिसे'– न तादृशोऽतादृशः, स एव मुनिः 'ओघं तरइ'–संसाराम्भोधिलब्धपारः, येन जनकाः 'विप्पजढा'–त्यक्ताः। एवं जानाति–एनं बन्धुवर्गं मम शरणं नैव समेति। यस्तु 'किह णाम'–किञ्चिन्नामा तेषां वचसि रमते शूरस्तु नैव रमते। एतत्पूर्वोक्तं ज्ञानं सदा आत्मनि समनुवासयेदिति व्यवस्थापयेदात्मनि ॥ धूताध्ययने प्रथमोद्देशकः समाप्तः ॥ १ ॥

" आउरं लोगमायाए चइत्ता पुव्वसंजोगं हिच्चा उवसमं वसित्ता बंभचेरंसि वसु वा अणुवसु वा जाणित्तु धम्मं जहा तहा अहेगे तमचाई कुसीला "

'आउर'मित्यादि–आतुरं कामभोगातुरं लोकं मातापितृकलत्रादिकं आदाय, ज्ञानेन परिगृहीत्वा परिच्छिद्य– त्यक्त्वा च पूर्वसंयोगं हित्वा–गत्वोपशमं उषित्वा ब्रह्मचर्ये किम्भूतः सन् ? 'वसुव'त्ति–वसुः सुसाधुः 'अनुवसुः' श्रावकः, तदुक्तं–वीतरागो वसुर्ज्ञेयो, जिनो वा संयतोऽथवा। सरागो ह्यनुवसुः प्रोक्तः स्थविरः श्रावकोऽपि वा ॥ १ ॥ 'जाणित्तु' त्ति–ज्ञात्वा 'धम्मं' श्रुतचारित्राख्यं यथा तथाऽवस्थितं 'अहेग'त्ति–अथैके भवितव्यतानियोगेन धर्मं प्रतिपद्य च पालयितुं न शक्नुवन्ति। किंविधास्ते ?, 'कुशीलाः' अनाचारप्रवर्तिनः। एवम्भूताः किं कुर्युरित्याह—

" वत्थं पडिग्गहं कंबलं पायपुंछणं विउसिज्जा, अणुपुव्वेण अणहियासेमाणा परीसहे दूरहियासए, कामे ममायमाणस्स इयाणिं

मुहुत्तेण वा अपरिमाणाए भेए, एवं से अंतराएहिं कामेहिं आकेवलिएहिं अवइन्ना चेए ”

‘ वत्थ ’ मित्यादि–वस्त्रं-क्षौमिकादि, पतद्ग्रहं–पात्रं, कम्बलं प्रतीतं, पादप्रोच्छनं–रजोहरणादि एतानि, ‘ विउसेज्जा ’–व्युत्सृज्य कश्चिद् देशविरतिमभ्युपगच्छति, कश्चिद्दर्शनमेवालम्बते, कश्चित्तस्माद् भ्रश्यति। कथं पुनर्दुर्लभं चारित्रमवाप्य त्यजेयुः ?, ‘ अणुपुव्वेणं ’ति परीषहान् दुरधिसहनीयान् आनुपूर्व्येण–परिपाट्या यौगपद्येन वोदीर्णाननधिसहमानाः परीषहैर्भग्ना मोक्षमार्गं परित्यजन्ति । किं कुर्वन्नित्याह–‘ काममममाये ’त्यादि– कामान्–भोगान् ममायमानस्य स्वीकुर्वतोऽन्तरादयोदिदानीं-तत्क्षणमेव प्रव्रज्यापरित्यागाद् भोगान् भोक्तुं न समर्थो भवेत्, अन्तर्मुहूर्तेन वा, कण्डरीकस्य वा अहोरात्रेण। ततोऽप्यूर्ध्वं शरीरभेदो भवत्यपरिमाणाय, एवम्भूत आत्मना सार्द्धं विवक्षितशरीरभेदो भवति, येनानन्तेनापि कालेन पुनः पञ्चेन्द्रियत्वं न प्राप्नोति ‘ एवं स एव भोगाकांक्षी । आन्तरायिकैः कामैर्बहुप्रत्यपायैः आकेवलिका असम्पूर्णास्तैः सद्भिरवतीर्णाः संसारं भोगाभिलाषिणः, कामैरतृप्ता एव शरीरभेदमवाप्नुवन्तीत्यर्थः। अपरे तु चरणपरिणाममवाप्य लघुकर्म्मतया प्रतिक्षणं प्रवर्द्धमानाऽध्यवसायिनो भवन्तीति दर्शयितुमाह—

“ अहेगे धम्ममायाय आयाणपभिईसुपणिहिए चरे, अप्पलीयमाणे दढे सव्वंगेहिं परिन्नाय, एस पणए महामुणी, अइअच्च सव्वओ संगं न महं अत्थित्ति इय एगो अहं, असिंस जयमाणे इत्थ विरए अणगारे सव्वओ मुंडे रीयंते, जे अचेले परिवुसिए संचिक्खइ ओमोयरियाए, से आकुट्ठे वा हए वा लुंचिए वा पलियं पकुच्छे अदुवा पकत्थ अतहेहिं सद्दफासेहिं इय संखाए एगयरे अन्नयरे अभिन्नाय तितिक्खमाणे परिव्वए जे य हिरी जे य अहिरीमाणा ”

उ० २
कुशीलो भोगाकांक्षी प्राप्तमपि चरणं त्यजति ।

'अहेगे धम्म' मित्यादि–अथैके विशुद्धपरिणामाः धर्म्मं श्रुतचारित्रात्मकं 'आदाय'–गृहीत्वा आदानप्रभृतिधर्म्मोपकरणादिसहिताः धर्म्मोपकरणेषु सुप्रणिहिताः परीषहादिसहिष्णवः सर्वज्ञोपदिष्टं धर्म्मं चरेयुः । किम्भूताः ?, 'अप्पलीयमाने'–कामेषु मातृपित्रादिसंयोगेषु न प्रलीयमाना अप्रलीयमाना अनभिसक्ताः, धर्म्माचरणेषु दृढाः तपसंयमादौ द्रढिमानमालम्बमाना धर्म्मं चरन्तीति । किञ्च–'सव्वंगेहि'–सर्वाङ्गैः द्विविधयापि परिज्ञया ज्ञात्वा त्यजेदित्यर्थः । परित्यागे गुणमाह–'एस पणए'त्ति–एष इति कामपिपासापरित्यागी प्रकर्षेण नतः प्रणतः-प्रह्वः संयमे कर्म्मधूननायां वा महामुनिर्भवति नापरः । किञ्च–'अइअच्च'त्ति–अतिक्रम्य सर्वतः सङ्ग–सम्बन्धं पुत्रकलत्रादिजनितं कामानुषङ्गं वा । किं भावयेदित्याह–'न महं अत्थि'–त्ति न मम किमप्यस्तीति यत्संसारे पतत आलम्बनाय स्यादिति । तदभावाच्च इत्युक्तक्रमेण 'एकोऽहं' अस्मिन्संसारे, न चाहमन्यस्य कस्यचिदित्याह–'जयमाणे'त्ति–अत्राऽस्मिन् शासने यतमानः, 'इत्थं'–अत्र सावद्यारम्भाद्विरतः कोऽसौ ? अनगारः प्रव्रजितः । एकत्वभावनां भावयन्नवमोदर्ये संतिष्ठते इत्युत्तरसूत्रेण सम्बन्धः, क्रियोत्तरसूत्रेष्वपि लगयितव्या । किञ्च–'सवओ मुंडे'त्ति सर्वतो–द्रव्यतो भावतश्च मुण्डो 'रीयमाणः' संयमानुष्ठाने गच्छन्, किम्भूत इत्याह–'जे अचेले'–योऽचेलो अल्पचेलो जिनकल्पिको वा पर्युषितः संयमे उद्युक्तविहारी, अन्तप्रान्तभोजी वा, तदपि न प्रकामतया, संतिष्ठते अवमोदर्ये । एवंविधोऽनगारो ग्रामकण्टकैस्तुद्येतैतद्दर्शयन्नाह–'से'त्यादि स चाक्रुष्टो वाग्भिः, हतो दण्डादिभिर्लुञ्चितः केशापकर्षणतः, तदेवं जानीते, पूर्वकर्म्मणः फलमेतदिति क्षमारूपी भवेत् । कथं पुनर्वाग्भिराक्रुश्यते ?, 'पलियं पकुच्छे'ति–पलियं-कर्म्म प्रकुत्सेत्,–जुगुप्सेत, पूर्वाचरितकर्म्मण इदमेव फलम् । 'अदुवा'ति–अथवा जकारचकारमकारादिभिरपरैः प्रकथ्य निन्दा

उ० २
महामुनी
सर्वज्ञोप-
दिष्टमुत्कट-
चारित्र-
मार्गमा-
चरतीति ।

साधोः परिषहसहनमुपदर्शितमिति ।

क्रियते, एभिर्वक्ष्यमाणैरित्याह–' अतहेहिं 'मित्यादि–अतथ्यै–र्वितथैरसद्भूतैः शब्दैश्चौरस्त्वं पारदारिक इत्येवमादिकैः, स्पर्शैरसद्भूतैः साधोः कर्त्तुमयुक्तैः करचरणच्छेदनादिभिः, स्वकृतादृष्टफलमेतत् संख्याय–ज्ञात्वा तितिक्षमाणः परिव्रजेदिति । परीषहाश्चानुकूलप्रतिकूलतया भिन्ना इति दर्शयति–' एगयरे 'इत्यादि–एकतरान्–अनुकूलान् अन्यतरान्-प्रतिकूलान् उदीर्णानऽभिज्ञाय सम्यक् तितिक्षमाणः परिव्रजेत् । यदिवा अन्यथा परीषहाणां द्वैविध्यम् । ' जे य हिरी '–ये च परीषहाः सत्कारादयः साधोर्हारिणो–मनआह्लादकारिणो, ये तु प्रतिकूला अहारिणो मनसोऽनिष्टाः, यदिवा ह्रीरूपाः याचनाऽचेलादयः, अह्रीरूपा मनसश्चाऽलज्जाकराः शीतोष्णादय इत्येतान् द्विरूपानपि परीषहान् सम्यक् तितिक्षमाणः परिव्रजेदिति । किञ्च—

" चिच्चा सव्वं विसुत्तियं संफासे फासे समियदंसणे, एए भो णगिणा वुत्ता जे लोगंसि अणागमणधम्मिणो आणाए मामगं धम्मं एस उत्तरवाए इह माणवाणं वियाहिए, इत्थोवरए तं झोसमाणे आयाणिज्जं परिन्नाय परियाएण विगिंचइ, इह एगेसिं एगचरिया होइ तत्थियरा इयरेहिं कुलेहिं सुद्धेसणाए सव्वेसणाए से मेहावी परिव्वए सुब्भि अदुवा दुब्भि अदुवा तत्थ भेरवा पाणा पाणे किलेसंति, ते फासे पुट्ठो धीरे अहियासिज्जासित्ति बेमि ॥ ६–२–

' चिच्चा सव ' मित्यादि–त्यक्त्वा सर्वां विश्रोतसिकां परीषहकृतां, स्पर्शान्–परीषहापादितान् दुःखानुभवान् संस्पृशेत्-सम्यगधिसहेत । किम्भूतः ?, ' समियदंसणे '–सम्यग् इतं-गतं दर्शनं यस्य स समितदर्शनं सम्यग्दृष्टिरित्यर्थः । तत्सहिष्णवश्च किम्भूताः स्युरित्याह–' एए भो ' इत्यादि–भो इत्यामन्त्रणे, एते परीषहादिसहिष्णवो नग्ना भावनिर्ग्रन्था उक्ताः कथिताः । ' जे लोगंसि '–येऽस्मिन्मनुष्यलोके ' अणागमण 'त्ति–अनागमनं धर्म्मो येषां ते अनागमधर्म्माणः, यथारोपित-

प्रतिज्ञाभारवाहितत्वात्, ते पुनर्गृहं प्रति न प्रत्यागमनेप्सवः। किञ्च-' आणाए 'ति-आज्ञाप्यतेऽनया इत्याज्ञा तया मामकं धर्म्मं सम्यगनुपालयेत्, तीर्थकृदेवाह, यदिवा धर्म्मानुष्ठायी एवमाह, धर्म्मं एवैको मामकोऽन्यत्पारक्यमतस्तमाज्ञया तीर्थकरोपदेशेन सम्यक् करोमि। किमाज्ञया धर्म्मोऽनुपाल्यते ? इत्यत आह-' एस 'त्ति-एष अनन्तरोक्त उत्तरवाद उत्कृष्टवाद इह मानवानां व्याख्यातः। किञ्च-' इत्थोव' इत्यादि-अत्राऽस्मिन् कर्म्मधूननोपाये संयमे उपरतः, ' तं झोसमाणे 'ति-तत्राष्टविधं कर्म्म क्षपयन् अधर्मं न चरेत्, ' आयाणिज्जं '-आदीयते इत्यादानीयं कर्म्म तत्परिज्ञाय मूलोत्तरप्रकृतिभेदतो ज्ञात्वा पर्यायेण-श्रामण्येन विवेचयति-क्षपयति। ' इहमेगेसि 'त्ति-इहास्मिन्प्रवचने एकेषां-शिथिलकर्म्मणामेकचर्या भवति, एकाकिविहारप्रतिमाभ्युपगमो भवति। तत्र च नानारूपाभिग्रहविशेषास्तपश्चरणविशेषाश्च भवन्ति। अतस्तावत्प्राभृतिकामधिकृत्याह-' तत्थियर ' इत्यादि-तत्र तस्मिन् एकाकिविहारे ' इतरे ' सामान्यसाधुभ्यो विशिष्टतराः ' इतरेषु ' अन्तप्रान्तेषु कुलेषु शुद्धैषणया दशैषणादोषरहितेनाहारादिना सर्वैषणया-सर्वथाहाराद्युद्गमोत्पादनग्रासैषणारूपा तया शुद्धेन विधिना संयमे परिव्रजन्ति। बहुत्वेऽप्येकदेशतामाह- स मेधावी प्रज्ञावान् संयमे परिव्रजेत्। किञ्च-' सुब्भिवे 'त्यादि-स आहारस्तेषु इतरेषु सुरभिर्वा स्यादथवा दुरभिगन्धो, न तत्र रागद्वेषौ विदध्यात्। किञ्च ' तत्थ भेरवा 'इत्यादि-तत्र एकाकिविहारित्वे प्रतिपन्नस्यानगारस्य भैरवा भयानकाः प्राणाः प्राणिनो राक्षसादयोऽपि अपरान् प्राणिनः क्लेशयन्ति उपतापयन्ति। त्वं तु पुनस्तैः स्पृष्टस्तान् स्पर्शान् दुःखविशेषान् धीरो-अक्षोभ्यः सन् अधिसहस्व। इत्यधिकारसमाप्तौ ब्रवीमीति पूर्ववत्। धूताध्ययनस्य द्वितीयोद्देशकः ॥ ६-२—

उक्तो द्वितीयोद्देशकः, साम्प्रतं तृतीय आरभ्यते, अस्यायमभिसम्बन्धः । 'इहानन्तरोद्देशके कर्म्मधूननाऽभिहिता सा च नोपकरणशरीरधूननमन्तरेण । इत्यतः सूत्रम्—

" एयं खु मुणी आयाणं सया सुयक्खायधम्मे विहूयकप्पे निज्झोसइत्ता, जे अचेले परिवुसिए तस्स णं भिक्खुस्स नो एवं भवइ—परिजुण्णे मे वत्थे वत्थं जाइस्सामि सुत्तं जाइस्सामि सूइं जाइस्सामि संधिस्सामि सीविस्सामि उक्कसिस्सामि वुक्कसिस्सामि परिहिस्सामि पाउणिस्सामि, अदुवा तत्थ परिक्कमंतं भुज्जो अचेलं तणफासा फुसंति सीयफासा फुसंति तेउफासा फुसंति दंसमसगफासा फुसंति एगयरे अन्नयरे विरूवरूवे फासे अहियासेइ अचेले लाघवं आगममाणे, तवे से अभिसमन्नागए भवइ, जहेयं भगवया पवेइयं तमेव अभिसमिच्चा सव्वओ सव्वत्ताए संमत्तमेव समभिजाणिज्जा, एवं तेसिं महावीराणं चिररायं पुव्वाइं वासाणि रीयमाणाणं दवियाणं पास अहियासियं "

'एयं खु' इत्यादि—एतत्पूर्वोक्तं वक्ष्यमाणं वा खलु वाक्यालङ्कारे आदीयत इत्यादानं कर्म्म तच्च धर्म्मोपकरणातिरिक्तं वस्त्रादिरादानं, तन्मुनिः झोषयित्वा आदानमपनेष्यति । किम्भूतः ? सदा सर्वकालं सुष्ठु आख्यातो धर्म्मोऽस्येति स्वाख्यातधर्म्मा, तथा विधूतः—क्षुण्णः सम्यक्स्पृष्टः कल्पः—आचारो येन स तथा । कथं पुनस्तदादानं वस्त्रादि स्याद् ? येन तद् झोषयितव्यं भवेदित्याह—जे अचेलेति—अल्पार्थे नञ् यः साधुर्नास्य चेलमस्तीत्यचेलोऽल्पचेलः । तस्य भिक्षोर्नैतद् भवति नैतत्कल्पते, यथा परिजीर्णं मे वस्त्रं अचेलकोऽहं भविष्यामि । ततश्च शीतार्दितस्य किं शरणं ? मे स्याद् वस्त्रं विना, अतोऽहं कंचन श्रावकादिकं प्रत्यग्रं वस्त्रं याचिष्ये । तस्य वा जीर्णवस्त्रस्य सन्धनाय सूत्रं सूचिं च याचिष्ये । अथावाप्ताभ्यां सूचिसूत्राभ्यां जीर्णवस्त्ररन्ध्रं

उ० ३
उपकरण-शरीरधुननं कथं कार्य-मिति सूच-नम् ।

॥ १७१ ॥

सन्धास्यामि-पाटितं सेविष्यामि, लघुवाससोऽपरशकललगनतो उत्कर्षयिष्यामि, दीर्घवासखण्डापनयतो व्युत्कर्षयिष्यामि, एवं च कृते परिधास्यामि तथा प्रावरिष्यामि इत्याद्यार्त्तध्यानं न भवति। तस्य चाऽचेलस्य अल्पचेलस्य वा तृणादिस्पर्श-सद्भावे यद् विधेयं तदाह-' अदुवा तत्थे 'त्यादि-अथवा एतत् स्यात्-तत्राऽचेलत्वे पराक्रममाणं पुनस्तं साधुमचेलं क्वचिद्-ग्रामादौ त्वक्त्राणाभावात् तृणशय्याशायिनं तृणानां स्पर्शाः परुषाः तृणस्पर्शास्ते कदाचित् स्पृशन्ति तांश्चादीनमनस्कः सम्यग-ऽधिसहते, शीतस्पर्शाः तेजस्पर्शाः उष्णस्पर्शाः स्पृशन्ति, एवं दंशमशकस्पर्शाश्च। ' एगयरे 'ति—एतेषां परीषहाणामितरे विरुद्धा दंशमशकादयः प्रादुर्भवेयुः। शीतोष्णादिपरीषहाणां वा परस्परविरुद्धानामन्यतरे प्रादुष्ष्युः, ' विरूवरूवेहिं '-विरू-परूपाः स्पर्शाः दुःखविशेषास्तान् सम्यक्करणेनापध्यानरहितोऽधिसहेत। कोऽसौ ? अचेलो निर्वस्त्रः। किमभिसन्ध्य सहते-' लाघवं ' लघोर्भावो लाघवं द्रव्यतः भावतश्च, द्रव्यत उपकरणलाघवं भावतः कर्म्मलाघवं तमागमयन्-बुद्ध्यमानः परीषहोपसर्गान्सहते। ' तवे से ' इत्यादि-से-तस्य उपकरणलाघवेन कर्म्मलाघवमागमयतः कर्म्मलाघवेन चोपकरण-लाघवमागमयतस्तृणादिस्पर्शानधिसहमानस्य तपः कायक्लेशरूपतया बाह्यमभिसमन्वागतं भवति, सम्यग् आभिमुख्येन सोढं भवति। ' जहेयं भगवता 'ति-यथा येन प्रकारेणेदं यदुक्तं वक्ष्यमाणं चैतद् भगवता वर्द्धमानस्वामिना प्रवेदितम्। ' तमेवे ' त्यादि, तत्-उपकरणलाघवमाहारलाघवं चाभिसमेत्य-ज्ञात्वा सर्वतः इति-द्रव्यतः क्षेत्रतः कालतः भावतश्च, द्रव्यत आहारो-पकरणादौ, क्षेत्रतः सर्वग्रामादौ, कालतोऽहनि रात्रौ वा दुर्भिक्षादौ वा, सर्वात्मनेति, भावतः कृत्रिमकल्काद्यभावेन, ' समत्त-मेव समभिजाणिया '-सम्यक्त्वमेव सम्यगऽभिजानीयात्, तीर्थंकरगणधरोपदेशात्सम्यक्कुर्यादिति। ' एवं तेसि 'मित्यादि

उ० ३
उपकरण-
शरीरलाघ-
वता बाह्य-
तप इति।

एवमित्यचेलतया पर्युषितानां तृणादिस्पर्शान् अधिसहमानानां तेषां महावीराणां सकललोकचमत्कृतिकारकाणां 'चिरराय'—चिररात्रं-यावज्जीवं 'पूर्वाणि'—प्रभूतानि वर्षाणि रीयमाणानां—संयमानुष्ठाने गच्छतां 'द्रव्याणां'—भव्यानां मुक्तिगमनयोग्यानां पश्याऽवधारय। तृणस्पर्शादिकमभिहितं तदभिषोढव्यम्। एतच्चाधिसहमानानां यत्स्यात्तदाह—

"आगयपन्नाणाणं किसा बाहवो भवंति पयणुए य मंससोणिए विस्सेणिं कट्टु परिन्नाय, एस तिण्णे मुत्ते विरए वियाहिएति वेमि"

'आगयमि'त्यादि—आगतं प्रज्ञानं पदार्थाविर्भावकं येषां ते तथा, तेषां तपसा कृशा बाहवो—भुजा भवन्ति। 'प्रतनुके'—प्रतले मांसशाणिते भवतः। तथा 'विस्सेणिं—संसारश्रेणी-संसारावतरणी रागद्वेषकषायसन्ततिस्तां क्षान्त्यादिना विश्रेणीं कृत्वा तथा परिज्ञाय—ज्ञात्वा समत्वभावनया, एष उक्तलक्षणो मुनिस्तीर्णः मुक्तो विरतो व्याख्यात इति ब्रवीमीति पूर्ववत्।

"विरयं भिक्खुं रीयंतं चिरराओसियं अरई तत्थ किं विधारए ?, संधेमाणे समुट्ठिए, जहा से दीवे असंदीणे एवं से धम्मे आरियपदेसिए, ते अणवकंखमाणा पाणे अणइवाएमाणा दइया मेहाविणो पंडिया, एवं तेसिं भगवओ अणुट्ठाणे जहा से दियापोए एवं ते सिस्सा दिया य राओ य अणुपुव्वेण वाइयत्ति वेमि ॥ ६-३-

'विरय'मित्यादि— विरतमसंयमात् भिक्षणशीलं भिक्षुं रीयन्तं—रीयमाणं निस्सरन्तमप्रशस्तसंयमस्थानेभ्यः, प्रशस्तेषु प्रवर्त्तमानं चिररात्रं—प्रभूतकालं संयमे उषितश्चिररात्रौ उषितस्तमेवंगुणयुक्तं, 'अरतिः' संयमोद्विग्नता 'तत्र' तस्मिन्

उ० ३
लाघवताभाजो मुनयः संसारं तीर्णा इति।

संयमे प्रवर्त्तमानं तं किं विधारयेत् ?-किं प्रतिस्खलयेत् ?, किंशब्दः प्रश्ने, ओमित्युच्यते, विचित्रा कर्म्मपरिणतिः किं न कुर्यात् ? । अथवा लघुकर्म्माणं कथमरतिर्विधारयेत् ? नैव धारयेदित्याह-' संधेमाणे 'ति-क्षणे क्षणे अव्यवच्छेदेन उत्तरोत्तरं संयमस्थानं सन्दधानः सन्धायमानः, समुत्थितः यथाख्यातचारित्राभिमुखः, तं अरतिः कथं विधारयेत् ?, स चैवंभूतो न केवलमात्मनस्त्राता, अपरेषामपि अरतिविधारकत्वात् त्राणाय भवतीति दर्शयति-' जहा से दीवे 'ति-द्विर्गता आपोऽस्मिन्निति द्वीपः, स च द्रव्यभावभेदाभ्यां द्विधा । तत्र द्रव्यद्वीपो द्विधा, संदीनोऽसंदीनश्च । यो हि पक्षमासादौ उदकेन प्लाव्यते स सन्दीनो विपरीतस्त्वसंदीनः सिंहलद्वीपादिः । यथा सांयात्रिका असन्दीनद्वीपं समवाप्याऽऽश्वसन्ति । एवं भावसन्धानायोत्थितं मुनिं साधुं वाऽवाप्याऽपरे प्राणिनः समाश्वस्युः । अथवा भावद्वीपः सम्यक्त्वं, तच्च प्रतिपातित्वादौपशमिकं क्षायोपशमिकं च सन्दीनो भावद्वीपः । क्षायिकं त्वसन्दीनः । तं द्विविधमप्यवाप्य परीतसंसारत्वात् प्राणिन आश्वसन्ति । अथवा भावद्वीपः सन्दीनः श्रुतज्ञानं, केवलज्ञानमसन्दीनं, तच्चावाप्य प्राणिनोऽवश्यमाश्वसन्त्येव । यदिवा भावद्वीपो धर्म्मः, यथासन्दीनो द्वीपो भग्नपोतानां बहूनां जन्तूनां शरण्यतया आश्वासहेतुर्भवति, एवमसावपि धर्म्मस्तीर्थकृत्प्रणीतः कषतापच्छेदतयाऽऽश्वासभूमिर्भवति । तस्य धर्म्मस्याऽनुष्ठायिनः कीदृशाः सन्तीत्याह-' ते अणवकंखे 'त्यादि-भोगाननभिलाषिणः शेषं सुगममेव तथाऽपि लिख्यते, प्राणिनोऽनतिपातयन्तः, उपलक्षणात् शेषमहाव्रतग्रहणमायोज्यम् । ' दइया मेहाविणो '-कुशलानुष्ठानप्रवृत्तत्वाद् दयिता सर्वलोकानां एवं ' मेधाविनो ' मर्यादानुवर्त्तिनः, ' पण्डिताः ' सम्यक्पदार्थतत्त्वज्ञाः समुत्थिता भवन्तीति । ये विपरीतास्ते कीदृशा इत्याह-' एवं तेसिंति '-एवमुक्तविधिना तेषामपरिकर्मितमतीनां भगवतो

वर्द्धमानस्वामिनो धर्म्मे सम्यगनुत्थाने सति तत्परिपालनतस्तथासदुपदेशदानेन परिकर्मितमतित्वं बिधेयमिति । अत्रैव दृष्टान्तमाह–' जहा से दियापोए '–द्विजः-पक्षी तस्य पोतो बालः स यथा तेन द्विजेन गर्भप्रसवादारभ्याण्डकोच्छूनोच्छूनतरभेदादिकासु अवस्थासु यावन्निष्पन्नपक्षस्तावदनुपाल्यते । एवमाचार्येणापि शिष्यः प्रव्रज्यादानादारभ्य समाचार्युपदेशदानेनाध्यापनेन च तावदनुपाल्यते यावद् गीतार्थो भवेदिति । ' एवं ते सिस्सा ' इत्यादि–यथा द्विजपोतो मातृपितृभ्यां चानुपाल्यते, एवमाचार्येणापि शिष्या अहर्निशं अनुपूर्व्वेण–क्रमेण वाचिताः पाठिताः शिक्षां ग्राहिताः समस्तकार्यसहिष्णवः संसारोत्तरणसमर्था भवन्तीति । इत्यधिकारसमाप्तौ ब्रवीमीति पूर्ववत् । धूताध्ययने तृतीयोद्देशकः समाप्तः ॥ ६–३

उ० ३ आचार्यस्य-शीष्यपाल-नादिस्व-रूपम् ।

साम्प्रतं चतुर्थ आरभ्यते—

" एवं ते सिस्सा दिया य राओ य अणुपुव्वेण वाइया तेहिं महावीरेहिं पन्नाणमंतेहिं तेसिमंतिए पन्नाणमुवलब्भ, हिच्चा उवसमं, फारुसियं समाइयंति, वसित्ता बंभचेरंसि आणं तं नोत्ति मन्नमाणा आघायं तु सुच्चा निसम्म, समणुन्ना जीविस्सामो एगे निक्खमंते असंभवंता विडज्झमाणा कामेहिं गिद्धा अज्झोववन्ना समाहिमाघायमजोसयंता सत्थारमेव फरुसं वयंति "

' एव ' मित्यादि–एवं द्विजपोतसंवर्द्धनक्रमेणैव ते शिष्याः स्वहस्तप्रव्राजिता उपसम्पदागताः–प्रातीच्छकाश्च दिवा रात्रौ वा क्रमेण वाचिताः पाठिताः तत्राध्यापनमाचारादि क्रियते क्रमेण च, कैस्तैः ?, महावीरैस्तीर्थकृद्गणभृदादिभिः, पुनः किम्भूतैः ? प्रज्ञानवद्भिः । ' तेसिमन्ते 'ति तेषामन्तिके–आचार्यादीनां समीपे प्रज्ञानं–श्रुतज्ञानमुपलभ्य बहुश्रुतीभूताः । ' हिचा 'इत्यादि–प्रबलमोहोदयात् त्यक्त्वा उपशमं ज्ञानलवोत्तम्भितगर्वाध्माताः ' पारुष्यं ' परुषतां ' समाददति '–गृह्णन्ति ।

तद्यथा–परस्परगुणनिकायां मीमांसायां वा एकोऽपरमाह–त्वं न जानीपे न चैषां शब्दानामयमर्थो, यो भवताऽभाणि, अपि च कश्चिदेव मादृशः शब्दार्थनिर्णयायालं, न सर्वः। किञ्च–'बंभचेरंसि'–एके पुनः ब्रह्मचर्यः संयमस्तत्रोपित्वा तामाज्ञां तीर्थंकरोपदेशरूपां 'नो मन्यमानाः'–न बहुमन्यमानाः सातागौरवबाहुल्यात् शरीरबाकुशिकतामालम्बन्ते 'आघायं तुच्चि' आख्यातमेवैतत्कुशीलविपाकादिकं श्रुत्वा निशम्यावबुद्ध्य च शास्तारमेव परुषं वदन्ति चेति सम्बन्धः। किमर्थं तर्हि शृण्वन्ति ? इति चेत्तदाह–'समणुन्ना'इत्यादि–समनोज्ञा लोकसम्मता जीविष्याम इति कृत्वा प्रश्नव्याकरणार्थमेव शब्दशास्त्राण्यधीयन्ते। अथवा समनोज्ञा उद्युक्तविहारिणः सन्तो जीविष्यामः संयमजीवितेनेत्येवं निःक्रम्य पुनर्मोहोदयादऽसम्भवन्तस्ते गौरवत्रिकान्यतरदोषात् ज्ञानादिके मोक्षमार्गे न सम्यग् भवन्तो–नोपदेशे वर्त्तमाना, विविधं दह्यमानाः कामैः, गृद्धाः–गौरवत्रिकेऽध्युपपन्ना विषयेषु, समाधिं इन्द्रियप्रणिधानमाख्यातं तीर्थंकरादिभिरावेदितं तमजुपन्तो–असेवमानाः, दुर्विदग्धा आचार्यादिभिः शास्त्राऽभिप्रायेण प्रेर्यमाणा अपि तच्छास्तारमेव परुषं वदन्ति–सर्वमप्यहमेव जानामि निमित्तादिकं च कोऽन्यो जानाति ? इत्येवमाचार्यादिकं शास्तारं हीलयन्तः परुषं वदन्ति। यदि वा शास्ता–तीर्थकृदादिस्तमपि परुषं निह्नवादिवत्। तथाहि–कचित्स्खलिते नोदिता जगदुः– किमन्यदधिकं तीर्थकृद् वक्ष्यति ? अस्मद्गलकर्त्तनादपीति। एवमपरानपि साधूनपवदेयुरित्येतदाह—

" सीलमंता उवसंता संखाए रीयमाणा असीला अणुवयमाणस्स बिइया मंदस्स बालया "

किंविधास्ते साधवः ?, शीलमन्तः उपशान्ताः संख्यया–प्रज्ञया रीयमाणाः संयमानुष्ठाने पराक्रममाणाः सन्तः। एता-

बाह्यक्रिया-सहितानां मन्दानां दोषदर्शनम् ।

दृशानां द्वेषात् अपह्नुते। यथैते कुशीलाः इत्येवमनुवदतः–अनु पश्चात् पृष्टतोऽनुवदतः पार्श्वस्थादेर्द्वितीयैषा मन्दस्य बालता–मूर्खता, एका तावत्स्वतश्चारित्रापगमः, पुनरपरान् उद्युक्तविहारिणोऽपवदत इत्येषा द्वितीया बालता। अपरे च वीर्यान्तरायोदयात्स्वतोऽवसीदन्तोऽप्यपरसाधुप्रशंसान्विताः, यथावस्थितमाचारगोचरमावदेयुरिति दर्शयति—

" नियट्टमाणा वेगे आयारगोयरमाइक्खंति, नाणब्भट्ठा दंसणलूसिणो "

' नियट्टमाण 'इत्यादि–एके कर्म्मोदयात्संयमान्निवर्त्तमाना यथावस्थितमाचारगोचरमाचक्षते, वयं तु कर्त्तुमसहिष्णवः, आचारस्त्वेवम्भूतः, इत्येवं वदतां तेषां द्वितीया बालता न भवति। किम्भूता बालाः पुनरेवं समर्थयेयुरित्याह–'णाणब्भट्ठा'–सदसद्विवेको ज्ञानं तस्माद् भ्रष्टाः 'दंसणलूसिणो'–सम्यग्दर्शनप्रध्वंसिनः। अपरे पुनर्बाह्यक्रियोपपेता अप्यात्मानं नाशयन्तीत्याह–

" नममाणा वेगे जीवियं विप्परिणामंति पुट्ठा वेगे नियट्टंति जीवियस्सेव कारणा, निक्खंतंपि तेसिं दुनिक्खंतं भवइ, बालवयणिज्जा हु ते नरा, पुणो पुणो जाइं पकप्पिंति अहे संभवंता विद्दायमाणा अहमंसीति विउकसे उदासीणे फरुसं वयंति, पलियं पकथे अदुवा पकथे अतहेहिं, तं वा मेहावी जाणिज्जा धम्मं "

' नममाणा ' इत्यादि– नमन्तोऽप्याचार्यादेः कर्मोदयाद् एके न सर्वे संयमजीवितं विपरिणामयन्ति–अपनयन्ति। किं चापरमित्याह– एके– अपरिकर्म्मितमतयो गौरवत्रिकप्रतिबद्धाः स्पृष्टाः परीषहैर्निवर्त्तन्ते संयमाद् लिङ्गाद्वा। किमर्थं? ' जीवियस्सत्ति '– जीवितस्यैवाऽसंयमाख्यस्य कारणान्निमित्तात्, सुखेन वयं जीविष्याम इति कृत्वा सावद्यानुष्ठानतया संयमान्निवर्त्तन्ते। तथाभूतानां च यत्स्यात्तदाह–तेषां गृहवासान्निष्क्रान्तमपि ज्ञानादिगुणान्यतरोपघाताद् दुर्निष्क्रान्तं भवति।

तद्धर्माणां च यत्स्यात् तदाह– ' बालवयणिज्ज 'त्ति– हुर्यस्मादर्थे सम्यगनुष्ठानाद् दुर्निःक्रान्ताः, तस्माद् बालानामपि प्राकृतपुरुषाणामपि वचनीया गर्हणीयास्ते नराः, किञ्च–पुणोरत्ति– पौनःपुन्येनाऽरघट्टघटीन्यायेन जातिरेकेन्द्रियादिका तां प्रकल्पयन्ति । किम्भूतास्ते ? अहः– अधः संयमस्थानेषु संभवन्तो– वर्त्तमाना अविद्यया वाऽधो वर्त्तमानाः सन्तो विद्वांसो वयमित्येवं मन्यमाना आत्मानं लघुतया व्युत्कर्षयेयुरात्मनः श्लाघां कुर्वते । ' उदासीणे 'ति उदासीनान्– मध्यस्थान् परुषं वदन्ति । पलियमिति– पलियं– अनुष्ठानं तेन पूर्वाचरितेनानुष्ठानेन तृणाहारादिना प्रकथयेत्– एवम्भूतस्त्वं, अथवा कुण्ट-मुण्टादिभिर्गुणैर्मुखविकारादिभिर्वा प्रकथयेत्, किम्भूतैः ?, ' अतहेहिं '– अतथ्यैरविद्यमानैरित्युपसंहरन्नाह– ' मेहावी 'त्यादि– तं वाच्यमवाच्यं वा धर्म्मं च श्रुतचारित्राख्यं मेधावी– मर्यादाव्यवस्थितो जानीयात् । सोऽसभ्यवादप्रवृत्तो बालो यथा गुर्वादिनाऽनुशास्यते तथा दर्शयति—

" अहमट्ठी तुमंसि नाम बाले आरंभट्ठी अणुवयमाणे हण पाणे घायमाणे हणओ यावि समणुजाणमाणे, घोरे धम्मे उदीरिए उवेहइ णं अणाणाए, एस विसन्ने वियद्दे वियाहिएत्ति बेमि "

' अहमट्ठी 'त्यादि– अधर्म्मेण अर्थी अधर्म्मार्थी, यतो नाम त्वमेवम्भूतोऽतोऽनुशास्यते । कुतोऽधर्म्मार्थी ?, ' बालः '– अज्ञः, कुतो बालो ? यतोऽधर्म्मार्थी आरम्भार्थी वा सावद्यारम्भप्रवृत्तः, कुतः ?, आरम्भार्थी सन् प्राण्युपमर्दवादानुवदन्नेतद् ब्रूषे, जहि प्राणिनोऽपरैरेवं घातयन् घ्नतश्चापि समनुजानासि । किञ्चैवं ब्रवीषि त्वं, तद्यथा– ' घोरे धम्मे 'त्ति– घोरो–भयानको धर्म्मः सर्वाश्रवनिरोधाद् दुरनुचरः उत्प्राबल्येनेरितः कथितः तीर्थंकरादिभिरित्येवमध्यवसायी भवांस्तमनुष्ठानत

उ० ४ मन्दानां गुर्व्वादिना शिक्षा देयेति ।

उपेक्ष्यते- उपेक्षां विधत्ते । णं वाक्यालंकारे । ' अणाणाए '- अनाज्ञया-तीर्थंकरानुपदेशेन स्वेच्छया प्रवृत्तिं दर्शयति-एप अनन्तरोक्तोऽधर्म्मार्थी प्राणिहन्ता घातयिता घ्नतोऽनुमन्ता धर्म्मोपेक्षक इति। विपण्णः कामभोगेषु विविधं तर्दतीति वितर्दो-हिंसकः संयमे वा प्रतिकूलो वितर्द इत्येवंरूपस्त्वमेष व्याख्यात इत्यतोऽहं ब्रवीमि-त्वं मेधावी धर्म्मं जानीयाः, एतच्च वक्ष्यमाणमहं ब्रवीमीत्यत आह—

" किमणेण भो ! जणेण करिस्सामित्ति मन्नमाणे एवं एगे वइत्ता मायरं पियरं हिच्चा नायओ य परिग्गहं वीरायमाणा समुट्ठाए अविहिंसा सुव्वया दंता पस्स दीणे उप्पइए पडिवयमाणे वसट्टा कायरा जणा लूसगा भवंति, अहमेगेसिं सिलोए पावए भवइ, से समणो भवित्ता विब्भंते २ पासहेगे, समन्नागएहिं सह असमन्नागए नममाणेहिं अनममाणे विरएहिं अविरए दविएहिं अदविए अभिसमिच्चा पंडिए मेहावी निट्ठियट्ठे वीरे आगमेणं सया परिक्कमिज्जासित्ति बेमि ॥ " ६-४

' किमणेण 'इत्यादि-केचन संयमं प्रतिपद्य पुनरेव प्राण्युपमर्दका भवन्ति । कथं ? उत्थाय, भोरित्यामन्त्रणे, किमनेन जनेन मात्रादिना स्वार्थपरेण परमार्थतोऽनर्थरूपेण करिष्यामीति, न ममायमलं कार्याय अनेन किमतोऽहं करिष्ये ?। यदिवा प्रविव्रजिषुः केनचिदऽभिहितः-किमनया सिकताकवलसन्निभया प्रव्रज्यया करिष्यति भवान् ?, अदृष्टवशायातं त्वं भोजनादिकं भुंक्ष्व इत्यभिहितो विरागमापन्नो ब्रवीति- किमहमनेन भोजनादिना करिष्ये ? भुक्तमेनकशः संसारे पर्यटता, तथाऽपि तृप्तिर्नाभूत्, किमिदानीमनेन जन्मना भविष्यत्येवं मन्यमाना एके विदितसंसारस्वभावा उदित्वाऽप्येवं, ततो ' मातरं '-जननीं ' पितरं '-जनयितारं ' हित्वा '-त्यक्त्वा ' जातयः ' पूर्वापरसम्बन्धिनः स्वजनास्तान् ' परिग्रहो '-धनधान्यादिस्तं,

उ० ४
पूर्वं सम्यगुत्थाय पश्चाद् भग्नपरिणामान् दृष्ट्वा सुसाधुना संयममार्गे पराक्रमितव्यम् ।

किम्भूताः ' वीरायमानाः ' सम्यक् संयमानुष्ठानेनोत्थाय ' अविहिंसा ' इति-दयालवो भवन्ति सुव्रताश्च, ' दान्ताः '-दमितेन्द्रिया इत्येवं समुत्थाय पूर्वं, पश्चात् ' पश्य '-अवलोकय दीनान् शृगालत्वविहारिणः पूर्वमुत्पतितान् संयमारोहणात् पश्चात्पापोदयात्प्रतिपतन्तः। किमिति दीना भवन्ति ?, यतो ' वसट्टा '-वशार्त्ता विषयकषायैः, तथा कातराः के ते जनाः ? लूषका व्रतानां विध्वंसकाः। ' अहमेगेसिं 'ति-एकेषां भग्नप्रतिज्ञानां सिलोएति-श्लोकः-श्लाघारूपः पापको भवेद् निन्दारूपो भवेदित्यर्थः, स्वपरपक्षादऽकीर्त्तिर्जायते। ' से समणे विब्भन्ते '-सोऽयं श्रमणो भूत्वा श्रान्तः-भग्नः विविधं भ्रान्तः विभ्रान्तः श्रमणविभ्रान्तो, वीप्सयात्यन्तं जुगुप्सामाह। किञ्च-पश्यत यूयं कर्म्मसामर्थ्यम्। ' एगे समन्नागएहिं '-एकैः समन्वागतैः उद्युक्तविहारिभिः सह वसन्तोऽप्यसमन्वागताः-शीतलविहारिणः, तथा नममानैः संयमानुष्ठाने विनयवद्भिः सह अनममानाः-निर्घृणतया सावद्यानुष्ठायिनः, विरतैस्सहाविरतिभूताः, द्रव्यभूतैरद्रव्यभूताः, एवंभूतान् अभिसमेत्य-ज्ञात्वा किं कर्त्तव्यम् ? । पंडिए '- पण्डितो बुद्धिमान् ' मेधावी '- मर्यादाधिष्ठितः, ' निट्ठियट्ठे 'ति-निष्ठितार्थो विषयपराङ्मुखः ' वीरः ' कर्म्मविदारणसमर्थः, एवंभूत्वा ' आगमेन '-सर्वज्ञप्रणीतोपदेशानुसारेण ' सदा '-सर्वकालं पराक्रामयेरिति। इति अधिकारसमाप्तौ ब्रवीमि पूर्ववत्। इति धूताध्ययनस्य चतुर्थोद्देशकः समाप्तः ॥

अथोक्तः चतुर्थोद्देशकः, साम्प्रतं पञ्चमोद्देशकः प्रारभ्यते, तस्यादिमं सूत्रम्—

" से गिहेसु वा गिहंतरेसु वा गामेसु वा गामंतरेसु वा नगरेसु वा नगरंतरेसु वा जणवयेसु वा जणवयंतरेसु वा गामनयरंतरे वा गामजणवयंतरे वा संतेगइया जणा लूसगा भवंति अदुवा फासा फुसंति ते फासे पुट्ठे वीरो अहियासए, ओए समियदंसणे, दयं

लोगस्स जाणित्ता पाईणं पडीणं दाहिणं उदीणं आइक्खे, विभए किट्टे वेयवी, से उट्ठिएसु वा अणुट्ठिएसु वा सुस्सूसमाणेसु पवेयए संतिं विरइं उवसमं निव्वाणं सोयं अज्जवियं मद्दवियं लाघवियं अणइवत्तियं सव्वेसिं पाणाणं सव्वेसिं भूयाणं सव्वेसिं जीवाणं सव्वेसिं सत्ताणं अणुवीइ भिक्खू धम्ममाइक्खिज्जा ”

‘ से गिहेसु ’ इत्यादि– स पण्डितो मेधावी निष्ठितार्थो वीरः एकाकिविहारितया ग्रामानुग्रामं रीयमाणः परीषहोपसर्गापादितदुःखान् अधिसहेत। क स्थितस्योपसर्गा अभिपतेयुरिति दर्शयति–आहाराद्यर्थं प्रविष्टस्य गृहेषु वा, उच्चनीचमध्यमावस्थासंसूचकं बहुवचनं, तथा गृहान्तरेषु वा, ग्रसन्ति बुद्ध्यादीन् गुणानिति ग्रामाः तेषु वा, तदन्तरालेषु वा, नगरेषु वा नगरान्तरालेषु वा, जनपदेषु- सार्द्धपञ्चविंशतिकेषु साधुविहारयोग्येषु, तदन्तरालेषु वा, तेषु विहारभूमिषु गतस्य गच्छतो वा, तदेवं तस्य भिक्षोर्ग्रामादीन् प्रविश्यमानस्य कायोत्सर्गादिकं कुर्वतः, ‘ संतेगइय ’त्ति– सन्ति–विद्यन्ते एके- कालुष्यहतोपहतबुद्धयो दुरात्मानो ये जनाः दुर्जनाः, किंविधाः ? ‘ लूसगा ’– लूषयन्तीति लूषका हिंसका भवन्ति। ‘ अदुव ’त्ति– अथवा तेषु ग्रामादिषु स्थानेषु तिष्ठतो गच्छतो वा ‘ फासा ’ इति– स्पर्शा दुःखदायिनो स्पृशन्ति– अभिभवन्ति, तैश्च स्पृष्टः परीषहैः तान्स्पर्शान्–दुःखविशेषान् धीरोऽक्षोभ्योऽधिसहेत, नरकादिदुःखभावनया तितिक्षेत। कीदृशोऽधिसहेत ? इत्याह–‘ ओए समियदंसणे ’ति– ओज – एको रागादिरहितत्वात्, सम्यग्दृष्टिः सम्यगितं प्राप्तं दर्शनं येनासौ समितदर्शनः। एवम्भूतः किमभिसन्ध्य धर्म्ममाचक्षीत ? दयां कृपां लोकस्य जन्तुलोकस्योपरि, द्रव्यतो ज्ञात्वा क्षेत्रतः प्राच्यादिदिग्विभागानभिसमीक्ष्य सर्वत्र दयां कुर्वन् धर्म्ममाचक्षीत। कालतो यावज्जीवं भावतोऽरक्तद्विष्टश्च। तथा

'विभए'-विभजेत् द्रव्यादिभिरित्यर्थः । तथा कीर्त्तयेत् व्रतानुष्ठानफलम् । कोऽसौ ? 'वेदवित्- आगमज्ञः, केषु निमित्तीभूतेषु कीर्त्तयेत् ? इत्याह-'उट्ठियेसु'त्ति- उत्थितेषु भावोत्थायिषु यतिषु वाशब्दः पक्षान्तरद्योतकः । पार्श्वनाथशिष्येषु चतुर्यामोत्थितेष्वेव वर्द्धमानतीर्थाचार्यादिः पञ्चयामं धर्म्मं प्रवेदयेदिति । स्वशिष्येषु वा सदोत्थितेषु अज्ञातज्ञापनाय प्रवेदयेदिति । किम्भूतं धर्म्मं प्रवेदयेदित्याह-'संति विरइ'मित्यादि-शमनं शान्तिः अहिंसा तामाचक्षीत, तथा विरतिम् । अनेन च मृषावादादिशेषव्रतसंग्रहः । तथा उपशमं क्रोधजयाद्, अनेन चोत्तरगुणसंग्रहः । तथा निवृत्तिर्निर्वाणं मूलगुणोत्तरगुणयोरैहिकामुष्मिकफलभूतमाचक्षीत । तथा 'सोयं'ति- शौचं सर्वोपाधिशुद्धित्वं निर्वाच्यव्रतधारणं, तथा आर्ज्जवं मायावक्रत्वपरित्यागात्, मार्द्दवं मानस्तब्धतापरित्यागात्, लाघवं-बाह्याऽभ्यन्तरपरिग्रहत्यागात् । कथमाचक्षीत ? यथावस्थितं वस्त्वागमाभिहितं तथाऽनतिक्रम्य । केषां कथयति, 'सव्वेसिं पाणाण'मित्यादि-सर्वेषां प्राणिनां सर्वेषां भूतानां सर्वेषां जीवानां सर्वेषां सत्वानां, अत्र पञ्चेन्द्रियत्वेन मुक्तिगमनश्रद्धानसंवेगलक्षणानां सर्वत्रायोज्यं, संसारे क्रियमानतया करुणास्पदानां, एकार्थिकानि पदानि, तेषां क्षान्त्यादिकं दशविधं धर्म्मं भिक्षणशीलो भिक्षुर्धर्मकथालब्धिमानाचक्षीत । यथा च धर्म्मं कथयेत्तदाह--

"अणुवीइ भिक्खु धम्ममाइक्खमाणे नो अत्ताणं आसाइज्जा, नो परं आसाइज्जा, नो अन्नाइं पाणाइं भूयाइं जीवाइं सत्ताइं आसाइज्जा, से अणासायए अणासायमाणे वज्झमाणाणं पाणाणं भूयाणं जीवाणं सत्ताणं जहा से दीवे असंदीणे एवं से भवइ सरणं महामुणी, एवं से उट्ठिए ठियप्पा अणिहे अचले चले अबहिल्लेसे परिव्वए संखाय पेसलं धम्मं दिट्ठिमं परिनिव्वुडे तम्हा संगंति

पासह गंथेहिं गढिया नरा विसन्ना कामकंता तम्हा लूहाओ नो परिवित्तसिज्जा जस्सिमे आरंभा सव्वओ सव्वप्पयाए सुपरिन्नाया भवंति जेसिमे लूसिणो नो परिवित्तसंति, से वंता कोहं च माणं च मायं च लोभं च एस तुट्टे वियाहिए त्ति बेमि ”

‘ अणुवीइ ’ इत्यादि— स साधुरनुविचिन्त्य पूर्वापरेण धर्म्मं पुरुषं वाऽऽलोच्य यो यस्य कथनयोग्यस्तं धर्म्ममाचक्षाणः नैवात्मानमाशातयेत्। नैव परात्मानमप्याशातयेत्। आशातना—आबाधा। ‘ नो अन्नाइं ’ति—नैव अन्यान् वा सामान्येन प्राणिनो भूतान् जीवान् सत्त्वान् नो आशातयेत्। तदेवं स मुनिः स्वतोऽनाशातनकः परैरनाशातयेत्। तथा परान् आशातयतोऽननुमन्यमानोऽपरेषां बाध्यमानानां प्राणिनां यथा पीडा नोत्पद्यते, तथा धर्म्मं कथयेदित्यर्थः। तद्यथा— लौकिककुप्रावचनिकपार्श्वस्थादि दानानि प्रशंसति अवटतडागादीनि वा, ततः पृथिवीकायादयो व्यापादिताः स्युः। अथ दूषयति, ततोऽपरेषां अन्तरायापादनेन तत्कृतो बन्धविपाकानुभवः स्यात्। उक्तं च—जे उ दाणं पसंसंति वहमिच्छंति पाणिणं। जे उणं पडिसेहंति वित्तिच्छेयं करंति ते ॥ १ ॥ तस्मादवटतटाकादिविधिप्रतिषेधव्युदासेन यथावस्थितं दानं शुद्धं प्ररूपयेत्, असावद्यानुष्ठानं वा। इत्येवं कुर्वन् उभयदोषपरिहारी जन्तूनामाश्वासभूमिर्भवति। एतद् दृष्टान्तद्वारेण दर्शयति—‘ जहा से दीवे ’ति—यथाऽसौ द्वीपोऽसंदीनः शरणं भवति, एवमसावपि महामुनिः। तद्रक्षणीयोपायोपदेशदानतः ‘ वध्यमानानां ’—वधकानां व्यवसायनिवर्त्तनेन विशिष्टगुणस्थानापादनाच्छरण्यो भवति, यथोक्तप्रकारेण धर्म्मकथां कथयन् कांश्चन प्राव्राजयति। कांश्चन श्रावकान् विधत्ते। कांश्चन सम्यग्दर्शनयुजः करोति। केषांचित्प्रकृतिभद्रकतामापादयति। किं गुणश्चासौ शरण्यो भवति ?, इत्याह—‘ एवं से उट्ठिए ’ति एवममुना प्रकारेण उत्थितः सम्यक् संयमानुष्ठानादौ स्थितो

उ० ५
धर्मकथायां स्वपराशातना वर्जनीया।

सङ्गत्यागी स संसार-बन्धनं त्रोटयति।

ज्ञानादिके मोक्षमार्गे आत्मा यस्य स उत्थितात्मा 'अणिहे'-अस्नेहः-रागद्वेषरहितः, 'अचलः' उपसर्गादिभ्यः, अबहिर्लेश्यो-न संयमबाह्यः, स एवंभूतः संयमानुष्ठाने परिव्रजेत्। किम्भूतः परिव्रजेदित्याह-'संखाय'त्ति-संख्याय ज्ञात्वा, किं? पेशलं धम्मं 'दिट्ठिमं' दृष्टिमान् एवं परिनिवृत्तः। 'तम्हा संगं'ति-इति हेतौ यस्माद् मिथ्यादृष्टिः संगवान् न निर्वाति, तस्मात्संगं मात्रादिकं पश्यत-यूयं विवेकेनावधारयत। सूत्रेणैव सङ्गमाह-'गंथेहिं गढियं'ति- एवं सङ्गिनो नराः सबाह्याभ्यन्तरैर्ग्रन्थैर्ग्रथिता अवबद्धा विषण्णा ग्रन्थसङ्गे निमग्नाः कामैरिच्छामदनरूपैराक्रान्ता अवष्टब्धाः। यद्येवं ततः किं कुर्यादित्याह-'लूहाउ'त्ति- तस्माद्रूक्षात्-संयमात् निःसङ्गात्मकान्नो परिवित्रसेत्- न बिभीयात्। कस्य पुनः संयमान्न परिवित्रसनं सम्भाव्यत? इत्याह-'जस्सिमे आरंभा'-यस्य महामुनेरिमे आरम्भरूपा एव सङ्गाः संसारसम्बधिन एते आरम्भाः सर्वतः सर्वजनाचरित्वात्परिज्ञाताः-सर्वात्मकतया सुपरिज्ञाता भवन्ति। किंविधा आरंभाः?ः 'जस्सिमे'ति- येष्विमे जना लूषिणो हिंसका अज्ञानमोहोदयान्न परिवित्रसन्ति न बीभ्यन्ति। यश्चारम्भाणां परिज्ञाता स किमपरं कुर्यादित्याह-'से वंता'-स महामुनिर्वान्त्वा त्यक्त्वा क्रोधं मानं मायां लोभं च, स एवं क्रोधादीन् वान्त्वा मोहनीयं त्रोटयति, स चैषोऽपगतमोहनीयः संसारसन्ततेस्तुट्टः-अपसृतो व्याख्यातस्तीर्थकृदादिभिः। इत्यधिकारपरिसमाप्तौ ब्रवीमि पूर्ववत्। यदि वैतद्वक्ष्यमाणमित्याह—

"कायस्स वियाघाए एस संगामसीसे वियाहिए, से हु पारंगमे मुणी, अविहम्ममाणे फलगावयट्ठी कालोवणीए कंखिज्ज कालं जाव सरीरभेउ त्ति बेमि ॥ धूताध्ययनम् ॥ ६ ॥

'कायस्से'त्यादि- कायस्य शरीरस्य व्याघातो विख्यातः- शरीरविनाश एष संग्रामशीर्षतया व्याख्यातो, यथा-

संग्रामे परानीकं दृष्ट्वा सत्यक्षात्रकुलोत्पन्नोऽतिसुभटो मरणात् न शङ्कते। एवं मुनिरपि परीषहसेनातोऽपि न बिभेति मरणकालादपि। स एवंविधपारगामी मुनिः संसारपर्यन्तयायीत्यर्थः। किञ्च–'अविहम्मे'त्यादि अपि निश्चितं हन्यमानोऽपि परीषहैः 'फलग' त्ति–फलगवदऽवतिष्ठेत न कातरीभवति 'कालोपनीतः'–कालेन–मृत्युनाऽऽत्मवशतां प्रापितः सन् कालं–मृत्युमनवकांक्षमानः सन् संलेखनयात्मानं संलिख्य पादपोपगमनादिना कालमायुष्कक्षयलक्षणं पण्डितमरणेन जानीयादित्यर्थः। इतिरधिकारसमाप्तौ ब्रवीमीति पूर्ववत् ॥ इति श्रीचन्द्रगच्छाम्भोजदिनमणीनामित्यादीति। धूताध्ययनं समाप्तम् ॥

उक्तं षष्ठमध्ययनं, अधुना सप्तमाध्ययनस्य महापरिज्ञाख्यस्यावसरः। तच्च व्यवच्छिन्नं, इति कृत्वाऽतिलंघ्याष्टमस्य सम्बन्धो वाच्यः। तस्यादिमं सूत्रम्—

"से बेमि समणुन्नस्स वा असमणुन्नस्स वा असणं वा पाणं वा खाइमं वा साइमं वा वत्थं वा पडिग्गहं वा कंबलं वा पायपुंछणं वा नो पादेज्जा नो निमंतिज्जा नो कुज्जा वेयावडियं परं आढायमाणेत्ति बेमि"

'से बेमी'त्यादि–सोऽहं ब्रवीमीति योऽहं भगवतः सकाशाद् ज्ञातज्ञेय इति। किं तद् ब्रवीमि?–वक्ष्यमाणं, तद्यथा–'समनोज्ञस्य वा' वाशब्दाः पक्षान्तरद्योतकाः, समनोज्ञो दृष्टितो लिङ्गतश्च, न तु भोजनादिभिः, तस्य, तद्विपरीतस्त्वसमनोज्ञः–शाक्यादिस्तस्य वा। अशनं–शाल्योदनादि, पीयत इति पानं–द्राक्षापानकादि, खाद्यत इति खादिमं–नालिकेरादि, स्वाद्यत इति स्वादिमं–कर्पूरलवङ्गादि, तथा वस्त्रं वा पतद्ग्रहं वा कम्बलं वा पादपुञ्छनं वा नो प्रदद्यात् प्रासुकमप्रासुकं वा, तदन्येषां कुशीलानां उपभोगाय नो वितरेत्, नापि दानार्थं निमन्त्रयेत्, न च तेषां वैयावृत्त्यं कुर्यात्, परममत्यर्थं आश्रिय-

उ० १
अष्टमेऽध्ययने
कुशीलानां कम्बलादि न दद्यादिति।

माणोऽत्यर्थमादरवान् न तेभ्यः किमपि दद्यात्, नापि तानामन्त्रयेत् न च तेषां वैयावृत्त्यमुच्चावचं कुर्यात्। इति ब्रवीमीत्यधिकारपरिसमाप्तौ। एतच्च वक्ष्यमाणमहं ब्रवीमीत्याह—

" धुवं चेयं जाणिज्जा असणं वा जाव पायपुंछणं वा लभिया नो लभिया भुंजिया नो भुंजिया पंथं विउत्ता विउक्कम विभत्तं धम्मं जोसेमाणे समेमाणे चलेमाणे पाइज्जा वा निमंतिज्ज वा कुज्जा वेयावडियं परं अणाढायमाणेत्ति बेमि "

' धुवं चेय ' मित्यादि– ते हि शाक्यादयः कुशीला अशनादिकमुद्दिश्यैवं ब्रूयुर्यथा–ध्रुवं चैतद् जानीयात्, नित्यमस्मदावसथे भवति लभ्यते वाऽतो भवद्भिरेतदशनादिकमन्यत्र लब्ध्वा वाऽलब्ध्वा वा भुक्त्वा वाऽभुक्त्वा वा अस्मद्धृतयेऽवश्यमागन्तव्यं, अलब्धे लाभाय लब्धेऽपि विशेषाय भुक्ते पुनः पुनर्भोजनाय अभुक्तेऽपि प्रथमालिकार्थमस्मद्धृतये यथा कथञ्चिदागन्तव्यं, यद् यथा वा भवतां कल्पनीयं भवति, तत्तथा दास्याम इति, अनुपथ एवास्मदावसथो भवतां वर्त्तते, अन्यथाप्यस्मत्कृते पन्थानं व्यावर्त्याऽपि वक्रपथेनाप्यागन्तव्यं, अपक्रम्य वाऽन्यगृहाणि समागन्तव्यं, नात्रागमने खेदो विधेयः। किम्भूतोऽसौ शाक्यादिरिति दर्शयति—' विभक्तं '–पृथग्भूतं धर्म्मं ' जुषन् '–आचरन्। एतच्च कदाचित्प्रतिश्रयमध्येन ' समेमाणे '-समागच्छन् तथा ' चलमाणे 'ति–गच्छन् ब्रूयाद्, यदिवाऽशनादि प्रदद्यात्, अशनादिदानेन वा निमन्त्रयेद्, अन्यद्वा प्रश्रयवद् वैयावृत्त्यं कुर्यात्, तस्य कुशीलस्य नाभ्युपेयात्। न तेन सह संस्तवमपि कुर्यात्। कथं ?, परं–अत्यर्थमनाद्रियमाणः–अनादरवान्। एवं हि दर्शनशुद्धिर्भवतीति ब्रवीमीत्येतत्पूर्वोक्तम्। यदि वैतद्वक्ष्यमाणमित्याह—

" इहमेगेसिं आयारगोयरे नो सुनिसंते भवति ते इह आरंभट्ठी अणुवयमाणा हण पाणे घायमाणा हणओ यावि समणुजाण-

माणा अदुवा अंदिन्नमाययंति अदुवा वायाउ विउज्जंति, तंजहा– अत्थि लोए नत्थि लोए धुवे लोए अधुवे लोए साइए लोए अणाइए लोए सपज्जवसिए लोए अपज्जवसिए लोए सुकडेत्ति वा दुक्कडेत्ति वा कल्लाणेत्ति वा पावेत्ति वा साहुत्ति वा असाहुत्ति वा सिद्धित्ति वा असिद्धित्ति वा निरएत्ति अनिरएत्ति वा, जमिणं विप्पडिवन्ना मामगं धम्मं पन्नवेमाणा इत्थवि जाणह अकस्मात् एवं तेसिं नो सुयक्खाए धम्मे नो सुपन्नत्ते धम्मे भवइ ”

'इहमेगेसि' मित्यादि –इह अस्मिन्मनुष्यलोके 'एकेषां' पुरस्कृताशुभकर्म्मविपाकानामाचरणमाचारो–मोक्षार्थमनुष्ठानविशेषस्तस्य गोचरो–विषयः नो सुष्ठु निशान्तः परिचितो भवति । 'ते इह 'त्ति तेऽनधीताचारगोचराः शीतलविहारिणः शाक्यादिभिरात्मसात्कृताः परिणामिता वा इह मनुष्यलोके आरम्भार्थिनो भवन्ति । ते च शाक्यादयः अन्ये वा कुशीलाः सावद्यारम्भार्थिनः, तथा विहारारामतटाककूपकरणोद्देशिकादि धर्म्मं वदन्तोऽनुवदन्तः 'हण पाणे 'त्ति–जहि प्राणिनः, इत्येवमपरैर्घातयन्तो घ्नतश्चापि समनुजानंतो अदत्तं–परकीयं द्रव्यं अगणितविपाकः सन् आददति– गृह्णन्ति । 'अदुव 'त्ति–अथवा वाचा विविधं नानाप्रकारा युञ्जन्ति । तद्यथेति दर्शयति–' अत्थि लोए 'त्ति–अस्ति लोकः स्थावरजङ्गमात्मकः । तत्र नवखण्डा पृथ्वी, सप्तद्वीपा वा मही सप्त सागरात्मकेति । अपरे चार्वाका आहुः– नास्ति लोको मायेन्द्रजालवत्, नास्ति परलोकानुयायी जीवः, शुभाशुभे न स्तः, सुराङ्गेभ्यो मदशक्तिवत्, भूतेभ्य एव चैतन्यमुपजायते इत्यादि । तथा सांख्यादय आहुः–ध्रुवो नित्यो लोकः, आविर्भावतिरोभावमात्रत्वादुत्पादविनाशयोरिति । शाक्यादयोऽध्रुवोऽनित्यो लोकः, प्रतिक्षणं विशरारुत्वात् । अन्ये त्वाहुः– सादिको लोकः प्रलयकाले सर्वेषु भावेषु विनष्टेषु ब्रह्मणा जगन्माताः सृष्टाः । सुरसंघानाम-

उ० १
कुशीला
हिंसादि-
प्ररूपका
इति ।

दितिः, दितिरसुराणां, मनुर्मनुष्याणां, विहङ्गानां विनता विश्वप्रकाराणां माता, कद्रुः सरीसृपानां, सुलसा नागजातीनां सुरभिश्चतुष्पदानां, इला सर्वबीजानामित्यादि । अपरेऽनादिको लोकोऽनवदग्रोऽयं संसारः, तथा सपर्यवसितो लोकः, जगत्प्रलये सर्वस्य विनाशसम्भवात् । तथापर्यवसितो लोकः, सतः आत्यन्तिकविनाशासंभवात्, इत्येवं परमार्थमजानाना अस्तीत्यादिकं लोकं विवदमानाः प्रभूता वाचो नियुञ्जन्ति । तथाऽऽत्मानं प्रति विवदन्ते, 'सुकडे 'त्ति वा-सुकृतं दुःकृतं इत्येवं क्रियावादिनः संप्रतिपद्यन्ते, तथा सुष्टु कृतं यत्सङ्गपरित्यागतो महाव्रतमग्राहि । अपरे दुःकृतं भवता, यदसौ मुग्धमृगलोचना पुत्रमनुत्पाद्योज्झितेति । तथा य एव कश्चित्प्रव्रज्योद्यतः कल्याण इत्येवमभिहितः, स एवापरेण पाखण्डिकविप्रलब्धः क्लीबोऽयं गृहाश्रमपालनासमर्थोऽनपत्यः पाप इत्येवमभिधीयते । तथा साधुरिति वा असाधुरिति वा स्वमतिविकल्पितरुचिभिरभिधीयते । तथा सिद्धिरिति वा असिद्धिरिति वा नरक इति वा अनरक इति वा । एवमन्यदप्याश्रित्य स्वाग्रहग्रहिणो विवदन्त इति दर्शयति-'विप्पडिवन्ना ' इत्यादि-पूर्वोक्तं लोकादिकं तदिदमाश्रित्य विविधं प्रतिपन्ना विप्रतिपन्नाः । केचिदीश्वरप्रेरितमिति वदन्ति, मामकं-आत्मीयात्मकं धर्म्मं प्रज्ञापयन्ति । ' इत्थवि ' इत्यादि-अत्राप्यस्ति लोको नास्ति वा इति अकस्मात् अकस्मादिति हेतोरभावात् । ' एवं तेसिं 'ति-एवमुक्तनीत्या तेषामेकान्तवादिनां न स्वाख्यातो धर्म्मो भवति, नापि शास्त्रप्रणयनेन सुप्रज्ञापितो भवति । किम्भूतस्तर्हि सुप्रज्ञापितो धर्म्मो भवतीत्याह--

" से जहेयं भगवया पवेइयं आसुपन्नेण जाणया पासया अदुवा गुत्ती वयोगोयरस्सत्ति बेमि, सव्वत्थ संमयं पावं, तमेव उवाइकम्म एस महं विवेगे वियाहिए, गामे वा अदुवा रण्णे नेव गामे नेव रन्ने धम्ममायाणह पवेइयं माहणेण मइमया, जामा

तिन्नि उदाहिया जेसु इमे आरिया संबुज्झमाणा समुट्ठिया, जे निव्वुया पावेहिं कम्मेहिं अणियाणा ते वियाहिया ”

‘ स जहेय ’ मित्यादि–तद्यथा– इदं स्याद्वादरूपं वस्तुनो लक्षणं समस्तव्यवहारानुयायी श्रीवीरवर्द्धमानस्वामिना प्रवेदितं । किम्भूतेन ?, आशुप्रज्ञेन, किं कृत्वा ? ‘ जाणियत्ति ’–ज्ञात्वा केवलज्ञानेन । अथवा ‘ जाणया ’ इति ‘ जानता ’ ज्ञानोपयुक्तेन, ‘ पश्यता ’ दर्शनोपयुक्तेन एतत्प्रवेदितम् । ‘ गुत्ति वउ ’त्ति– अस्तिनास्त्यादिवादिनां वादायोत्थितानां वादलब्धिमतां प्रतिज्ञाहेतुदृष्टान्तोपन्यासद्वारेण सम्यगुत्तरं देयम् । अथवा वाग्गुप्तिर्वाग्गोचरस्य विधेया इत्येतदहं ब्रवीमि वक्ष्यमाणं चेत्याह–‘ सव्वत्थे ’त्यादि–तान् वादिनो वादायोत्थितान् एवं ब्रूयाद्–यथा भवतां सर्वेषामपि पृथिव्यप्तेजोवायुवनस्पत्यारम्भः कृतकारितानुमतिभिरनुज्ञातोऽतः सर्वत्र ‘ संमतं ’ अभिप्रेतं अप्रतिषिद्धं ‘ पावं ’–पापानुष्ठानम् । मम तु नैतत्सम्मतमित्येतद्दर्शयितुमाह–‘ तमेवत्ति ’–तदेव ‘ उवाइकम्म ’त्ति–उपसमीपेन अतिक्रम्य–अतिलंघ्य यतोऽहं व्यवस्थितोऽत्र एष मम विवेको व्याख्यातः । तत्कथमहं सर्वाप्रतिषिद्धास्रवद्वारैः संभाषणमपि करिष्ये ?, आस्तां तावद् वाद इत्येवमसमनुज्ञविवेकं करोतीति । अत्राह–कथं तीर्थिकाः सम्मतपापा अज्ञानिनो मिथ्यादृष्टयोऽचारित्रिणोऽतपस्विनो वेति ? तेऽप्यकृष्टभूमिवनवासिनो मूलकन्दाहारा वृक्षादिनिवासिनश्चेति, अत्राहाचार्यः, नारण्यवासादिना धर्म्मः, अपि तु जीवाजीवपरिज्ञानात् तत्पूर्वकानुष्ठानाच्च, तच्च तेषां नास्तीत्यतोऽमनोज्ञास्ते । माहनेन मतिमता ग्रामे वाऽरण्ये वा प्ररूपितो धर्म्म एवम् । किम्भूतो धर्म्मः प्रवेदित इत्याह–‘ जामा तिन्नि ’ इत्यादि–यामा व्रतविशेषा उदाहृताः–प्राणातिपातो मृषावादः परिग्रहश्चेति, अदत्तादानमैथुनयोः परिग्रह एवाऽन्तर्भावात् त्रयग्रहणं, ‘ जेसु इमे ’त्ति–येषु यामेषु–ज्ञानादिषु इमे देशार्याः सम्बुध्यमानाः

उ० १

श्री-वर्द्धमान-स्वामिना प्ररूपितो धर्म्मः सुप्रज्ञात इति ।

समग्रलोके जीवोपमर्दनं त्याज्यम् ।

सन्तः समुत्थिताः ' जे निव्वुअ 'त्ति—ये निवृत्ताः क्रोधाद्यपगमेन शीतीभूताः पापेषु कर्म्मसु अनिदानाः । क च पुनः पापकर्म्मस्वनिदाना इत्याह—

" उड्ढं अहं तिरियं दिसासु सव्वओ सव्वावंति च णं पाडियक्कं जीवेहिं कम्मसमारम्भे णं तं परिन्नाय मेहावी नेव सयं एएहिं काएहिं दंडं समारंभिज्जा, नेवन्ने एएहिं काएहिं दंडं समारंभाविज्जा, नेवन्ने एएहिं काएहिं दंडं समारंभंतेऽवि समणुजाणेज्जा, जेवऽन्ने एएहिं कायेहिं दंडं समारंभंति, तेसिंपि वयं लज्जामो, तं परिन्नाय मेहावी तं वा दंडं अन्नं वा नो दंडमी दंडं समारंभिज्जासित्ति वेमि ॥" विमोक्षाध्ययनोद्देशकः । ८—१

' उड्ढं अहे ' इत्यादि—ऊर्ध्वमधस्तिर्यग्दिक्षु सर्वतः—सर्वप्रकारैः सर्वा या काश्चन दिशोऽनुदिशश्च प्रत्येकं जीवेष्वेकेन्द्रियसूक्ष्मेतरेषु यः कर्म्मसमारम्भो जीवानुद्दिश्य य उपमर्दरूपः क्रियासमारंभस्तं, ज्ञपरिज्ञया ज्ञात्वा प्रत्याख्यानपरिज्ञया प्रत्याचक्षीत । मेधावी—मर्यादाव्यवस्थितः, ' नैव सय 'मित्यादि—नैव स्वयमात्मना एतेषु कार्येषु पृथ्वीकायादिषु दण्डं उपमर्दं समारभेत्, नैवाऽपरेण समारम्भापयेत्, नैवाऽन्यान् समारम्भमाणान् समनुजानीयात् । ये चान्ये दण्डं समारम्भन्ते तैरपि वयं लज्जाम इत्येवं कृताध्यवसायः सन् तज्जीवेषु कर्म्मसमारम्भा महतेऽनर्थाय परिज्ञाय मेधावी मर्यादावान् तथा पूर्वोक्तं दण्डमन्यद्वा मृषावादादिकं दण्डाद् बिभेतीति दण्डभीः सन् नो दण्डं प्राण्युपमर्दादिकं समारम्भेथाः, करणत्रिकेण परिहरेदिति । इतिरधिकारसमाप्तौ ब्रवीमि पूर्ववत् ॥ विमोक्षाध्ययने प्रथमोद्देशकः समाप्तः ॥

अथोक्तः प्रथमोद्देशकः, साम्प्रतं द्वितीयः प्रारभ्यते, तस्य आदिमं सूत्रम्—

“ से भिक्खु परिक्कमिज्ज वा, चिट्ठिज्ज वा, निसीइज्ज वा, तुयट्टिज्ज वा, सुसाणंसि वा सुन्नागारंसि वा गिरिगुहंसि वा रूक्खमूलंसि वा कुंभाराययणंसि वा हुरत्था वा कहिंचि विहरमाणं तं भिक्खुं उवसंकमित्तु गाहावई बूया–आउसंतो समणा ! अहं खलु तव अट्ठाए असणं वा पाणं वा खाइमं वा साइमं वा वत्थं वा पडिग्गहं वा कंबलं वा पायपुंछणं वा पाणाइं भूयाइं जीवाइं सत्ताइं समारब्भ समुद्दिस्स कीयं पामिच्चं अच्छिज्जं अणिसट्ठं अभिहडं आहट्टु चेएमि आवसहं वा समुस्सिणोमि से भुंजह वसह, आउसंतो समणा ! । भिक्खू तं गाहावइं समणसं सवयसं पडियाइक्खे–आउसंतो ! गाहावई, नो खलु ते वयणं आढामि, नो खलु ते वयणं परिजाणामि, जो तुमं मम अट्ठाए असणं वा ४ वत्थं पाणाइं वा ४ समारम्भ समुद्दिस्स कीयं पामिच्चं अच्छिज्जं अणिसट्ठं अभिहडं आहट्टु चेएसि आवसहं वा समुस्सिणासि, से विरओ आउसो गाहावई ! एयस्स अकरणयाए ”

‘ से भिक्खु ’ इत्यादि– स भिक्षुर्भिक्षार्थमन्यकार्याय वा पराक्रमेत विहरेत्, तिष्ठेद्वा ध्यानव्यग्रो, निषीदेद्वा अध्ययनाध्यापनश्रवणश्रावणाद्दतः, तथा श्रान्तः क्वचिद्ध्वानादौ त्वग्वर्त्तनं वा विदध्यात् । क ? श्मशाने, तत्र त्वग्वर्त्तनं न संभवति, अतो यथासंभवं पराक्रमणाद्यायोज्यम् । तथाहि–गच्छवासिनस्तत्र तावत्स्थानादिकं न कल्पते, प्रमादस्खलितादौ व्यन्तराद्युपद्रवात् । तथा जिनकल्पादौ सत्त्वभावनां भावयतोऽपि न पितृवनमध्ये निवासोऽनुज्ञातः । प्रतिमाप्रतिपन्नस्स तु यत्रैव सूर्योऽस्तमुपयाति तत्रैव स्थानं, जिनकल्पिकस्य वा, तदपेक्षया श्मशानसूत्रम् । एवमन्यदपि यथासम्भवमायोज्यम् । शून्यागारे वा गिरिगुहायां वा वृक्षमूले वा कुम्भकारायतनेषु वा ‘ हुरत्था व ’त्ति–अन्यत्र वा ग्रामादेर्बहिस्तं भिक्षुं क्वचिद् विहरन्तं गृहपतिरुपसंक्रम्य विनेयदेशं गत्वा ‘ ब्रूयाद् ’–वदेदिति । यच्च वदेत्तदाह–‘ आउसंतो ’त्ति–साधुं श्मशानादिषु

परिक्रमणादिकां क्रियां कुर्वाणं तमुद्देश्यैवं ब्रूयाद्-वदेत्। किं ?, हे आयुष्मन्! भो श्रमण! अहं संसारार्णवतितीर्षुः खलु निश्चितं तवार्थाय अशनं वा पानं वा खादिमं वा स्वादिमं वा तथा वस्त्रं वा पतद्ग्रहं वा कम्बलं वा पादपुञ्छनं वा समुद्दिश्य-आश्रित्य, किं कुर्यादिति दर्शयति-प्राणानि भूतानि जीवांश्च सत्त्वांश्च, एतान्समारभ्य-समुद्दिश्य, शेषं सुगमं पिण्डविशुद्धितो ज्ञेयं, क्रीतं प्रामित्यं आच्छिद्यं अनिसृष्टं अभ्याहृतं, एवमशनादिकमुद्दिश्य ब्रूयात्, तथा आवसहेति-आवसथं वा युष्मदाश्रयं समुच्छ्रणोमि-आदेराराभ्यऽपूर्वं करोमि। इत्येवं प्राञ्जलिः-अवनतोत्तमाङ्गः सन् अशनादिना निमन्त्रयेत्। इत्याद्यामन्त्रणं ज्ञात्वा बह्वारम्भसम्भूतं सूत्रार्थविशारदेनाऽदीनमनस्केन प्रतिषेधितव्यमित्याह-'आउसंतो' इत्यादि-आयुष्मन्! श्रमणः! तं गृहपतिं समनसं सवयसं अन्यथाभूतं वा प्रत्याचक्षीत। कथमिति चेद् दर्शयति-यथा आयुष्मन् भो गृहपते! न खलु तवैवम्भूतं वचनमहं आद्रिये, नाऽपि तवैतद्वचनं परिजानामि-आसेवनपरिज्ञानेन परिविदधेऽहमित्यर्थः। यस्त्वं मम कृतेऽशनादि प्राण्युपमर्देन विदधासि, भो आयुष्मन्! गृहपते! विरतोऽहमेवम्भूतादनुष्ठानात् अकरणतया। तदेवं प्रसह्याऽशनादिसंस्कारप्रतिषेधः प्रतिपादितः, यदि पुनः कश्चिद् विदितसाध्वभिप्रायः प्रच्छन्नमेव विदध्यात्, तदपि कुतश्चिदुपलभ्य प्रतिषेधयेदित्याह—

"से भिक्खुं परिक्कमिज्ज वा जाव हुरत्था वा कहिंचि विहरमाणं तं भिक्खुं उवसंकमित्तु गाहावई आयगयाए पेहाए असणं वा ४ वत्थं वा ४ जाव आहट्टु चेएइ आवसहं वा समुस्सिणाइ भिक्खू परिघासेउं, तं च भिक्खू जाणिज्जा सहसम्मइयाए परवागरणेणं अन्नेसिं वा सुच्चा-अयं खलु गाहावई मम अट्ठाए असणं वा ४ वत्थं ४ वा जाव आवसहं वा समुस्सिणाइ, तं च भिक्खू पडिलेहाए आगमित्ता आणविज्जा अणासेवणाएति बेमि" ॥ १९२ ॥

उ० २ मुनिना निषेधनीयं तद्-वचनम्।

साधुनिमित्तं कृतं निषेधनीयं, प्रासुकदानफलप्ररूपणं च।

'से भिक्खु' मित्यादि– तं भिक्षुं कश्चित् श्मशानादौ विहरन्तमुपसंक्रम्य प्राञ्जलिर्वन्दित्वा गृहपतिः प्रकृतिभद्रकादिकः कश्चिदात्मगतया प्रेक्षयाऽनाविष्कृताभिप्रायः केनचिदऽलक्ष्यमाणो यथाऽहमस्य दास्यामीत्यशनादिकं प्राण्युपमर्देनारभेत। किमर्थमारभ्यत इत्याह–तमशनादिकं भिक्षुं परिघासयितुं भोजयितुं, आवसथं च साधुभिरधिवासयितुमिति। तदशनादिकं साध्वर्थं निष्पादितं भिक्षुः 'जानीयात्'–परिच्छिन्द्यात्। कथमित्याह–'सहसम्मइए'–इत्यादि–'स्वसन्मत्या' परव्याकरणेन वा तीर्थंकरोपदिष्टोपायेन वा, अन्येभ्यो वा तत्परिजनादिभ्यः श्रुत्वा जानीयात्। यथाऽयं खलु गृहपतिर्मदर्थमशनादिकं प्राण्युपमर्देन विधाय मह्यं ददाति, आवसथं च समुच्छृणोति। तद् भिक्षुः सम्यक् प्रत्युत्पेक्ष्य–पर्यालोच्यावगम्य च ज्ञात्वा 'ज्ञापयेत्'–तं गृहपतिमनासेवनया, यथाऽनेन विधानेनोपकल्पितमाहारादिकं नाऽहं भुञ्जे, एवं तस्य ज्ञापनं कुर्याद्। यद्यसौ श्रावकस्ततो लेशतः पिण्डनिर्युक्तिं कथयेद्, अन्यस्य च प्रकृतिभद्रकस्योद्गमादिदोषानाविर्भावयेत्। प्रासुकदानफलं च प्ररूपयेत्, यथाशक्तितो धर्मकथां च कुर्यात्। इतिरधिकारसमाप्तौ ब्रवीमीति पूर्वोक्तं, वक्ष्यमाणं चेत्याह—

"भिक्खुं च खलु पुट्ठा वा अपुट्ठा वा जे इमे आहच्च गंथा वा फुसंति, से हंता हणह खणह छिंदह दहह पयह आलुंपह विलुंपह सहसाकारेह विप्परामुसह, ते फासे धीरो पुट्ठो अहियासए, अदुवा आयारगोयरमाइक्खे, तक्कियाणमणेलिसं अदुवा वइगुत्तीए गोयरस्स अणुपुव्वेण संमं पडिलेहए आयगुत्ते बुद्धेहिं एयं पवेइयं"

'भिक्खुं चे'त्यादि–भिक्षुं दृष्ट्वा कश्चिद् यथा भो भिक्षो! भवदर्थमशनादिकमावसथं वा करिष्ये। अननुज्ञापितोऽपि तेनाऽसौ तत्करोति। अवश्यं चाटुभिर्बलात्कारेण वा ग्राहयिष्यते। अपरस्त्वीपत्साध्वाचारविधिज्ञोऽतोऽपृष्ट्वैव छद्मना

ग्राहयिष्यामीत्यभिसन्धायाऽशनादिकं विदध्यात् । स च तदऽपरिभोगे श्रद्धाभंगाचाद्कुशताऽग्रहणाच्च रोषावेशात् न्यक्कारभावनातः प्रद्वेषमुपगतो हननादिकमपि कुर्यादिति दर्शयति–' जे इमे आहच्चेत्यादि '–ये इमे वक्ष्यमाणलक्षणा ग्रन्था अन्यहननादिकाः ' आहच्च '–' आहृत्य ढौकित्वा तदपरिभोगे ' स्पृशन्ति '–उपतापयन्ति । कथमित्याह– स ईश्वरादिः प्रद्विष्टः सन् हन्ता स्वतोऽपरांश्च हननादौ चोदयति, तद्यथा–हतैनं साधुं दण्डादिभिः, क्षुणुत–व्यपादयत, छिन्त्त हस्तपादादिकं, दहत–अग्न्यादिना, पचत उरुमांसादिकं, आलुम्पत वस्त्रादिकं, विलुम्पत सर्वस्वापहारेण, सहसात्कारयत–आशु पञ्चत्वं नयत, तथा विविधं परामृशत–नानापीडाकरणैर्बाधयत । ' ते फासे 'त्ति– तान्स्पर्शान् दुःखविशेषान् धीरोऽक्षोभ्यः तैः स्पर्शैः स्पृष्टः सन् अधिसहेत । ' अदुवा आयारे 'त्यादि–अथवा साधूनामाचारगोचरं आचारानुष्ठानविषयं मूलोत्तरगुणभेदभिन्नं आचक्षीत पिण्डनिर्युक्त्यादिकम् । किं सर्वस्य सर्वं कथयेत्? इति दर्शयति–'तक्कियाण'त्ति–तर्कयित्वा पर्यालोच्य पुरुषं, कोऽयं पुरुषः कं च नतोऽभिग्रहितोऽनभिग्रहितो मध्यस्थः प्रकृतिभद्रको वेत्येवमुपयुज्य अणेलिसं–अनीदृशं अनन्यसदृशं स्वपक्षपरपक्षव्युदासेन वेदयेत् । ' अदुवा वय 'त्ति अथवा वाग्गुप्त्या व्यवस्थितोऽसति सामर्थ्ये आत्महितं समाचरेत् । ' गोअर इत्यादि '–गोचरस्य आनुपूर्व्या–उद्गमप्रश्नादिरूपया सम्यक्शुद्धिं प्रत्युपेक्षेत । किम्भूतः ?, आत्मगुप्तः–सततोपयुक्तः सन् । नैतन्मयोच्यते, बुद्धैराचार्यैरेतत्प्रवेदितमेतद्वा वक्ष्यमाणमित्याह—

" से समणुन्ने असमणुन्नस्स असणं वा जाव नो पाइज्जा नो निमंतिज्जा नो कुज्जा वेयावडियं परं आढायमाणे त्ति बेमि "

' समणुन्ने ' इत्यादि–न केवलं गृहस्थेभ्यः कुशीलेभ्यो वाऽकल्प्यमिति कृत्वाऽऽहारादिकं न प्रतिगृण्हीयात् । स सम-

उ० २ दानाग्रहणे कुपितैः कृता उपसर्गाः सहनीयाः ।

नोज्ञोऽसमनोज्ञाय तत्पूर्वोक्तमशनादिकं न प्रदद्यात्। नापि परं–अत्यर्थमाद्रियमाणोऽशनादिनिमन्त्रणतोऽन्यथा वा तेषां वैयावृत्त्यं कुर्यादिति ब्रवीमि। इतिरधिकारसमाप्तौ। किम्भूतस्तर्हि किम्भूताय दद्यादित्याह—

" धम्ममायाणह पवेइयं माहणेण मइमया समणुन्ने समणुन्नस्स असणं वा जाव कुज्जा वेयावडियं परं आढायमाणे त्ति बेमि ॥" ८–२

'धम्ममि'त्यादि–धर्म्मं–दानधर्म्मं जानीत यूयं, प्रवेदितं–कथितं केन ?, माहनेन–भगवता श्रीवर्द्धमानस्वामिना 'मतिमता'–केवलिना। किम्भूतं धर्म्ममित्याह–'समणुन्ने' इत्यादि समनोज्ञ उद्युक्तविहारी साधुः, अपरस्मै समनोज्ञाय चारित्रवते संविज्ञायैकसमाचारीप्रनिष्टायाऽशनादिकं चतुर्विधं वस्त्रादिकं चापि चतुर्द्धा प्रदद्यात्, तदर्थं च निमन्त्रयेत्, पेशलमन्यद्वा वैयावृत्त्यमङ्गमर्दनादिकं कुर्यात्। नैतद्विपर्यस्तेभ्यो गृहस्थकुतीर्थिकपार्श्वस्थाऽसंविज्ञाऽसमनोज्ञेभ्यो वेत्येतत्पूर्वोक्तं कुर्यादिति। किन्तु समनोज्ञेभ्य एव परमत्यर्थमाद्रियमाणस्तदर्थसीदने परमुत्तप्यमानः सम्यग्वैयावृत्त्यं कुर्यात्। अयं तु विशेषो–गृहस्थेभ्यो यावल्लभ्यते तावद् गृह्यते, केवलमकल्पनीयं प्रतिषिध्यते। असमनोज्ञेभ्यस्तु दानग्रहणं प्रति सर्वनिषेध इति। इतिब्रवीमिशब्दौ पूर्ववत् द्वितीयोद्देशकः ॥ उक्तो द्वितीयोद्देशकः, अथ तृतीय आरभ्यते। तस्यादिमं सूत्रम्—

" मज्झिमेणं वयसावि एगे संबुज्झमाणा समुट्ठिया, सुच्चा मेहावी वयणं पंडियाणं निसामिया समयाए धम्मे आरिएहिं पवेइए, ते अणहिकंखमाणा अणइवाएमाणा अपरिग्गहेमाणा नो परिग्गहावंति सव्वावंति च णं लोगंसि, निहाय दंडं पाणेहिं पावं कम्मं अकुव्वमाणे एस महं अगंथे वियाहिए, ओए जुइमस्स खेयन्ने उववायं चवणं च नच्चा "

'मज्झिमेण'मित्यादि–इह त्रीणि वयांसि, युवा मध्यमवया वृद्धश्चेति। तत्र मध्यमवया परिपक्वबुद्धित्वाद् धर्मार्हः।

उ० २
समनोज्ञः साधुरमनोज्ञस्य दाननिमन्त्रणादि न कुर्यात्।

अतो मध्यमेन वयसाऽप्येके संबुद्ध्यमाना धर्म्मचरणाय सम्यगुत्थिता इत्याह–' सोच्चे 'त्यादि–इह त्रिविधाः सम्बुध्यमाना भवन्ति, तद्यथा–स्वयंबुद्धाः प्रत्येकबुद्धा बुद्धबोधिताश्च । तत्र बुद्धबोधितेनेहाधिकारः । मेधावी मर्यादावान् पण्डितानां तीर्थंकृदादीनां वचनं श्रुत्वा–आकर्ण्यावधार्य समतामवलम्बेत । किमिति ? यतः–' समयाए 'ति–समतया माध्यस्थेनाऽऽर्यैः–तीर्थकृद्भिर्धर्म्मः श्रुतचारित्राख्यः प्रवेदितः । ते बुध्यमानाः किं कुर्युरित्याह–' ते अणवकंखे'त्यादि '–ते निष्क्रान्ताः कामभोगान् अनभिकांक्ष्यमाना विरक्तात्मान इत्यर्थः । पुनः किं ते ?, ' अणतिवाएत्ति–प्राणिनोऽनतिपातयन्तः परिग्रहमपरिगृण्हन्तः । एवम्भूताश्च स्वदेहेऽपि अममत्वाः ' सव्वावंति 'त्ति–स्वस्मिन्नपि लोके नो परिग्रहवन्तश्च भवन्तीति । किञ्च–' निहाय 'त्ति–निहाय दण्डाः निहाय–त्यक्त्वा दण्डा–आरम्भविशेषाः त्यक्तसमारम्भा इत्यर्थः । ' पाणेहिं 'ति–प्राणिभ्यो निहाय त्यक्त्वा पापं पापोपादानं कर्म्माऽष्टादशभेदभिन्नं, तदऽकुर्वाणोऽनाचरन् ' एसमहं 'ति–एषो महान् अग्रन्थः–न विद्यते द्विधाऽपि ग्रन्थो यस्याऽसावग्रन्थः, ' वियाहिए 'ति–व्याख्यातः तीर्थंकरादिभिः । कथंचम्भूतः स्यादित्याह–'ओए '–ओजोऽसहाय एकः रागद्वेषाभावात्, द्युतिमान्–संयमो मोक्षो वा तस्य खेदज्ञो–निपुणः । देवलोकेऽपि उपपातं च्यवनं च ज्ञात्वा सर्वस्थानानित्यताहितमतिः पापकर्म्मवर्जी स्यादिति । केचित्तु परीषहैर्ग्लानतां नीयन्त इति दर्शयितुमाह––

" आहारोवचया देहा परीसहपभंगुरा पासह एगे सव्विदिएहिं परिगिलायमाणेहिं "

' आहारो ' इत्यादि–आहारोपचया देहाः परीषहैर्भङ्गुराः, अत एव पश्यत यूयम् । एके कातराः सर्वेन्द्रियैर्ग्लायमानैः क्लीवतामियुः । केवलिनोऽप्याहारमन्तरेण शरीरं ग्लानभावं यायाद्, आस्तां तावदपरः प्रकृतिभङ्गुरशरीर इति । परीषह-

पीडितोऽपि किं ? कुर्यादित्याह—

" ओए दयं दयइ, जे संनिहाणसत्थस्स खेयन्ने से भिक्खू कालन्ने बलन्ने मायन्ने खणन्ने विणयन्ने समयन्ने परिग्गहं अममायमाणे कालेणुट्ठाइ अपडिन्ने दुहओ छित्ता नियाइं "

' ओए दय ' मित्यादि—ओज एको रागादिरहितः सन् क्षुत्पिपासादिपरीषहे दयामेव दयते—कृपां पालयति । कः पुनर्दयां पालयतीत्याह—' जे संनिहाणे 'त्यादि—यो हि लघुकर्म्मा, सम्यङ् निधीयते नारकादिगतिषु येन तत्सन्निधानं—कर्म्म, तस्य स्वरूपनिरुपकं शास्त्रं, तस्य खेदज्ञो—निपुणः, सो भिक्षुः कालज्ञः—उचितावसरज्ञः । एतानि सूत्राणि लोकविजयपञ्चमोद्देशकव्याख्यानुसारेण ज्ञातव्यानि । यथा बलज्ञः मात्रज्ञः क्षणज्ञः विनयज्ञः समयज्ञः । परिग्रहममत्वेन अचरन् कालेनोत्थायी अप्रतिज्ञः उभयतश्छेत्ता, स चैवम्भूतः संयमानुष्ठाने निश्चयेन याति निर्यातीति । तस्य संयमानुष्ठाने परिव्रजतो यत्स्यात्तदाह—.

" तं भिक्खुं सीयफासपरिवेवमाणगायं उवसंकमित्ता गाहावई बूया—आउसंतो समणा ! नो खलु ते गामधम्मा उव्वाहंति ? आउसंतो गाहावई ! नो खलु मम गामधम्मा उव्वाहंति, सीयफासं च नो खलु अहं संचाएमि अहियासित्तए, नो खलु मे कप्पइ अगणिकायं उज्जालित्तए वा पज्जालित्तए वा, कायं आयावित्तए वा पयावित्तए वा, अन्नेसिं वा वयणाओ, सिया स एवं वयंतस्स परो अगणिकायं उज्जालित्ता पज्जालित्ता कायं आयाविज्ज वा, पयाविज्ज वा, तं च भिक्खू पडिलेहाए आगमित्ता आणविज्जा अणासेवणाए त्ति बेमि " ॥ ८–३ ॥

उ० ३

क्षुत्पिपासादिपरीषहेऽपि दयादिगुणवान् साधुरिति ।

'तं भिक्खु' मित्यादि–तं भिक्षुमतिक्रान्तयौवनं शीतस्पर्शपरिवेपमानगात्रं उपसंक्रम्य–समीपमागत्य गृहपतिरैश्वर्यादिसामग्र्युपेतः सन्, किमयं मुनिः मत्सुन्दरीमालोक्य सात्विकभावोपेतः कम्पते ?, उत शीतेनेत्येवं संशयानो ब्रूयात्–भो आयुष्मन् ! श्रमण ! नो भवन्तं ग्रामधर्म्मा विषया उत्प्राबल्येन बाधन्ते ?, एवं गृहपतिनोक्ते विदिताभिप्रायः साधुराह–' आउसंतो '–आयुष्मन् गृहपते ! नो खलु मम ग्रामधर्म्मा उद्बाधन्ते । यत्पुनर्वेपमानगात्रमीक्षांचकृषे तत् शीतस्पर्शविजृम्भितं, न तु मनसिजविकारः । शीतस्पर्शं अहं न शक्नोमि सोढुमधिसहितुं वा । एवमुक्तः सन् गृहपतिः करुणाकटाक्षितो वक्ति, सुप्रज्वलितमग्निं किमपि न सेवसे ? । मुनिराह–' णो खलु ' इत्यादि–भो गृहपते ! न खलु मे कल्पते ममाग्निकायमुज्वालयितुं प्रज्वालयितुं, स्वतो ज्वलितादौ कायं–शरीरमीषत् तापयितुमातापयितुं वा । ' अन्नेसिं 'ति–अन्येषां वा वचनात् ममैतत् कर्तुं न कल्पते, यद्विवाऽग्निसमारम्भायाऽन्यो वा वक्तुं न कल्पते ममेति । तं चैवं वदन्तं साधुमवगम्य गृहपतिः कदाचिदेतत्कुर्यादित्याह–' सिया से एव ' मित्यादि–स्यात् कदाचिदपरो गृहस्थ एवमुक्तनीत्या वदतः साधोरग्निकायमुज्वाल्य प्रज्वाल्य वा कायमातापयेत् प्रतापयेद् वा । तच्चोज्वालनप्रतापनादिकं भिक्षुः प्रत्युत्प्रेक्ष्य–विचार्य स्वसन्मत्या परव्याकरणेनान्येषां वान्तिके श्रुत्वा अवगम्य ज्ञात्वा तं गृहपतिमाज्ञापयेत्–प्रतिबोधयेत् । कया ? अनासेवनया । यथैतन्ममाऽयुक्तमासेवितुं, ममाऽऽसेवितुं न कल्पते इति साधुवाक्यम् । भवता तु पुनः साधुभक्त्यनुकम्पाभ्यां पुण्यप्राग्भाराऽर्जनमकारीति एतद् बृहद्वृत्तेर्वाक्यं, न तु सूत्रपाठः, तत्त्वं केवलिनो विदन्ति, इति विमोक्षाध्ययने तृतीयोद्देशः समाप्तः ॥

अथ चतुर्थोद्देशकः प्रारभ्यते, तस्यादिमं सूत्रम्—

उ० ३
शीतजन्ये
देहकम्पे
सति
गृहस्थशङ्का
दूरीकरणीया।

“ जे भिक्खू तिहिं वत्थेहिं परिवुसिए पायचउत्थेहिं तस्स णं नो एवं भवइ–चउत्थं वत्थं जाइस्सामि, से अहेसणिज्जाइं वत्थाइं जाइज्जा अहापरिग्गहियाइं वत्थाइं धारिज्जा, नो धोइज्जा नो धोयरत्ताइं वत्थाइं धारिज्जा, अपलिओवमाणे गामंतरेसु ओमचेलिए, एयं खु वत्थधारिस्स सामग्गियं ”

‘ जे भिक्खू तिहिं’मित्यादि– यो भिक्षुः प्रतिमाप्रतिपन्नो जिनकल्पिको वा त्रिभिर्वस्त्रैः पात्रचतुर्थैः पात्रग्रहणेन पात्रनिर्योगः सप्तधा, कल्पत्रयग्रहणाच्च पञ्चधा शरीरोपधिग्रहणं, ‘ तस्सण ’ मित्यादि तस्यैवम्भूतस्य भिक्षोर्नैवं भवति, ‘ चउत्थ ’ मित्यादि–अतः शीतोपनोदाय चतुर्थं याचिष्ये, अध्यवसायनिषेधे च तद्याचनं दूरोत्सारितमेव । यदि पुनः कल्पत्रयं न विद्यते, शीतकालश्चापतितः, ततोऽसौ जिनकल्पिकादिः ‘ अहेसणिज्जाइं ’ति–यथैषणीयानि वस्त्राणि याचेत । याश्चावाप्तानि वस्त्राणि यथापरिगृहितानि धारयेत् । ततः किं कुर्यात् ?, ‘ नो धोएज्जा ’ति–नो धावेत् प्रासुकोदकेनापि नैव प्रक्षालयेत् । गच्छवासिनो हि अप्राप्तवर्षादौ ग्लानावस्थायां वा प्रासुकोदकेन यतनया धावनमनुज्ञातं, न तु जिनकल्पिकस्य, तथा ‘ नैव धोतरत्ताइं ’ति– न च धौतरक्तानि वस्त्राणि धारयेत्, पूर्वं धौतानि पश्चाद्रक्तानि । ‘ अपलिउ ’त्ति–ग्रामान्तरेषु गच्छन् वस्त्राण्यगोपयन् व्रजेत् । तथाभूतान्येव अन्तप्रान्तानि बिभर्ति यानि गोपयितव्यानि न भवन्ति । ‘ ओमचेलए ’त्ति–अवमं न्यूनं चेलं प्रमाणतो मूल्यतश्च तदस्यास्तीति अवमचेलिकः । एतत्पूर्वोक्तं, खुः अवधारणे, एतदेव वस्त्रधारिणः सामग्र्यं भवति–एषैव त्रिकल्पात्मिका द्वादशप्रकारौधिकोपध्यात्मिका वा सामग्री भवति नापरा । शीतापगमे तान्यपि वस्त्राणि त्याज्यानीति दर्शयति—

“ अह पुण एवं जाणिज्जा–उवाइक्कंते खलु हेमंते गिम्हे पडिवन्ने अहापरिजुण्णाइं वत्थाइं परिट्ठविज्जा, अदुवा संतरुत्तरे

उ० ४
जिन-
कल्पिका-
देर्वस्त्रादि-
सामग्री-
स्वरूपम् ।

अदुवा ओमचेले अदुवा एगसाडे अदुवा अचेले " ॥

' अहपुणे 'त्यादि–अथ पुनरेवं जानीयात्, यथाऽपक्रान्तः खलु हेमन्तो ग्रीष्मः प्रतिपन्नः । अपगता शीतपीडा यथा परिजीर्णान्येतानि वस्त्राणि, एवमवगम्यते ततः परिष्ठापयेत् । परिष्ठाप्य च निःशङ्को विहरेत् । यदि पुनरतिक्रान्ते च शिशिरे क्षेत्रकालपुरुषगुणाद् भवेच्छीतं, ततः किं ? कर्त्तव्यमित्याह–' अदुवा संतरुत्तरे 'ति– अथवा क्षेत्रादिगुणात् शीते वाते सति आत्मपरितुलनार्थं सान्तरो भवेत्, सान्तरं उत्तरप्रावरणीयं यस्य स तथा, क्वचित्प्रावृणोति क्वचित्पार्श्ववर्त्ति बिभर्त्ति । अथवा अवमचेलकः, एककल्पपरित्यागाद् द्विकल्पधारी भवेत् । शनैः २ शीते अपगच्छति सति एकशाटकः स्यात् । शीताभावे तदपि परित्यज्य अचेलो भवतीत्यर्थः, मुखवस्त्रिकारजोहरणमात्रोपधिः स्यात् । किमर्थमेकैकं वस्त्रं त्यजेदित्याह––

" लाघवियं आगममाणे, तवे से अभिसमन्नागए भवइ "

' लाघविय 'मित्यादि– शरीरोपकरणकर्म्मणि लाघवमागमयन्– आपादयन् वस्त्रपरित्यागं कुर्यात् । तस्यैवम्भूतस्य किं स्यादित्याह– ' तवे से ' इत्यादि–से–तस्य वस्त्रपरित्यागं कुर्वतः साधोस्तपोऽभिसमन्वागतं भवति, कायक्लेशस्य तपोभेदत्वात् । एतच्च भगवता प्रवेदितमिति दर्शयितुमाह––

" जमेयं भगवया पवेइयं, तमेव अभिसमिच्चा सव्वओ सव्वत्ताए सम्मत्तमेव समभिजाणिज्जा "

' जमेयं 'ति– यदेतद् भगवता प्रवेदितं तदेवाभिसमेत्य–ज्ञात्वा ' सर्वतः '–सर्वैः प्रकारैः सर्वात्मतया सम्यक्त्वमेव

समत्वं वा–सचेलाचेलावस्थयोस्तुल्यतां समभिजानीयात्–आसेवनपरिज्ञया आसेवेतेति । यः पुनरल्पसत्त्वतया भगवदुपदिष्टं नैव सम्यग् जानीयात्, स एतदध्यवसायी स्यादित्याह––

" जस्स णं भिक्खुस्स एवं भवइ पुट्ठो खलु अहमंसि नालमहमंसी सीयफासं अहियासित्तए, से वसुमं सव्वसमन्नागयपन्नाणेणं अप्पाणेणं केइ अकरणयाए आउट्टे तवस्सिणो हु तं सेयं जमेगे विहमाइए तत्थावि तस्स कालपरियाए, सेऽवि तत्थ वि अंतकारए इच्चेयं विमोहायतणं हियं सुहं खमं निस्सेसं आणुगामियं ति बेमि " ॥ ८–४ ॥

' जस्स ण 'मित्यादि– यस्य भिक्षोर्मन्दसंहननतया एवम्भूतोऽध्यवसायो भवति । तद्यथा–' पुट्ठो 'त्ति–स्पृष्टः खलु अहमस्मि रोगान्तिकैः शीतस्पर्शादिभिर्वा स्त्र्याद्युपसर्गैर्वा । ततो ममास्मिन् अवसरे शरीरविमोक्षं कर्तुं श्रेयो, नालं–न समर्थोऽहमस्मि ' शीतस्पर्शं '–शीतापादितं भावशीतस्पर्शं वा स्त्र्याद्युपसर्गं ' अध्यासितुं '–अधिसोढुमित्यतो भक्तपरिज्ञेङ्गितमरणपादपोपगमनमुत्सर्गतः कर्त्तुं युक्तम् । न च तस्यावसरो यतः कालक्षेपाऽसहिष्णुरतोऽपवादिकं मरणमत्र साम्प्रतमिति । पुनरुपसर्गितस्तदेवाभ्युपेयादित्याह–' से वसुम 'मित्यादि–स साधुर्वसुमान् वसु–द्रव्यं, स चात्र संयमः, स विद्यते यस्याऽसौ वसुमान्, शीतस्पर्शवातादिजनितं दुःखविशेषमसहिष्णुस्तच्चिकित्साऽकरणतया सर्वसमन्वागतप्रज्ञानेनात्मना वृत्तो व्यवस्थितो भवति, स चोपसर्गितो वातादिवेदनां चासहिष्णुः किं ? कुर्यादित्याह–' तवस्सिणो ' इत्यादि–हु–निश्चितं तदेव तपस्विनः श्रेयो भवति, यदुतोद्बन्धनं विहायोगमनं विषं वा भक्षयेत् पतनं वा कुर्यात् । ' जमेगे विहमाइए '–विहायोमरणादिकान् इत्यादिमरणविधिना तुर्यव्रतं रक्षणीयमिति तात्पर्यं, तदेवाऽभ्युपगम्यते ' तत्था वि ' तत्रापि तत्र तस्मिन्न-

वसरे वेहानसादिमरणमपि 'कालपरियाए'–कालपर्याय एव, यद्वत् कालपर्यायमरणं गुणाय, एवं वेहानसादिकमपीत्यर्थः । 'सेऽवि तत्थ'–सोऽपि वेहानसादेर्विधाता तत्र वेहानसादिके मरणे अंतकारए–अन्तक्रियाकारको भवतीत्यर्थः । तस्य हि तस्मिन्नवसरे तद् वेहानसादिकमौत्सर्गिकमेव मरणं, यतोऽनेनाप्यापवादिकेन मरणेनाऽनन्ताः सिद्धाः सेत्स्यन्ति च । उपसंजिहीर्षुराह–'इच्चेयं विमोहायतणं ति'–इत्येतत्पूर्वोक्तं वेहानसादिकमरणं विगतमोहानामाश्रयः–कर्त्तव्यतया हितं, अपायपरिहारतया सुखं, जन्मान्तरेऽपि सुखहेतुत्वात् । तथा क्षमं–युक्तं प्राप्तकालत्वात् । निःश्रेयसं कर्म्मक्षयहेतुत्वात् । आगमिकं तदनुपुण्यानुगमनात् । इति विमोक्षाध्ययने चतुर्थोद्देशकः ॥

उक्तश्चतुर्थोद्देशकः; अतः परं पञ्चमोद्देशकः प्रारभ्यते, तस्यादिमं सूत्रम्––

"जे भिक्खू दोहिं वत्थेहिं परिवुसिए पायतइएहिं तस्स णं नो एवं भवइ–तइयं वत्थं जाइस्सामि, से अहेसणिज्जाइं वत्थाइं जाइज्जा जाव एवं खु तस्स भिक्खुस्स सामग्गियं, अह पुण एवं जाणिज्जा–उवाइक्कंते खलु हेमन्ते, गिम्हे पडिवण्णे, अहापरिजुन्नाइं वत्थाइं परिट्ठविज्जा, अहापरिजुन्नाइं परिट्ठवित्ता अदुवा संतरुत्तरे अदुवा ओमचेले अदुवा एगसाडे अदुवा अचेले लाघवियं आगममाणे तवे से अभिसमन्नागए भवइ, जमेयं भगवया पवेइयं तमेव अभिसमेच्चा सव्वओ सव्वत्ताए सम्मत्तमेव समभिजाणिया, जस्स णं भिक्खुस्स एवं भवइ–पुट्ठो अबलो अहमसि नालमहमंसि गिहंतरसंकमणं भिक्खायरियं गमणाए, से एवंवयंतस्स अभिहडं असणं वा ४ आहट्टु दलइज्जा, से पुव्वामेव आलोइज्जा–आउसंतो ! नो खलु मे कप्पइ अभिहडं असणं ४ भुत्तए वा पायए वा अन्ने वा एयप्पगारे"

उ० ५
शीतादिपीडितेनाभ्याहुताशनादि निषेधनीय–मिति ।

'जे भिक्खू दोहि' मित्यादि– यो भिक्षुर्जिनकल्पिकादिर्द्वाभ्यां वस्त्राभ्यां पर्युषितो वस्त्रशब्दस्य सामान्यवाचित्वात् एकः क्षौमिकोऽपर और्णिक इत्येताभ्यां कल्पाभ्यां पर्युषितः । त्रिकल्पपर्युषितः स्थविरकल्पिको जिनकल्पिको वा स्यात् । कल्पद्वयपर्युषितस्तु नियमाद् जिनकल्पिकादिः संयमे व्यवस्थितः । किम्भूताभ्यां कल्पाभ्यां ?, पात्रतृतीयाभ्यां पर्युषितः इत्यादि ज्ञेयमनन्तरोद्देशकवत् । 'नालमहमंसित्ति–स्पृष्टोऽहं वातादिभी रोगैः अबलो–असमर्थोऽस्मिन् गृहाद् गृहान्तरे संक्रमितुं, तथा भिक्षार्थं चरणं चर्या भिक्षाचर्या तद्गमनाय 'नालं'–न समर्थः पूर्वालापकवद् व्याख्येयः । 'से एवं वदंतस्स'त्ति–सो भिक्षुरेवम्भूतात्मीयावस्थां वदतः साधोरवदतोऽपि परो गृहस्थादिरनुकम्पाभक्तिरसाद्रहृदयोऽभिहृतं–जीवोपमर्दनिर्वृत्तं, किं तत् ?, अशनं पानं खादिमं स्वादिमं वाऽऽहृत्य तस्मै साधवे 'दलइज्ज'त्ति–दद्यादिति । 'से पुव्वामेव'त्ति स जिनकल्पिकादीनामन्यतमः पूर्वमादावेवाऽऽलोचयेत्–विचारयेत् । कतरेणोद्गमादिना दोषेण दुष्टमेतत् ? । तत्राभ्याहृतमिति ज्ञात्वा प्रतिषेधयेत् । यथा भो आयुष्मन् गृहपते ! न खलु एतन्ममाहृतमशनादिकं भोक्तुं पातुं वा कल्पते । अन्यद्वा एतत्प्रकारमाधाकर्म्मिकादिदोषदुष्टं न कल्पते । इत्येवं तं गृहपतिं दानायोद्यतमाज्ञापयेत् । किञ्च––

" जस्स णं भिक्खुस्स अयं पगप्पे–अहं च खलु पडिन्नत्तो अपडिन्नत्तेहिं गिलाणो अगिलाणेहिं अभिकंख साहम्मिएहिं कीरमाणं वेयावडियं साइज्जिस्सामि, अहं वावि खलु अपडिन्नत्तो पडिन्नत्तस्स अगिलाणो गिलाणस्स अभिकंख साहम्मियस्स कुज्जा वेयावडियं करणाए आहट्टु परिन्नं अणुक्खिस्सामि आहडं च साइज्जिस्सामि १, आहट्टु परिन्नं आणक्खिस्सामि आहडं च नो साइज्जिस्सामि २, आहट्टु परिन्नं नो आणक्खिस्सामि आहडं च साइज्जिस्सामि ३, आहट्टु परिन्नं नो आणक्खिस्सामि आहडं च नो

उ० ५
आधाकर्म्मिकादि दोषदुष्टं न कल्पत इति कथनीयम् ।

साइज्जिस्सामि ४, एवं से अहाकिट्टियमेव धम्मं समभिजाणमाणे संते विरए सुसमाहियलेसे तत्थावि तस्स कालपरियाए से तत्थ विअंतिकारए, इच्चेयं विमोहाययणं हियं सुहं खमं निस्सेसं आणुगामियंति बेमि ” ॥ ८-५ ॥

‘ जस्स ण ’ मित्यादि-यस्य भिक्षोः परिहारविशुद्धिकादिकस्य अयं वक्ष्यमाणः प्रकल्प आचारो भवति । ‘ अहं खलु ’ इत्यादि- चः समुच्चये, खलु वाक्यालङ्कारे । अहं क्रियमाणं वैयावृत्त्यमपरैः स्वादयिष्यामि अभिलषिष्यामि । किम्भूतोऽहं ? प्रज्ञप्तो वैयावृत्यकरणाय अपरैरुक्तोऽभिहितो, यथा तव वैयावृत्त्यं यथोचितं कुर्म्मः । किम्भूतैरपरैः ?, अपरिज्ञप्तैः-अनुक्तैः । किम्भूतोऽहं ?, ग्लानो-विकृष्टतपसा कर्त्तव्यताऽशक्तो, वातादिक्षोभेण वा ग्लानः । किम्भूतैरपरैः ?,-अग्लानैरुचितकर्त्तव्यसहिष्णुभिः । केवलं स्थविरा अपि तद्वैयावृत्त्यं कुर्वन्तीति दर्शयति-‘ अभिकंखे ’त्यादि-निर्जरामभिकांक्ष्य-उद्दिश्य साधर्म्मिकैः सदृशकल्पिकैरेकसामाचारीस्थैरपरसाधुभिर्वा क्रियमाणं वैयावृत्त्यमहं स्वादयिष्यामि । यस्याऽयं भिक्षोः प्रकल्प आचारः । स तमाचारं अनुपालयन् भक्तपरिज्ञयाऽपि जीवितं जह्यात्, न पुनराचारखण्डनं कुर्यात् । तदेवमन्येन साधर्म्मिकेण वैयावृत्त्यं क्रियमाणमनुज्ञातम् । साम्प्रतं स एवाऽपरस्य कुर्यादिति दर्शयति-‘ अहं वावि ’ इत्यादि-अहं च पुनरपरिज्ञप्तोऽनभिहितः प्रज्ञप्तस्य-वैयावृत्त्यकरणायाऽभिहितस्याऽग्लानो ग्लानस्य निर्जरामभिकांक्ष्य साधर्म्मिकस्य वैयावृत्त्यं कुर्याम् । किमर्थं ?, करणाय-तदुपकारायेत्यर्थः । तदेवं प्रतिज्ञां परिगृह्यापि भक्तपरिज्ञया प्राणान् जह्यात्, न पुनः प्रतिज्ञामितिसूत्रभावार्थः । इदानीं प्रतिज्ञाविशेषद्वारेण चतुर्भंगिकामाह-‘ आहट्टु ’ इत्यादि-एकः कश्चिदेवम्भूतां प्रतिज्ञां गृण्हाति-ग्लानस्य साधर्म्मिकस्याहारादिकमन्वेषिष्ये, अपरं च वैयावृत्त्यं यथोचितं करिष्यामि तत उपभोक्ष्ये, एवंभूतां प्रतिज्ञामाहृत्य-गृहीत्वा वैयावृत्त्यं

कुर्यादिति । १ । ‘आहट्टु’त्ति–तथाऽपरः प्रतिज्ञामाहृत्य–गृहीत्वा यथा परनिमित्तमन्वेषिष्ये आहारादिकं, आहृतं चापरेण न स्वादयिष्यामीति । २ । तथाऽपर आहृत्य प्रतिज्ञामेवम्भूतां, तद्यथा–नापरनिमित्तमन्वीक्षिष्याम्याहारादिकं, आहृतमन्येन स्वादयिष्यामि । ३ । तथाऽपर आहृत्य प्रतिज्ञामेवम्भूतां, तद्यथा–नान्वीक्षिष्येऽपरनिमितमाहारादिकं, नाप्याहृतमन्येन खादयिष्यामीति । ४ । एवम्भूतां च नानाप्रकारां प्रतिज्ञां गृहीत्वा कुतश्चिद् ग्लायमानोऽपि जीवितपरित्यागं कुर्यान्न पुनः प्रतिज्ञालोपम् । ‘एवं से अहाकिट्टितमेव धम्म’ मित्यादि–एवमुक्तविधिना स भिक्षुरवगततत्त्वः शरीरादौ निष्पिपासो यथाकीर्तितमेव धर्म्ममुक्तस्वरूपं समभिजानन् आसेवनापरिज्ञया आसेवमानः, तथा ‘संते’—शान्तः कषायोपशमात्, विरतः सावद्यानुष्ठानात्, शोभना समाहृता लेश्या येन स सुसमाहृतलेश्यः, एवम्भूतः सन् पूर्वगृहीतप्रतिज्ञापालनासमर्थो रोगादिना प्रतिज्ञालोपमकुर्वन् भक्तप्रत्याख्यानं कुर्यात् । ‘तत्थावि’ इत्यादि–तत्रापि भक्तपरिज्ञायामपि तस्य कालपर्यायेणाऽनागतमपि कालपर्याय एव निष्पादितशिष्यस्य संलिखितदेहस्य यः कालपर्यायो–मृत्योरवसरो अत्रापि ग्लानावसरेऽसावेव कालपर्याय इति, निर्ज्जराया उभयत्र समानत्वात्, स भिक्षुस्तत्र ग्लानतयाऽनशनविधाने ‘व्यन्तिकारकः’–कर्म्मक्षयविधायीति । इच्चेयमित्यादि पूर्ववत् ॥ इति विमोक्षाध्ययने पञ्चमोद्देशकदीपिका ॥

उक्तः पञ्चमोद्देशकः, साम्प्रतं षष्ठः आरभ्यते, तस्यादिमं सूत्रम्—

“जे भिक्खू एगेण वत्थेण परिवुसिए पायबिईएण, तस्स णं नो एवं भवइ–बिइयं वत्थं जाइस्सामि से अहेसणिज्जं वत्थं जाइज्जा अहापरिग्गहियं वत्थं धारिज्जा जाव गिम्हे पडिवन्ने अहा परिजुन्नं वत्थं परिट्ठविज्जा २ त्ता अदुवा एगसाडे अदुवा अचेले लाघ-

विर्यं आगममाणे जाव सम्मत्तमेव समभिजाणिया "

'जे भिक्खू एगेण' इत्यादि- अर्थस्तु पूर्वोक्तत्वान्न लिखितो मया।

"जस्स णं भिक्खुस्स एवं भवइ-एगे अहमंसि न मे अत्थि कोइ, न याहमवि कस्सवि, एवं से एगागिणमेव अप्पाणं समभिजाणिज्जा, लाघवियं आगममाणे तवे से अभिसमन्नागए भवइ जाव समभिजाणिया "

'जस्सण' मित्यादि-णं वाक्यालंकारे, यस्य भिक्षोरेवं भवति, तद्यथा-एकोऽहमस्मि-संसारे पर्यटतो न मे पारमार्थिक उपकारकर्तृत्वेन द्वितीयोऽस्ति। न चाहं दुःखोपनयनतः कस्यचिद् द्वितीयः, स्वकृतकर्मफलेश्वरत्वात्प्राणिनाम्। एवमसौ साधुरेकाकिनमेवात्मानं सम्यगभिजानीयात्। नास्त्यात्मनो नरकादिदुःखत्राणतया शरण्यो द्वितीयोऽस्तीत्येवं सन्दधानो यद्यद्रोगादिकमुपतापकारणमापद्यते, तत्तदपसरणनिरपेक्षो मयैवैतत् कृतं, मयैव सोढव्यम्। इत्यध्यवसायी सम्यगधिसहते। कुत इत्याह-'लाघवियं आगममाणे' इत्यादि गतार्थं, इह द्वितीयोद्देशके उद्गमोत्पादनैषणा प्रतिपादिता-आउसंतो समणा अहं तव अट्ठाए असणं ४ इत्यादिना। पञ्चमोद्देशके ग्रहणैषणा प्रतिपादिता-सिया एवं वदंतस्स परो अभिहडं असणं ४ इत्यादिना। ततो ग्रासैषणा अवशिष्यते। अतस्तत्प्रतिपादनायाह—

"से भिक्खू वा भिक्खुणी वा असणं वा ४ आहारेमाणे, नो वामाओ हणुयाओ दाहिणं हणुयं संचारिज्जा आसाएमाणे, दाहिणाओ वामं हणुयं नो संचारिज्जा आसाएमाणे, से अणासायमाणे लाघवियं आगममाणे तवे से अभिसमन्नागए भवइ, जमेयं भगवया पवेइयं तमेव अभिसमिच्चा सव्वओ सव्वत्ताए सम्मत्तमेव समभिजाणिया "

'से भिक्खू' इत्यादि— स पूर्वव्यावर्णितो भिक्षुः साध्वी, वाऽशनादिकमाहारं उद्गमोत्पादनैषणाशुद्धं ग्रहणैषणाशुद्धं च गृहीतं सदङ्गारिताभिधूमितवर्जमाहारयेत्। तयोश्चाङ्गारधूमितयोः रागद्वेषौ निमित्तं, तयोरपि सरसनिरसोपलब्धिनिमित्तमिति कृत्वा तत्परिहारं दर्शयति— स भिक्षुस्तमाहारमाहारयन् नो वामतो हनुतो दक्षिणां हनुं रसोपलब्धये संचारयेत् आस्वादयन्नशनादिकम्। नाऽपि दक्षिणातो वामां संचारयेदास्वादयन्, स ह्याहारं चतुर्विधमप्याहारयन् रागद्वेषौ परिहरन्नास्वादयेदिति। 'से अणासाय'त्ति–तथा कुतश्चिन्निमित्ताद् हन्वन्तरं संचारयन्नपि अनास्वादयन् संचारयेत्। शेषं गतार्थः। तस्य चान्तप्रान्ताशितया शरीरपरित्यागबुद्धिः स्यादित्याह—

"जस्स णं भिक्खुस्स एवं भवइ— से गिलामि च खलु अहं इमंमि समए इमं सरीरगं अणुपुव्वेण परिवहित्तए, से अणुपुव्वेणं आहारं संवट्टिज्जा, अणुपुव्वेणं आहारं संवट्टित्ता कसाए पयणुए किच्चा समाहियच्चे फलगावयट्ठी उट्ठाय भिक्खू अभिनिव्वुडच्चे"

'जस्सण' मित्यादि— यस्यैकत्वभावितस्य भिक्षोराहारोपकरणलाघवं गतस्य एवमिति–वक्ष्यमाणोऽत्राभिप्रायो भवति। 'से गिलामि च खलु' इत्यादि–से इति–सोऽहं खलु निश्चितं समये संयमावसरे ग्लायामि, रूक्षाहारतया तत्समुत्थेन वा रोगेण पीडितोऽतोऽनशनं मे सुखकारि भवति। अत इदं शरीरमानुपूर्व्या यथेष्टकालावश्यकक्रियारूपया परिवोढुं नालं— अहं क्रियासु व्यापारयितुं न समर्थः। अस्मिन्नवसरे, 'अणुपुव्वेण आहारं संवट्टिज्जा इत्यादि'–स भिक्षुरानुपूर्व्या चतुर्थषष्ठादिकया आहारं संवर्त्तयेत् संक्षिपेत्, न पुनर्द्वादशसंवत्सरसंलेखनानुपूर्वी इह गृह्यते, तावन्मात्रकालस्थितेरभावात्। द्रव्यसंलेखनया संलिख्य यदपरं कुर्यात्तदाह— षष्ठाष्टमादिकतयाऽऽनुपूर्व्याऽऽहारं संवर्त्य कषायान् प्रतनून् कृत्वा

उ० ६
बलक्षये
सति
शरीरत्या-
गमिच्छोः
क्रमेणाहार-
कषादयः
सूक्ष्मी-
कर्त्तव्याः।

'समाहियच्चे'– सम्यगाहिता व्यवस्थापिता अर्चाशरीरं येन स समाहितार्चः– नियमितकायव्यापारः। तथा 'फलगावयट्ठी' तक्ष्यमाणोऽपि दुर्वचनवास्यादिभिः कषायाभावतया फलगवदवतिष्ठति फलगावस्थायी वासीचन्दनकल्पः। एवम्भूतः प्रतिदिनं साकारभक्तं प्रत्याख्याय 'उट्ठाय'त्ति– उत्थाय मरणोद्यमं विधाय अभिनिर्वृत्तार्थः शरीरसन्तापरहितः इङ्गितमरणं कुर्यात्। कथमित्याह—

"अणुपविसित्ता गामं वा नयरं वा खेडं वा कव्वडं वा मडंबं वा पट्टणं वा दोणमुहं वा आगरं वा आसमं वा सन्निवेसं वा नेगमं वा रायहाणिं वा तणाइं जाइज्जा, तणाइं जाइत्ता से तमायाए एगंतमवक्कमिज्जा, एगंतमवक्कमित्ता अप्पंडे अप्पाणे अप्पबीए अप्पहरिए अप्पोसे अप्पोदए अप्पुत्तिंगपणगदगमट्टियमक्कडासंताणए पडिलेहिय २ पमज्जिय २ तणाइं संथरिज्जा, तणाइं संथरित्ता इत्थवि समए इत्तरियं कुज्जा, तं सच्चं सच्चवाई ओए तिन्ने छिन्नकहंकहे आईयट्ठे अणाईए चिच्चाण भेउरं कायं संविहूय विरूवरूवे परीसहोवसग्गे अस्सिं विस्संभणयाए भेरवमणुचिन्ने तत्थावि तस्स कालपरियाए जाव अणुगामियंति बेमि ॥ ८–६

'अणुपविसित्ता' इत्यादि–अनुपरिश्रित्य एतेषु स्थानादिकेष्वाश्रित्य सुगमत्वान्न व्याख्यायते एतानि ग्रामादीनि स्थानानि, अनुप्रविश्य तृणानि याचेत, तृणानि याचित्वा दर्भादीनां तृणान्यादाय एकान्ते–गिरिगुहादौ अपक्रामेत्। एकान्तमपक्रम्य च प्रासुकं स्थण्डिलं प्रत्युपेक्ष्य, किम्भूतं तद्दर्शयति–'अप्पंडे'–अल्पानि अण्डानि कीटिकादीनां यत्र तस्मिन्, अल्पशब्दोऽत्राभावे वर्त्तते, अण्डरहिते इत्यर्थः। अल्पाः प्राणा द्वीन्द्रियादयो यस्मिन्, अल्पानि बीजानि शाल्यादीनां यत्र, अल्पानि हरितानि दूर्वाङ्कुरादीनि यत्र, अल्पावश्याये–अधस्तनोपरितनावश्यायविप्रुड्वर्जिते, अल्पोदके भौमा-

न्तरिक्षोदकरहिते, तथा उत्तिङ्गपनकोदकमृत्तिकामर्कटसन्तानरहिते, तदेवम्भूते स्थण्डिले तृणानि संस्तरेत् । स्थण्डिलं प्रत्युपेक्ष्य, एवं रजोहरणादिना प्रमृज्य संस्तीर्य तृणानि उच्चारप्रश्रवणभूमिं च प्रत्युपेक्ष्य, पूर्वाभिमुखः संस्तारकगतः करतलललाटस्पर्शिभृतजोहरणः कृतसिद्धनमस्कारः आवर्तितपञ्चनमस्कारः । 'एत्थवि समये' इत्यादि–अपिशब्दादन्यत्रापि समये, इत्वरमपि पादपोपगमनापेक्षया नियतदेशप्रचाराभ्युपगमाद् इङ्गितमरणमुच्यते, पुनरित्वरं साकारं । जिनकल्पिकादेः साकारप्रत्याख्यानस्यान्यस्मिन्नपि कालेऽप्यसम्भवात् । तदेवमिङ्गितमरणं धृतिसंहननादिबलोपेतः स्वकृतत्वग्वर्त्तनादिक्रियो यावज्जीवं चतुर्विधाहारनियमं कुर्यात् । 'तं सच्चं'ति– तदिङ्गितमरणं सर्वज्ञोपदेशाच्च सत्यम् । किम्भूतः साधुः ?, सत्यवादी– सत्यं वदितुं शीलमस्येति सत्यवादी, ओजो–रागद्वेषरहितः, तीर्णः संसाराम्बुधिम् । 'कहंकहे'ति–कथमहमिङ्गितमरणप्रतिज्ञां निर्वाहयिष्ये ? इत्येवंरूपा या कथा सा छिन्ना यस्य स छिन्नकथंकथः, दुःकरानुष्ठायी कथंकथी भवति, स तु महापुरुष न व्याकुलतामियात् । स एव आतीतार्थः– आसमन्तात् अतीता–ज्ञाता जीवादयोऽर्था येन स तथा, किम्भूतः ? अनातीतः– संसारार्णवपारगामीत्यर्थः । स एवम्भूत इङ्गितमरणं प्रतिपद्यते विधिना । किं कृत्वा ?, 'चिच्च'त्ति–त्यक्त्वा भिदुरं कायं, संविधूय परीषहोपसर्गान् । 'अस्सिं विस्संभणियाए'ति– अस्मिन् सर्वज्ञोपदिष्टे आगमे विश्रंभणतया विश्वासादेतदुक्तार्थाविसंवादाध्यवसायेन, भैरवं–भयानकं अनुष्ठानं क्लीबैः–कातरैर्दुरनुचरं इङ्गितमरणाख्यं अनुचीर्णवान् अनुष्ठितवान् । 'तत्थावि'–तत्रापि रोगपीडाऽऽहितेङ्गितमरणाभ्युपगमेऽपि, न केवलं कालपर्यायेणेत्यपिशब्दार्थः 'तस्य'– कालज्ञस्य भिक्षोरसावेव कालपर्यायः, कर्म्मक्षयस्योभयत्र समानत्वादिति । आह च– सोऽपि व्यंतिकारक इत्यादि पूर्ववत् ॥

विमोक्षाध्ययने षष्ठोद्देशकः समाप्तः ॥

साम्प्रतं सप्तममारभ्यते तस्यादिमं सूत्रम्—

" जे भिक्खू अचेले परिवुसिए तस्स णं भिक्खुस्स एवं भवइ–चाएमि अहं तणफासं अहियासित्तए सीयफासं अहियासित्तए तेउफासं अहियासित्तए दंसमसगफासं अहियासित्तए एगयरे अन्नतरे विरूवरूवे फासे अहियासित्तए, हिरिपडिच्छायणं चऽहं नो संचाएमि अहियासित्तए, एवं से कप्पेइ कडिबंधणं धारित्तए

' जे भिक्खू ' इत्यादि–यो भिक्षुः प्रतिमाप्रतिपन्नोऽभिग्रहविशेषादऽचेलो–दिग्वासाः ' पर्युषितः '–संयमे व्यवस्थितः। ' तस्स णं 'ति––तस्य भिक्षोः एवमिति–वक्ष्यमाणोऽभिप्रायो भवति। तद्यथा–' चाएमी 'त्यादि–शक्नोम्यहं तृणस्पर्शमधिसोढुं, तथा शीतोष्णदंशमशकस्पर्शमधिसोढुमिति। तथा एकतरान् अन्यतरांश्चानुकूलप्रत्यनीकान् विरूपरूपान् स्पर्शान् दुःखविशेषान् अध्यासितुं समर्थः। किन्त्वहं ह्री–लज्जा तथा गुह्यप्रदेशस्य प्रच्छादनं ह्रीप्रच्छादनं, तच्च त्यक्तुं नाहं शक्नोमि। एतच्च प्रकृतिलज्जालुकतया साधनविकृतरूपतया वा स्यात्। एवमेभिः कारणैः से–तस्य ' कल्पते ' युज्यते ' कटिबन्धनं '–चोलपट्टकं कर्त्तुं, स च विस्तरेण चतुरंगुलाधिको हस्तो, दैर्घ्येण कटिप्रमाण इति। एतत्कारणाभावेऽचेल एव पराक्रमेत–अचेलतया शीतादिस्पर्शं सम्यगधिसहेतेति। एतत्प्रतिपादयितुमाह––

" अदुवा तत्थ परक्कमंतं भुज्जो अचेलं तणफासा फुसन्ति सीयफासा फुसन्ति तेउफासा फुसन्ति दंसमसगफासा फुसन्ति एगयरे विरूवरूवे फासे अहियासए अचेले लाघवियं आगममाणे जाव समभिजाणिया "

उ० ७
भिक्षोः
कारण-
सद्भावे
चोलपट्टक-
स्यानुज्ञा।

' अदुवा तत्थे 'त्यादि– स एवं कारणसद्भावे सति वस्त्रं बिभृयात् । अथवा नैवासो जिह्रेति, ततोऽचेल एव पराक्रमेत । तं च तत्र संयमेऽचेलं पराक्रममाणं भूयः पुनस्तृणस्पर्शाः स्पृशन्ति–उपतापयन्ति, तथा शीतोष्णदंशमशकस्पर्शाः स्पृशन्ति, एकतरान् अन्यतरांश्च विरूपरूपान् स्पर्शानुदीर्णानधिसहेत । असावचेलोऽचेललाघवमागमयन् इत्यादि गतार्थं यावत् सम्मत्तमेव समभिजाणिया । किञ्च प्रतिमाप्रतिपन्न एव विशिष्टमभिग्रहं गृह्णीयात् । तद्यथा–अहमन्येषां प्रतिमाप्रतिपन्नानामेव किञ्चिद् दास्यामि तेभ्यो वा ग्रहीष्यामीत्येवं चतुर्भङ्गीमाह—

" जस्स णं भिक्खुस्स एवं भवइ– अहं च खलु अन्नेसिं भिक्खूणं असणं वा ४ आहट्टु दलइस्सामि आहडं च साइज्जिस्सामि १, जस्सणं भिक्खुस्स एवं भवइ–अहं च खलु अन्नेसिं भिक्खूणं असणं वा ४ आहट्टु दलइस्सामि आहडं च नो साइज्जिस्सामि २, जस्सणं भिक्खुस्स एवं भवइ–अहं च खलु असणं वा ४ आहट्टु नो दलइस्सामि आहडं च साइज्जिस्सामि । ३ । जस्सणं भिक्खुस्स एवं भवई–अहं च खलु अन्नेसिं भिक्खूणं असणं वा ४ आहट्टु नो दलइस्सामि आहडं च नो साइज्जिस्सामि । ४ । अहं च खलु तेण अहाइरित्तेण अहेसणिज्जेण अहापरिग्गहिएणं असणेण वा ४ अभिकंख साहम्मियस्स कुज्जा वेयावडियं करणाए, अहं वावि तेण अहाइरित्तेण अहेसणिज्जेण अहापरिग्गहिएणं असणेण वा पाणेण वा ४ अभिकंख साहम्मिएहिं कीरमाणं वेयावडियं साइज्जिस्सामि लाघवियं आगममाणे जाव सम्मत्तमेव समभिजाणिया "

' जस्सणं 'ति यस्य भिक्षोरेवं भवति–अहं च खलु अन्येभ्यो भिक्षुभ्योऽशनादिकमाहृत्य दास्यामि अपराहृतं च स्वादयिष्यामि इत्येको भङ्गः ॥ १ ॥ यस्य भिक्षोरेवं भवति–अन्येभ्योऽशनादिकमाहृत्य दास्यामि अपराहृतं च नो स्वादयि-

ष्यामि । २ । अहं च खलु अन्येभ्योऽशनादिकमाहृत्य नो दास्यामि अपराहृतं च स्वादयिष्यामि । ३ ॥ अहं च खलु अन्येभ्यो भिक्षुभ्योऽशनादिकमाहृतं नो दास्यामि अपराहृतं नो स्वादयिष्यामि । ४ । इति चतुर्थभङ्गः इत्येवं चतुर्णामभिग्रहाणामन्यतरमभिग्रहं गृण्हीयात् । कश्चिदाद्यानां पदत्रयाणामेकपदेनैवाभिग्रहं गृण्हीयादिति दर्शयितुमाह– यस्य भिक्षोरेवम्भूतोऽभिग्रहो भवति, तद्यथा– अहं च खलु तेन यथातिरिक्तेन आत्मपरिभोगाधिकेन, यथैषणीयेन, यत्तेषां प्रतिमाप्रतिपन्नानामेषणीयमुक्तं तद्यथा–पंचसु भिक्षासु अग्रहः, यथापरिगृहीतेन–आत्मार्थं स्वीकृतेन अशनादीनां निर्ज्जरामभिकांक्ष्य साधर्म्मिकवैयावृत्त्यं कुर्यामिति कश्चिदेवम्भूतमभिग्रहं गृह्णाति । तथाऽपरं च दर्शयितुमाह– अहं वा पुनस्तेन यथातिरिक्तेन यथैषणीयेन यथापरिगृहीतेनाशनेन ४ निर्ज्जरामभिकांक्ष्य साधर्म्मिकैः क्रियमाणं वैयावृत्त्यं स्वादयिष्यामि–अभिलषिष्यामि । यो वाऽन्यः साधर्म्मिकोऽन्यस्य करोति तं चानुमोदयिष्यामि सुष्ठु भवता कृतमेवम्भूतया वाचा तथा कायेन च प्रसन्नदृष्टिमुखेन तथा मनसा चेति । किमित्येवं करोति ?, ' लाघविकमिति गतार्थं ' जाव ' यावत् समभिजानीयात् । आयुःशेषतामवगम्य भिक्षुरुद्यतमरणं कुर्यादिति दर्शयितुमाह—

" जस्स णं भिक्खुस्स एवं भवइ– से गिलामि खलु अहं इमम्मि समए इमं सरीरगं अणुपुव्वेणं परिवहित्तए, से अणुपुव्वेणं आहारं संवट्टिज्जा २ कसाए पयणुए किच्चा समाहियच्चे फलगावयट्ठी उट्ठाय भिक्खु अभिनिव्वुडच्चे अणुपविसित्ता गामं वा नयरं वा जाव रायहाणिं वा तणाइं जाइज्जा जाव संथरिज्जा, इत्थवि समए कायं च जोगं च ईरियं च पच्चक्खाइज्जा, तं सच्चं सच्चावाई ओए तिन्ने छिन्नकहंकहे आइयट्ठे अणाईए चिच्चाणं भेउरं कायं संविहुणिय विरूवरूवे परीसहोवसग्गे अस्सिं विस्संभणाए

उ० ७ आयुःशेषतामवगम्य भिक्षुरुद्यतमरणं कुर्यादिति ।

भैरवमणुचिन्ने तत्थवि तस्स कालपरियाए सेवि तत्थ विअन्तिकारए इच्चेयं विमोहायतणं हियं सुहं खम निस्सेसं आणुगामियंति वेमि " ॥ ८-७

' जस्सणं 'ति-यस्य भिक्षोरेवम्भूतो वक्ष्यमाणोऽभिप्रायो भवति । ग्लायामि खलु अहमित्यादि, संस्तरेत संस्तीर्य च तृणानि यदपरं कुर्यात्तदाह-' इमंमि समए '-अत्रापि समयेऽवसरे न केवलमन्यत्राऽनुज्ञाप्य संस्तारकमारुह्य सिद्धसमक्षं स्वत एव पञ्चमहाव्रतारोपणं करोति । ततश्चतुर्विधमाहारं प्रत्याचष्टे । ततः पादपोपगमनाय कायं शरीरं प्रत्याचक्षीत । तद्योगं चाकुञ्चनप्रसारणोन्मेषनिमेषादिकम् । ' इरियं च ' त्ति-ईरणमीर्या तां च सूक्ष्मां कायवाग्गतां मनोगतां वाऽप्रशस्तां प्रत्याचक्षीत । तच्च-सत्यवादीत्याद्यनन्तरोद्देशकवन्नेयं, ब्रवीमीति पूर्ववत् । इति विमोक्षाध्ययने सप्तमोद्देशकः समाप्तः ॥

अथाष्टमोद्देशकः प्रारभ्यते, तत्रादिमं सूत्रम्—

" अणुपुव्वेण विमोहाइं, जाइं धीरा समासज्ज । वसुमन्तो मइमन्तो, सव्वं नचा अणेलिसं ॥ १७ ॥ दुविहंपि विइत्ता णं बुद्धा धम्मस्स पारगा । अणुपुव्वीइ संखाए, आरम्भाओ तिउट्टइ ॥ १८ ॥ कसाए पयणू किचा, अप्पाहारे तितिक्खए । अह भिक्खु गिलाइज्जा, आहारस्सेव अन्तियं ॥ १९ ॥ जीवियं नाभिकङ्खेज्जा, मरणं नोवि पत्थए । दुहाओऽवि न सज्जिज्जा, जीविए मरणे तहा ॥ २० ॥ "

' अणुपुव्वेणे 'त्यादि—आनुपूर्वी-संलेखना तयाऽऽनुपूर्व्या यान्यऽभिहितानि, कानि पुनस्तानि ?, विमोहानि-विगतो मोहो येभ्यस्तानि भक्तपरिज्ञादीनि पण्डितमरणानि, यथाक्रमयुतानि, यानि धीरा अक्षोभ्याः ' समासज्ज 'ति-समासाद्य-

प्राप्य वसुमन्तः-संयमवन्तः, मतिमन्तः सर्वं ज्ञात्वा-सर्वं कृत्यमकृत्यं च ज्ञात्वाऽवधार्य, 'अणेलिसं'ति—अनन्यसदृश-मनीदृशं अद्वितीयं, सर्वं ज्ञात्वा समाधिमनुपालयेत् ॥ १७ ॥ 'दुविहंपि'त्ति-द्विविधं-बाह्याभ्यन्तरं विदित्वा-ज्ञात्वा परिहन्ति-त्यजन्ति, के ?, बुद्धा ज्ञाततत्त्वाः। किम्भूतास्ते ?, धर्म्मस्य श्रुतचारित्ररूपस्य पारं गच्छतीति पारगाः-सम्यग् वेत्तारः। ते आनुपूर्व्या प्रव्रज्यादिक्रमेण संयममनुपाल्य, मम जीवतः कश्चिद्गुणो नास्तीत्यतः शरीरत्यागावसरः प्राप्तः। कस्मै ? मरणाय समर्थोऽहमित्येवं 'संखाय'-ज्ञात्वा कर्म्माष्टभेदं, तस्मात् त्रुट्यति त्रुटिष्यति वा ॥ १८ ॥ अथ भावसंलेखनामाह-'कसाय'त्ति-कषायान् प्रतनुकृत्य अल्पाहारः स्तोकाशी संलेखनायां षष्ठाष्टमादितपः कुर्वन्, यत्र पारयेत् तत्राल्पमित्यर्थः, तितिक्षते-असदृशजनादपमानतां क्षमते रोगान्तकं वा सहते। 'अह'त्ति-अथेत्यानन्तर्ये भिक्षुर्ग्लायेत्-आहाराभावे ग्लानतां व्रजेत् क्षणे क्षणे मूर्च्छन् आहारस्यैवान्तिकं-पर्यवसानं गच्छेत्, संलेखनाक्रमं विहायाऽनशनं विदध्यादित्यर्थः ॥ १९ ॥ 'जीवियं'ति-संलेखनायां स्थितः साधुः सर्वथा जीवितुं नाभिकांक्षेत्, नापि मरणं प्रार्थयेत्, उभयतो जीविते मरणे वा न सङ्गं विदध्यात् जीविते मरणे तथा ॥ २० ॥ किम्भूतस्तर्हि स्यादित्याह—

"मज्झत्थो निज्जरापेही, समाहिमणुपालए। अन्तो बहिं विउसिज्ज अज्झत्थं सुद्धमेसए ॥ २१ ॥ जं किंचुवक्कमं जाणे, आऊखेमस्समप्पणो। तस्सेव अन्तरद्धाए, खिप्पं सिक्खिज्ज पण्डिए ॥ २२ ॥ गामे वा अदुवा रण्णे, थंडिलं पडिलेहिया। अप्पपाणं तु विन्नाय, तणाइं संथरे मुणी ॥ २३ ॥ अणाहारो तुयट्टिज्जा, पुट्ठो तत्थऽहियासए। नाइवेलं उवचरे माणुस्सेहिं विपुट्ठवं ॥ २४ ॥"

'मज्झत्थो'त्ति-जीवितमरणयोर्निराकांक्षतया मध्यस्थो निर्जरापेक्षी सन् मरणं समाधिस्थोऽनुपालयेत् इति भावः,

अन्तः कषायान् बहिरपि शरीरोपकरणादिकं, ' विउसिज्ज 'त्ति–व्युत्सृज्य अध्यात्ममन्तःकरणं तत् शुद्धं विश्रोतसिकारहितमन्वेषयेत् ॥ २१ ॥ ' जं किंचुवु 'त्ति–आयुषः क्षेमं–सम्यक्पालनं तस्य, कस्य सम्बन्धि तदायुः ? आत्मनः–आत्मायुषः यं कञ्चन उपक्रमं–क्षेमप्रतिपालनोपायं जानीते, तं क्षिप्रमेव शिक्षेत–व्यापारयेत् पण्डितो–बुद्धिमान्, तस्यैव संलेखनाकालस्य, ' अंतरद्धाए '–अन्तरकाले अर्द्धसंलिखितदेहे देही यदि कश्चिद् धात्वादिक्षोभान्तकः आजीवितापहारी स्यात्, ततः समाधिमरणं कालं समुपस्थितं ज्ञात्वा किं कुर्यादित्याह—॥ २२ ॥ ' गामे 'त्ति–ग्रामे ग्राममध्ये उपाश्रयादौ, अरण्ये–उद्यानगिरिगुहादौ, स्थण्डिलं प्रत्युपेक्ष्य–विलोक्य अल्पप्राणं तु–प्राणाभावं विज्ञाय तृणानि तत्र संस्तरेत् । मुनिर्ज्ञानवानित्यर्थः ॥२३॥ ' अणाहारो 'त्ति—अनाहारस्तत्र त्रिविधं चतुर्विधाहारं प्रत्याख्याय संस्तारके त्वग्वर्त्तनं कुर्यात्, स्पृष्टः परीषहोपसर्गैः सम्यक् तान् अधिसहेत, तत्र मानुषैरनुकूलप्रतिकूलैः परीषहोपसर्गैः स्पृष्टो–व्याप्तो नातिवेलमुपाचरेत्–नैव मर्यादोल्लङ्घनं कुर्यादित्यर्थः ॥ २४ ॥

" संसप्पगा य जे पाणा, जे य उड्ढमहोचरा । भुञ्जन्ति मंससोणियं न छणे न पमज्जए ॥ २५ ॥ पाणा देहं विहिंसन्ति, ठाणाओ नवि उब्भमे । आसवेहिं विवित्तेहिं तिप्पमाणोऽहियासए ॥ २६ ॥ गन्थेहिं विवित्तेहिं आउकालस्स पारए । पग्गहियतरगं चेयं, दवियस्स वियाणओ ॥ २७ ॥ अयं से अवरे धम्मे नायपुत्तेण साहिए । आयवज्जं पडीयारं विजहिज्जा तिहा तिहा ॥ २८ ॥"

' संसप्पग 'त्ति–संसर्प्पन्तीति संसर्प्पकाः–पिपीलिकाः क्रोष्ट्रादयो ये प्राणाः प्राणिनो, ये चोर्ध्वचरा गृद्धादयो, ये चाधश्चराः सर्प्पादयः, ते एवम्भूता नानाप्रकाराः भुञ्जन्तो मांसशोणितं, सिंहादयो मांसं, मशकादयः शोणितं–रुधिरं, तांश्च

अप्रतिपूर्ण-संलेखनाकाले जीवितघ्ने रोगे सति शीघ्रमनशनं कर्त्तव्यमिति ।

प्राणिन आहारार्थिनः समागतान् हस्तादिभिर्न क्षुणुयात्—न हन्यात् । न च भक्ष्यमाणं शरीरावयवं रजोहरणादिना प्रमार्जयेदित्यर्थः ॥ २५ ॥ ' पाणादेहं 'ति प्राणाः प्राणिनो मम देहं विहिंसन्ति न पुनर्ज्ञानादीनि, अतस्त्यक्तदेहाशिनस्तानन्तरायभयात् न निषेधयेत् । तस्मात्स्थानान्नाप्युद्भ्रमेत्— नान्यत्र यायात् । किम्भूतः सन्, आश्रवैर्विचित्रैः पृथग्रूपैरविद्यमानैः शुभाध्यवसायी भक्ष्यमाणोऽपि अमृतादिना तृप्यमान इव सम्यक् तत्कृतां वेदनामधिसहेतेति भावार्थः ॥ २६ ॥ ' गंथेहि 'त्ति—ग्रन्थैः अङ्गानङ्गप्रविष्टैरात्मानं भावयन् आयुकालस्य मृत्युकालस्य पारगः—पारगामी स्यात्, यावदन्त्योश्वासनिश्वासस्तावत्तद्विदध्यात् । एतन्मरणविधानकारी सिद्धिं त्रिविष्टपं वा प्राप्नुयादिति गतं भक्तपरिज्ञामरणं । साम्प्रतमिङ्गितमरणमुच्यते, तद्यथा—प्रगृहीततरकं चेदं, प्रकर्षेण गृहीततरं तदेव प्रगृहीततरकं । इदमिति वक्ष्यमाणमिङ्गितमरणं, कस्यैतद् भवति ?, ' दवियस्स 'त्ति— द्रव्यं संयमः स विद्यते यस्याऽसौ द्रविकस्तस्य ' विजानतो ' गीतार्थस्य जघन्यतोऽपि नवपूर्वधरस्येति नान्यस्य । अत्रापि संलेखनादि पूर्वोक्तं सर्वं वाच्यम् । अयमपरोऽपि विधिरित्याह—॥ २७ ॥ ' अयं से 'ति—अयमपरोऽन्यो भक्तप्रत्याख्यानाद् भिन्न इङ्गितमरणधर्मविशेषो ज्ञातपुत्रेण वीरवर्द्धमानस्वामिना सुष्ठु आहितः स्वाहितः— उपलब्धः । चतुर्विधमाहारं प्रत्याख्याय संस्तारके पूर्वोक्तविधिना तिष्ठति । अयमत्र विशेषः । ' आयवज्जं 'ति—आत्मवर्जं प्रतिचारं—अङ्गव्यापारं विशेषेण जह्यात्—त्यजेत्—त्रिविधं त्रिविधेन स्वव्यापारव्यतिरेकेण परित्यजेत् । स्वयमेव चोद्वर्त्तनपरिवर्त्तनं कायिकयोगादिकं विधत्ते । सर्वथा प्राणिरक्षणं विधेयमिति दर्शयितुमाह—

" हरिएसु न निवज्जिज्जा थण्डिलं मुणिया सए । विओसिज्ज अणाहारो पुट्ठो तत्थऽहियासए ॥ २९ ॥ इन्दिएहिं गिलायन्तो

उ० ८ जघन्येन नव-पूर्वधरस्य योग्यता इङ्गित-मरणे ।

यथा-समाधि-इङ्गितमरणे हस्तपादा-दिसंचार-क्रिया।

समियं आहरे मुणी। तहावि से अगरिहे अचले जे समाहिए ॥ ३० ॥ अभिक्कमे पडिक्कमे संकुचए पसारए। कायसाहारणट्ठाए इत्थं वावि अचेयणो ॥ ३१ ॥ परिक्कमे परिकिलन्ते अदुवा चिट्ठे अहायए। ठाणे ण परिकिलन्ते निसीइज्जा य अंतसो " ॥ ३२ ॥

हरितानि दूर्वाङ्कुरादीनि तेषु न शयीत, स्थण्डिलं मत्वा शयीत, सबाह्याभ्यन्तरमुपधिं व्युत्सृज्य त्यक्त्वा अनाहारः सन् स्पृष्टः परीषहोपसर्गैः तत्र-तस्मिन्संस्तारके व्यवस्थितः सन् सर्वमधिसहेत ॥ २९ ॥ 'इंदिएहि' त्ति-स मुनिरनाहारतया इन्द्रियैर्ग्लायमानः समतामात्मनि आहरेत्, नार्त्तध्यानोपगतो भूयात्, यथासमाधानमास्ते। संकोचननिर्विण्णो हस्तादिकं प्रसारयेत्, तेनाऽपि निर्विण्ण उपविशेत्, यथेङ्गितदेशे सञ्चरेत्। तथाप्यसौ स्वकृतचेष्टत्वादऽगर्ह्य एव। किम्भूतः?, अचलो यः समाहितः अङ्गीकृतमरणान्न चलतीत्यचलः, सम्यगाहितं व्यवस्थापितं धर्म्मध्याने शुक्लध्याने वा मनो येन समाहितः ॥ ३० ॥ 'अभिक्कमे' त्ति-प्रज्ञापकापेक्षया अभिमुखं क्रमणं अभिक्रमणं संस्तारकाद् गमनं, प्रतीपं क्रमणं प्रतिक्रमणं आगमनमित्यर्थः। यथासमाधानं भुजादिकं संकोचयेत्प्रसारयेद्वा। किमर्थं?, कायस्य शरीरस्य प्रकृतिपेलवस्य साधारणार्थं। इत्थं वावि' त्ति-अत्राप्यसौ धाशब्दात्पादपोपगमने अचेतनवत् सक्रियोऽपि निःक्रिय एव ॥ ३१ ॥ 'पडिक्कमे' ति-यदि निषण्णस्यापि गात्रभङ्गः स्यात्ततः परिक्रामेत् चंक्रम्यात्, यथा नियमिते देशेऽकुटिलया गत्या गतागतानि कुर्यात्। तेनाऽपि श्रान्तस्सन् अथवोपविष्टः सन् यथायते यथा प्रणिहितगात्र इवाचरतीति यथायते यथावत्तिष्ठतीति भावः। यदा पुनः स्थानेनापि परिक्रममियात्, तत उत्तानको वा पार्श्वशायी वा दण्डायतो वा यथासमाधानं तिष्ठति ॥ ३२ ॥ किञ्च—

" आसीणेऽणेलिसं मरणं, इन्द्रियाणि समीरए। कोलावासं समासज्ज वितहं पाउरेसए ॥ ३३ ॥ जओ वज्जं समुप्पज्जे न

तत्थ अवलम्बए । तउ उक्कसे अप्पाणं फासे तत्थऽहियासए ॥ ३४ ॥ अयं चाययतरे सिया, जो एवमणुपालए । सव्वगायनिरोहेवि ठाणाओ नवि उब्भमे ॥ ३५ ॥ अयं से उत्तमे धम्मे पुव्वट्ठाणस्स पग्गहे । अचिरं पडिलेहित्ता, विहरे चिट्ठ माहणे ॥ ३६ ॥"

'आसीण'त्ति– आसीन आश्रितः, किं तत् ?, मरणं, किम्भूतं ? अनीदृशं–अनन्यसदृशमितरजनदुरध्यवसेयम् । तथाभूतश्च किं कुर्यात् ? इन्द्रियाणि इष्टानिष्टविषयेभ्यः सम्यगीरयेत् रागद्वेषाभावात्प्रेरयेदित्यर्थः । 'कोलावासं'ति– कोलाः घुणकीटकास्तेषामावासः कोलावासस्तं अन्तर्घुणकृतं उद्देहिकादिनिचितं वा समासाद्य प्राप्य तस्माद्यद्वितथं– आगन्तुकतदुत्थजन्तुरहितमवष्टम्भनाय प्रादुरेषयेत्–अन्वेषयेदित्यर्थः ॥ ३३ ॥ 'जओ वज्जं'ति–यतो यस्मादनुष्ठानादवष्टम्भनादेर्वज्रवद् वज्रं–गुरुत्वात्कर्म्म अवद्यं वा पापं वा तत्समुत्पद्येत, न तत्र घुणक्षतकाष्ठादाववलम्बेत–नावष्टम्भनादिकां क्रियां कुर्यात् । ततस्तस्मादऽवद्यसमुत्पत्तिहेतोरात्मानमुत्कर्षेत–उत्क्रामयेत् । सर्व्वान्स्पर्शान् दुःखविशेषान् अध्यासयेत् । यतो यन्मया त्यक्तं शरीरकं एतदेवोपद्रवन्ति, न पुनः यद्वद् धर्म्माचरणं इत्याकलय्य सर्व्वपीडासहिष्णुर्भवेत् ॥ ३४ ॥ गतमिङ्गितमरणम् । साम्प्रतं पादपोपगमनमाह–'अयं चायय'त्ति–अयं प्रत्यक्षो मरणविधिः स चायततरो, न केवलं भक्तपरिज्ञाया इङ्गितमरणविधिरायततरः, अयं च तस्मादायततर इति चशब्दार्थः । अत्रापीङ्गितमरणे प्रव्रज्यासंलेखनादिकमुक्तं तत्सर्व्वं द्रष्टव्यम् । यो भिक्षुरेवमुक्तविधिना एनं पादपोपगमनविधिमनुपालयेत् । सर्वगात्रनिरोधेऽपि–नानोपसर्ग्गोपद्रवभयभीतोऽपि तस्मात्स्थानान्न व्युदुभ्रमेत्–न स्थानान्तरं यायात् ॥ ३५ ॥ 'अयं से'ति–अयं प्रत्यक्ष उत्तमः सर्व्वोत्तमधर्म्मविशेषः, 'पुव्वट्ठाण'त्ति–पूर्व्वस्थानाद् भक्तपरिज्ञादेः प्रकर्षेण ग्रहोऽत्र पादपोपगमने प्रगृहीततरमेतदित्यर्थः 'छिन्नवृक्षवदऽवतिष्ठतीति भावः । 'अचिरं'–

ति–अचिरं स्थानं तच्च स्थण्डिलं तत्पूर्व्वोक्तविधिना प्रत्युपेक्ष्य विहरेत् मर्यादां पालयेत् तिष्ठेत् । कः ? माहनो–मुनिः ॥३६॥

" अचित्तं तु समासज्ज ठावए तत्थ अप्पगं । वोसिरे सव्वसो कायं न मे देहे परीसहा ॥ ३७ ॥ जावज्जीवा परीसहा उवसग्गा इति संखया । संवुडे देहभेयाए इय पन्नेऽहियासए ॥ ३८ ॥ भेउरेसु न रज्जिज्जा कामेसु बहुतरेसुवि । इच्छालोभं न सेविज्जा धुववन्नं सपेहिया ॥ ३९ ॥ सासएहिं निमन्तिज्जा, दिव्वमायं न सद्दहे । तं पडिबुज्झ माहणे सव्वं नूमं विहूणिया ॥ ४० ॥

' अचित्तं 'ति– अचित्तं जीवरहितं फलकादि समासाद्य–लब्ध्वा फलकेऽपि समर्थः, कश्चित्काष्ठे वाऽवष्टभ्य तत्रात्मानं स्थापयेत् । व्यवस्थाप्य च त्यक्तचतुर्विधाहारो मेरुवन्निःप्रकम्पो गुरुभिरनुज्ञातो व्युत्सृजेत् सर्वशः–सर्वथा सर्वात्मना कायं–देहं । व्युत्सृष्टस्य देहस्य केचन परीषहोपसर्ग्गाः स्युस्ततो भावयेत् । ' मम देहे 'त्ति– मत्सम्बन्धी देह एव न भवति परित्यक्तत्वात्, तदभावे कुतः परीषहः ॥ ३७ ॥ ' जावज्जीवं 'ति– यावज्जीवं यावत्प्राणधारणं तावत्परीषहोपसर्ग्गाः सोढव्या इत्येतत् संख्याय– ज्ञात्वा तानऽध्यासयेत् । ' संवुडे '– संवृतः त्यक्तगात्रः, ' देहभेयाए '– शरीरत्यागायोत्थित इति कृत्वा, प्रज्ञावान्– उचितविधानवेदी यद्यत्कायपीडाकारि उपतिष्ठते, तत्तत् सम्यगधिसहेत ॥ ३८ ॥ ' भिउरेसु न रज्जेज 'त्ति– भेदनशीला भिदुराः शब्दादयः कामगुणाः, तेषु प्रभूततरेष्वपि न रज्येत– न रागं यायात् । कामेषु– इच्छामदनरूपेषु बहुतरेषु अनल्पेष्वपि । यद्यपि राजा राजकन्यादिना उपलोभयेत् तथापि न तत्र गार्द्ध्यमियात् । इच्छा–तृष्णा तद्रूपो लोभ इच्छालोभः, चक्रवर्त्तिद्रव्याभिलाषादिको निदानविशेषस्तमसौ निर्ज्जरापेक्षी न सेवेत । ' धुववण्णं 'ति– ध्रुवां शाश्वतीं यशः-कीर्त्तिं पर्यालोच्य कामेच्छालोभविक्षेपं कुर्यात् ॥ ३९ ॥ ' सासएहिं 'ति– यावज्जीवनिर्वाहकैरर्थैः कश्चिन्निमन्त्रयेत्, तत्प्रति-

उ० ८

तस्मिन् सहनीया उपसर्गाः, ज्ञातव्यं देवमायादिस्वरूपं च ।

बुध्यस्व यथा शरीरार्थं धनं मृग्यते, तदेव शरीरमशाश्वतम् । तथा दिव्यां मायां न श्रद्धीत–तामपि प्रतिबुध्यस्व । 'माहणे'-त्ति– साधुः सर्वं नूमं मायावत्तां च विधूयापनीय देवादिमायां बुध्यस्वेति ॥ ४० ॥ किञ्च—

" सव्वट्ठेहिं अमुच्छिए, आउकालस्स पारए । तितिक्खं परमं नच्चा, विमोहन्नयरं हियं ॥ ४१ ॥ ति बेमि ॥ " ८–८– विमोक्खाज्झयणं सम्मत्तं ॥

'सव्वट्ठेहिं'ति– सर्वे च ते अर्थाश्च सर्वार्थाः, पञ्चप्रकाराः कामगुणास्तेषु अमूर्छितः । आयुःकालस्य–यावन्मात्रं कालमायुः संतिष्ठते असौ आयुःकालस्तस्य पारगः स्यात् । तितिक्षापरीषहोपसर्गापादितदुःखविशेषसहनं परमं प्रधानमस्तीति ज्ञात्वा, विमोहान्यतरं हितमिति– विगतो मोहो येषु, तानि विमोहानि– भक्तपरिज्ञेङ्गितमरणपादपोपगमनानि, तेषामन्यतरं यथावसरं विधेयमित्यर्थः । इति ब्रवीमीति पूर्ववत् ॥ इति श्रीचन्द्रगच्छाम्भोज० श्रीअजितदेवसूरिविरचितायां श्रीमदाचाराङ्ग-दीपिकायां सप्तमाध्ययनं समाप्तम् ॥

अत्र क्रमागतमष्टममध्ययनं व्यवच्छिन्नं महापरिज्ञाख्यम् । अत्राष्टमाध्ययनस्थाने नवममध्ययनं प्रारभ्यते तत्रादिमं सूत्रम्—

" अहासुयं वइस्सामि जहा से समणे भगवं उट्ठाए । संखाए तंसि हेमंते अहुणा पव्वइए रीइत्था ॥ ४२ ॥ णो चेविमेण, वत्थेण, पिहिस्सामि तंसि हेमंते । से पारए आवकहाए एयं खु अणुधम्मियं तस्स ॥ ४३ ॥ चत्तारि साहिए मासे, बहवे पाणजाइया आगम्म । अभिरुज्झ कायं विहरिंसु, आरुसियाणं तत्थ हिंसिंसु ॥ ४४ ॥ संवच्छरं साहियं मासं जं न रिक्कासि वत्थगं

भयवं । अचेलए तओ चाई तं वोसिरिज्ज वत्थमणगारे ॥ ४५ ॥ ”

‘ अहासुय ’ मित्यादि–श्रीसुधर्म्मास्वामी जम्बूस्वामिने पृच्छातः कथयति–यथाश्रुतं वदिष्यामि । यथाऽसौ श्रमणो भगवान् महावीरः, ‘ उट्ठाए ’ति–उत्थाय–उद्यतविहारं प्रतिपद्य सर्वालङ्कारं परित्यज्य पञ्चमुष्टिलोचं विधाय, कर्म्मक्षयार्थं वोत्थाय संख्याय–ज्ञात्वा तस्मिन् हेमन्ते मार्गशीर्षदशम्यां प्राचीनगामिन्यां छायायां प्रव्रज्याग्रहणानन्तरमेव रीयते स्म–विजहार । द्वादशवर्षाणि साधिकानि छद्मस्थो मौनव्रती तपश्चचार । सुरपतिना भगवदुपरि देवदूष्यं चिक्षेपे । तद् भगवताऽपि निःसङ्गाभिप्रायेणैव धर्म्मोपकरणमृते न धर्म्मोऽनुष्ठातुं मुमुक्षुभिरपरैः शक्यते इति कारणापेक्षया मध्यस्थवृत्तिना तथैवावधारितं, न पुनस्तस्य तदुपभोगेच्छाऽस्तीति । एतद् दर्शयितुमाह–‘ णो चेविमेण ’त्ति–न चैवाहमनेन वस्त्रेणेन्द्रप्रक्षिप्तेनात्मानं पिधास्यामि तस्मिन् हेमन्ते, तद्वा वस्त्रं त्वक्त्राणीकरिष्यामि लज्जाच्छादनं वा विधास्यामि। किम्भूतोऽसौ ?, स भगवान् ‘ पारए ’त्ति–संसारार्णवपारगः । कियत्कालं ?, यावत्कथं–यावज्जीवमित्यर्थः । किमर्थं धारयति ?, ‘ एयं खु अणुधम्मियं ’ति–एतदानुधार्मिकं सर्वैरपि तीर्थकृद्भिराचीर्णम् । तथा भगवतः प्रव्रजतो ये दिव्याः सुगन्धिपटवासा आसंस्तद्गन्धाकृष्टाश्च भ्रमरादयः समागत्य शरीरमुपतापयन्तीत्याह– ॥ ४३ ॥ ‘ चत्तारि साहिए मासे ’–चतुरः साधिकान् मासान् बहवः प्राणिजातयो भ्रमरादिकाः समागत्यारुह्य च कायं शरीरं विजह्रुः काये प्रविचारं चक्रुः । मांसशोणितार्थितयाऽऽरुह्य तत्र काये ‘ हिंसिंसु ’–इतश्चेतश्च विलुम्पन्ति स्मेत्यर्थः ॥ ४४ ॥ कियन्मात्रं कालं तद्देवदूष्यं भगवति स्थितमित्याह–‘ संवच्छरसाहियं मासंति– तदिन्द्रोपाहितं वस्त्रं संवत्सरमेकं साधिकं मासं, ‘ जं ण रिकासि ’त्ति–यन्न त्यक्तवान्

उ० १
नवमेऽध्ययने भगवत्सेविताचारस्य प्रकटनम् ।

भगवान् तत्स्थितकल्प इति कृत्वा, तत ऊर्ध्वं तद्वस्त्रपरित्यागी व्युत्सृज्य च तदऽनगारो भगवान् अचेलोऽभूत् । तच्च सुवर्ण-वालुकानदीतीरे कण्टकावलग्नं धिग्जातिना गृहीतमिति ॥ ४५ ॥ किञ्च

" अदु पोरिसिं तिरियं भित्तिं चक्खुमासज्ज अन्तसो झायइ । अह चक्खुभीया संहिया ते हन्ता हन्ता बहवे कंदिसु ॥ ४६ ॥ सयणेहिं वितिमिस्सेहिं इत्थिओ तत्थ से परिन्नाय । सागारियं न सेवेइ य, से सयं पवेसिया झाइ ॥ ४७ ॥ जे के इमे अगारत्था मीसीभावं पहाय से झाई । पुट्ठोवि नाभिभासिंसु गच्छइ नाइवत्तइ अंजू ॥ ४८ ॥ णो सुकरमेयमेगेसिं नाभिभासे य अभिवाय-माणे । हयपुव्वे तत्थ दण्डेहिं लूसियपुव्वे अप्पपुण्णेहिं ॥ ४९ ॥ "

' अदु पोरिसि '–अथ-आनन्तर्ये पुरुषप्रमाणा पौरुषी आत्मप्रमाणा वीथी तां गच्छन् ध्यायति–ईर्यासमितो गच्छति तदेवाऽत्र ध्यानं, यदीर्यासमितस्य गमनमिति भावः । किम्भूतां तां ?, ' तिर्यग्भित्तिं ' शकटोद्धिवदादौ सङ्कटामग्रतो विस्तीर्णामित्यर्थः, कथं ध्यायति ?, ' चक्षुरासाद्य '–चक्षुर्दत्वाऽन्तः–मध्ये दत्तावधानो भूत्वेति, ' अहचक्खु 'त्ति–अथानन्तरं चक्षुर्भीताः चक्षुपर्यायोऽत्र दर्शनमुच्यते, अतो दर्शनादेव भीताः दर्शनभीता डिम्भादयः संहिता मिलिताः, ते पांशुमुष्ट्यादिभिर्हत्वा च ' कन्दिसु 'त्ति–कोलाहलं कृतवन्तः । कस्त्वं ? कुतः समागतः ? कथं मुण्डो जातः? ' बहवे 'ति–भूयांसः इत्येवं हलबोलं चक्रुः । किञ्च शय्यते एष्विति शयनानि–वसतयस्तेषु कुतश्चिन्निमित्ताद् व्यतिमिश्रेषु गृहस्थतीर्थिकैः, तत्र व्यवस्थितः सन् यदि स्त्रीभिः प्रार्थ्यते, ततस्ताः शुभमार्ग्गार्गला इति ज्ञात्वा परिहरन् सागारिकं मैथुनं न सेवेत, शून्येषु च भावमैथुनं न सेवेत । इत्येवं स भगवान् स्वयमात्मना वैराग्यमार्ग्गमात्मानं प्रवेश्य धर्मध्यानं शुक्लध्यानं वा ध्यायति ।

तथा ये केचन इमेऽगारं गृहं तत्र तिष्ठन्तीति अगारस्थाः—गृहस्थास्तैर्मिश्रीभावमुपगतोऽपि द्रव्यतो भावतश्च तं मिश्रीभावं प्रहाय—त्यक्त्वा स भगवान् धर्म्मध्यानं ध्यायति। तथा कुतश्चिन्निमित्ताद् गृहस्थैः पृष्टोऽपृष्टो वा न वक्ति, स्वकार्याय गच्छत्येव, न तैरुक्तो मोक्षपथमतिवर्त्तते ध्यानं वा। 'अंजु'त्ति—ऋजुः, ऋजोः—संयमस्यानुष्ठानात्। 'णो सुकरमेयं'—नैतद् वक्ष्यमाणं उक्तं वा एकेषां—अन्येषां सुकरमेव, नाऽन्यैः कातरजनैः कर्त्तुमलम्। किं तत्? तेन कृतमित्याह—अभिवादयतो नाऽभिभाषते, नाऽप्यनभिवादयद्भ्यः कुप्यति, नापि प्रतिकूलोपसर्गैरन्यथाभावं यातीति दर्शयति—'हतपुव्वे'त्ति—दण्डैर्हतपूर्वः तत्रानार्यदेशादौ पर्यटन्, तथा लूषितपूर्वः केशलुञ्चनादिभिः?, कैः?, अल्पपुण्यैरनार्यैः पापाचारैः। किञ्च—

" फरुसाइं दुत्तितिक्खाइं अइअच्च मुणी परक्कममाण। आघायनट्टगीयाइं दण्डजुद्धाइं मुट्ठिजुद्धाइं ॥ ५० ॥ गढिए मिहु-कहासु समयंमि नायसुए विसोगे अदक्खु। एयाइ से उरालाइं गच्छइ नायपुत्ते असरणयाए ॥ ५१ ॥ अवि साहिए दुवे वासे सीओदं अभुच्चा निक्खन्ते। एगत्तगए पिहियच्चे से अहिन्नायदंसणे सन्ते ॥ ५२ ॥ "

'फरुसाइ'मित्यादि—परुषाणि—कर्कशानि तानि दुःखेन तितिक्ष्यन्ते दुस्तितिक्षाणि, तान्यतिगत्याऽविगणय्य मुनिर्विदितजगत्स्वभावः पराक्रममाणः सम्यक् तितिक्षते। 'आघायनट्ट'त्ति—आख्यातनृत्यगीतानि तानि उद्दिश्य न कौतुकं विधत्ते। नापि दण्डयुद्धमुष्टियुद्धानि आकर्ण्य विस्मयोत्फुल्ललोचन उद्धूपितरोमकूपो भवति, तथा 'ग्रथितः' अवबद्धो मिथोऽन्योन्यं कथासु स्वैरकथासु समये वा कश्चिदवबद्धस्तं स्त्रीद्वयं वा परस्परं कथायां गृद्धमपेक्ष्य तस्मिन्नवसरे 'ज्ञातपुत्रो' भगवान् विशोको विगतहर्षश्च तान् मिथः कथावबद्धान् मध्यस्थोऽद्राक्षीत्। एतानि दुःप्रधृष्याणि दुःखान्य-

स्मरन् गच्छति। उदाराणि अनुकूलप्रतिकूलोपसर्गाणि, 'णायपुत्ते'त्ति-ज्ञातपुत्रः श्रीवर्द्धमानस्वामी स भगवान् नैतद्-दुःखस्मरणाय गच्छति पराक्रमते, यदिवा शरणं-गृहं नात्र शरणमस्तीत्यशरणः-संयमस्तस्मै अशरणाय पराक्रमते। तथाहि-किमत्र चित्रं ? यद् भगवान् अमितबलपराक्रमः प्रतिज्ञाकनकाद्रिशिखरारूढः पराक्रमत इति। स भगवानऽप्रव्रजितोऽपि प्रासुकाहारानुवर्त्ती आसीत्। श्रूयते च-किल पञ्चत्वमुपगते मातपितरि समाप्तप्रतिज्ञोऽभूत्। ततः प्रविव्रजिषुः ज्ञातिभिरभिहितो, यथा भगवन् मा कृथाः क्षते क्षारावसेचनमित्येवमभिहितेन भगवताऽवधिना व्यज्ञायि। यथा-मय्यस्मिन्नवसरे प्रव्रजति सति बहवो ज्ञातीया नष्टचित्ताः स्युरित्येवं विचार्य तानुवाच-कियन्तं कालं मयाऽत्र स्थातव्यं ?, संवत्सरद्वयेनास्माकं शोकापगमो भावीति, भट्टारकोऽपि ओमित्युवाच। किन्त्वाहारादिकं मया स्वेच्छया कार्यं, नेच्छाविघाताय भवद्भिरुपस्थातव्यं, तैरपि यथाकथञ्चिदयं तिष्ठत्विति मत्वा तैः सर्वैस्तथैव प्रतिपेदे। ततो कथम्भूतो भगवान् इत्याह-' अवि साहिए 'ति-अपि साधिके द्वे वर्षे शीतोदकमभुक्त्वा अपित्वेत्यर्थः। अपराऽपि पादधावनादिकाः क्रियाः प्रासुकेनैव प्रकृत्य ततो निष्क्रान्तः, यथा च प्राणातिपातं परिहृतवान् एवं शेषव्रतान्यपि परिपालितवान्। तथा ' एकत्व '-मिति-तत एकत्वभावनाभावितान्तःकरणः पिहिता-स्थगिताऽर्चा-क्रोधज्वाला येन स तथा। सोऽपि छद्मस्थकालेऽभिज्ञातदर्शनः सम्यक्त्वभावनया भावितः शान्त इन्द्रियनोइन्द्रियैः। स एवम्भूतो भगवान् गृहवासेऽपि सावद्यारम्भत्यागी। किं पुनः प्रव्रज्यायां इत्याह—

" पुढविं च आउकायं च तेउकायं च वाउकायं च। पणगाइं बीयहरियाइं तसकायं च सव्वसो नच्चा ॥ ५३ ॥ एयाइं सन्ति

उ० १ दीक्षा-विलम्बे सति गृहस्थत्वेऽपि प्रासुकाहारादि वर्त्तनं भगवतः।

पडिलेहे, चित्तमन्ताइं से अभिन्नाय । परिवज्जिय विहरित्था इय संखाय से महावीरे ॥ ५४ ॥ अदु थावरा य तसत्ताए तसाय थावरत्ताए । अदुवा सव्वजोणिया सत्ता कम्मुणा कप्पिया पुढो बाला ॥ ५५ ॥ भगवं च एवमन्नेसिं सोवहिए हु लुप्पई बाले । कम्मं च सव्वसो नच्चा तं पडियाइक्खे पावगं भगवं ॥ ५६ ॥ दुविहं समेच्च मेहावी किरियमक्खायमऽणेलिसं नाणी । आयाणसोय-मइवायसोयं जोगं च सव्वसो णच्चा ॥ ५७ ॥

'पुढविं च 'त्ति–श्लोकद्वयं, एतानि पृथिव्यादीनि चित्तमन्ति, तदारम्भं परिवर्ज्य विहरति स्म, इति क्रियासम्बन्धः । पृथिव्यादयः,पनकशब्देन फुल्लणिः, बीजानि–शाल्यादीनि हरितान्यङ्कुरादीनि इत्येतानि भूतानि सन्ति–विद्यन्ते इत्येवं प्रत्युपेक्ष्य सचेतनान्यभिज्ञाय–भगवान्महावीरस्तदारम्भं परिवर्ज्य विहृतवानित्यर्थः । पृथ्वीकायादीनां जन्तूनां त्रसस्थावरत्वेन भेद-मुपदर्श्य साम्प्रतमेषां परस्परतोऽनुगमनमस्तीति दर्शयति–'अदु थावराय 'त्ति अथाऽनन्तरं स्थावरा पृथिव्यप्तेजोवायुवनस्प-तयस्ते च त्रसतया द्वीन्द्रियादिषु विपरिणमन्ते, कर्म्मवशाद् गच्छन्ति । चः समुच्चये त्रसजीवाश्च कृम्यादयः स्थावरतया पृथ्व्यादित्वेन कर्म्मनिघ्नाः समुत्पद्यन्ते । 'अदुव 'त्ति–अथवा सर्व्वयोनिकाः सर्व्वयोनयः उत्पत्तिस्थानानि येषां ते सर्व्व-योनिकाः सत्त्वाः प्राणिनः स्वकृतकर्म्मणा पृथक् पृथक् कल्पिताः–कथिताः । किम्भूतास्ते ?, बाला रागद्वेषान्विताः कल्पिता व्यवस्थापिताः । 'भयवं 'ति– भगवान् वर्द्धमानस्वामी एवममन्यत–ज्ञातवान्, सह उपधिना वर्त्तते इति सोपधिकः–द्रव्यभावोपधियुक्तः, हुरवधारणे, लुप्यते कर्म्मणा क्लेशमनुभवत्येव, कः ?, बालः–अज्ञः, यस्मात्सोपधिकः कर्म्मणा लुप्यते तस्मात्कर्म्म च सर्वशो ज्ञात्वा तत्कर्म्म प्रत्याख्यातवान् तदुपादानं च कर्म्मानुष्ठानं भगवान् वर्द्धमानस्वामी । किञ्च–

उ० १

त्रसस्थावर-वरजीवा मिथः परा-वर्चन्त इति सूचनम् ।

'दुविहं'ति-द्विविधं द्विप्रकारं किं ? तत् कर्म्म, तच्चेर्याप्रत्ययं साम्परायिकं च, तद् द्विविधमपि, 'समिच्च'ति-समेत्य-ज्ञात्वा मेधावी क्रियां संयमानुष्ठानरूपां कर्म्मोच्छेत्रीं, 'अक्खायमणे'लिसंत्ति-अनीदृशी अनन्यसदृशी आख्यातवान् । 'आयाण-सोय'त्ति-आदीयते इत्यादानं कर्म्म, आदानं च तच्च श्रोतः आदानश्रोतस्तद् ज्ञात्वा तथाऽतिपातश्रोतश्च, उपलक्षणार्थत्वा-दस्य मृषावादादिकमपि ज्ञात्वा, तथा योगं च मनोवाक्कायलक्षणं दुष्प्रणिहितं सर्वशः-सर्व्वैः प्रकारैः कर्म्मबन्धायेति ज्ञात्वा-क्रियां-संयमलक्षणामाख्यातवान् । किञ्च—

"अइवत्तियं अणाउट्टिं सयमन्नेसिं अकरणयाए । जस्सित्थिओ परिन्नाया सव्वकम्मावहा उ से अदक्खु ॥ ५८ ॥ अहाकडं न से सेवे सव्वसो कम्म अदक्खू । जं किंचि पावगं भगवं तं अकुव्वं वियडं भुञ्जित्था ॥ ५९ ॥ णो सेवइ य परवत्थं परपाए वी से न भुञ्जित्था । परिवज्जियाण ओमाणं गच्छइ संखडिं असरणयाए ॥ ६० ॥ मायन्ने असणपाणस्स नाणुगिद्धे रसेसु अपडिन्ने । अच्छिंपि नो पमज्जिज्जा नोवि य कंडूयए मुणी गायं ॥ ६१ ॥"

'अइवत्तियंति- अतिपातिका अनाकुट्टिरहिंसा, अतिक्रान्ता पातकादऽतिपातिका-निर्दोषा, तामाश्रित्य स्वतोऽन्येषामऽ-करणतया अव्यापारतया प्रवृत्त इति । 'जस्सित्थिओ'-यस्य स्त्रियः स्वरूपतस्तद्विपाकतश्च परिज्ञाता भवन्ति । किम्भूताः स्त्रियः ?, 'सव्वकम्मावहाः'-सर्वपापोपादानभूताः, 'से अदक्खु'-स एवाऽद्राक्षीत्- यथावस्थितसंसारस्वभावं ज्ञातवानिति । मूलगुणानाऽऽख्यायोत्तरगुणानाह-'अहा कडं'ति-यथा-येन प्रकारेण पृष्ट्वाऽपृष्ट्वा वा कृतं यथाकृतं-आधाकर्म्मादि नाऽसौ सेवते । किमिति ?, यतः-'सव्वसो'ति-सर्व्वैः प्रकारैस्तदासेवनेन कर्म्मणाऽष्टप्रकारेण बन्धमद्राक्षीत् । अन्यदपि यत्किञ्चि-

त्पापकं पापोपादानकारणं तद् भगवानऽकुर्व्वन् विकटं–प्रासुकमुपभुक्तवान्। किञ्च– नो सेवते च 'परवत्थं'–प्रधानं वस्त्रं, परस्य वा वस्त्रं, परवस्त्रम्। परपात्रेणासौ नोपभुंक्ते। परिवर्ज्य अपमानं अवगणय्य गच्छति असावाहाराय 'संखडिं'त्ति–संखण्ड्यन्ते प्राणिनोऽस्यामिति संखडिमाहारपाकस्थानभूतां, अशरणाय शरणमनालम्बमानोऽदीनमनस्कः कल्प इति कृत्वा परीषहविजयार्थं गच्छतीति। 'मायण्णे'ति–आहारस्य मात्रां जानातीति मात्रज्ञः अशनपानस्य। तथा नानुगृद्धो रसेषु। भगवतो हि गृहस्थभावेऽपि रसेषु गृद्धिर्नासीत्, किं पुनः प्रव्रजितस्य?। पुनः किम्भूतः?, 'अपडिण्णे–अप्रतिज्ञः–यथा रसेषु अप्रतिज्ञो, यथा मयाऽद्य सिंहकेसरा मोदका एव ग्राह्या इत्येवंरूपाप्रतिज्ञारहितः, अन्यत्र कुल्माषादौ सप्रतिज्ञ एव। तथा 'अच्छिंपि'–अक्ष्यपि रजःकणाद्यपनयनाय नो प्रमार्जयेत्। नापि गात्रं मुनिरसौ कण्डूयते काष्ठादिना, कण्डुव्यपनोदं न विधत्त इति। किञ्च––

"अप्पं तिरियं पेहाए अप्पिं पिट्ठिओ पेहाए। अप्पं बुइएऽपडिभाणी पंथपेहि चरे जयमाणे॥ ६२॥ सिसिरंसि अद्धपडिवन्ने तं वोसिरिज्ज वत्थमणगारे। पसारित्तु वाहुं परक्कमे नो अवलम्बियाण खंधंमि॥ ६३॥ एस विही अणुक्कन्तो माहणेण मईमया। वहुसो अपडिन्नेण भगवया एवं रियंति॥ ६४॥" उपधानश्रुताध्ययने प्रथम उद्देशकः॥ ९– १॥

'अप्पं तिरिय'मित्यादि– अल्पशब्दोऽभावे वर्त्तते, अल्पं तिर्यग् तिरश्चीनं गच्छन् प्रेक्ष्यते, अल्पं पृष्ठतः स्थित्वोत्प्रेक्ष्यते, मार्गादि केनचित्पृष्टोऽल्पभाषी सन् मौनेन गच्छत्येव। पथिप्रेक्षी 'चरेद्' गच्छेद् यतमानः, कथम्भूते मार्गे?, अल्पाण्डके–प्राणादिरहिते यत्नवानिति। 'सिसिरंसि'त्ति– अर्द्धप्रतिपन्ने शिशिरे सति तदेव देवदूष्यं च व्युत्सृज्याऽनगारो भगवान्

प्रसार्य बाहुं पराक्रमते, न तु पुनः शीतार्दितः सन् संकोचयति । नापि स्कन्धेऽवलम्ब्य तिष्ठतीति । 'एस विधी'- एष चर्याविधिरनन्तरोक्तत्वादऽनुक्रान्तो अनुचीर्णो माहनेन श्रीवीरस्वामिना । किम्भूतेन ?, मतिमता- विदितवेद्येन 'बहुशो'- अनेकप्रकारमप्रतिज्ञेनाऽनिदानेन भगवता ऐश्वर्यादिगुणोपेतेन । एवं भगवदनुचीर्णेन मार्गेणाऽन्ये मुमुक्षवोऽशेषकर्मक्षयाय साधवो रीयंते-गच्छन्ति । इत्युपधानश्रुताध्ययनस्य प्रथमोद्देशप्रदीपिका ॥

साम्प्रतं द्वितीय आरभ्यते, अस्यादिमं सूत्रम्--

" चरियासणाइं सिज्जाओ एगइयाओ जाओ बुइयाओ । आइक्ख ताइं सयणासणाइं जाइं सेवित्था से महावीरे ॥ ६५ ॥ आवेसणसभापवासु पणियसालासु एगया वासो । अदुवा पलियठाणेसु पलालपुञ्जेसु एगया वासो ॥ ६६ ॥ आगन्तारे आरामागारे तह य नगरे व एगया वासो । सुसाणे सुन्नगारे वा रूक्खमूले व एगया वासो ॥ ६७ ॥ एएहिं मुणी सयणेहिं समणे आसि पतेरसवासे । राइं दिवंपि जयमाणे अपमत्ते समाहिए झाइ ॥ ६८ ॥ "

'चरियासणाइं'ति- चर्यायामवश्यंभावितया यानि शय्यासनान्यभिहितानि सामर्थ्यायातानि, तानि शयनासनानि- शय्याफलकादीनि आचक्ष्व, सुधर्मस्वामी जम्बूनाम्नाऽभिहितो, यानि सेवितवान् महावीरो-वर्द्धमानस्वामीति । 'आवेसण' इत्यादि-भगवत आहाराभिग्रहवत् प्रतिमाव्यतिरेकेण प्रायशो न शय्याभिग्रह आसीत् । नवरं यत्रैव चरमपौरुषी भवति, तत्रैवानुज्ञाप्य स्थितवान् आवेशनं-शून्यगृहं, 'सभा' ग्रामनगरादीनां 'प्रपा'-उदकस्थानं, आवेशनसभाप्रपासु, तथा 'पण्यशालासु' क्रयाणकहट्टेषु 'एकदा' कदाचिद्वासो भगवतः । 'अदुव'त्ति-अथवा 'पलिय'त्ति-पालियं-लोहकरादि-

कर्म्मकरस्थानं तेषु, 'पलालपुञ्जेषु' मञ्चोपरिव्यवस्थितेष्वऽधो न पुनस्तेष्वेव, शुषिरत्वादिति । 'आगंतागारे'ति-प्रसङ्गादागत्य यत्र तिष्ठन्ति तदागन्तागारं तत्पुनर्ग्रामनगराद् बहिःस्थानं तत्र । आरामे आगारं-गृहं आरामागारं तत्र, नगरे वा एकदा वासः । तथा श्मशाने शून्यागारे, आवेशनशून्यगारयोः कुड्याकृतो भेदः । वृक्षमूले वैकदा वासः । 'एएहिं मुणी'ति-एतेषु शयनेषु पूर्वोक्तेषु शयनेषु-वसतिषु स मुनिः जगत्त्रयवेत्ता ऋतुबद्धे वर्षासु वा श्रमणः तपस्युद्युक्तः आसीत् । कियन्तं कालं यावदिति दर्शयति-'पतेरसवासे'-प्रकर्षेण त्रयोदशं वर्षं यावत् समस्तरात्रिंदिनमपि यतमानः संयमानुष्ठानेऽप्रमत्तो-निद्रादिप्रमादरहितः 'समाहितमनाः' विस्रोतसिकारहितो धर्म्मध्यानं शुक्लध्यानं वा ध्यायतीति ।

"निद्दंपि नो पगामाए, सेवइ भगवं उट्ठाए । जग्गावइ य अप्पाणं ईसिं साई य अपडिन्ने ॥ ६९ ॥ संबुज्झमाणे पुणरवि आसिंसु भगवं उट्ठाए । निक्खम्म एगया राओ बहि चंकमिया मुहुत्तागं ॥ ७० ॥ सयणेहिं तत्थुवसग्गा भीमा आसी अणेगरूवा य । संसप्पगा य जे पाणा अदुवा पक्खिणो उवचरन्ति ॥ ७१ ॥ अदु कुचरा उवचरन्ति गामरक्खा य सत्तिहत्था य । अदु गामिया उवसग्गा इत्थी एगइया पुरिसा य ॥ ७२ ॥"

'निद्दंपि नो'ति-निद्रा नैव प्रकामं-अत्यर्थं सेवते । तथा किल भगवतो द्वादशसंवत्सरेषु मध्येऽस्थिकाग्रामेऽन्तर्मुहूर्त्तं यावत् सकृन्निद्राप्रमाद आसीत् । ततोऽपि चोत्थायात्मानं 'जागरयति' कुशलानुष्ठानेन प्रवर्त्तयति । यत्रापीषत् शय्याऽऽसीत्तत्रापि अप्रतिज्ञः-प्रतिज्ञारहितो, न स्वापाभ्युपगमपूर्वकं शयीत । 'संबुज्झमाणे'त्ति-स मुनिर्निद्राप्रमादाद्युत्थितचित्तः सन् सम्बुद्ध्यमानः-संसारपातायाऽयं प्रमाद इत्येवमवगच्छन् पुनरप्रमत्तो भगवान् संयमस्थानेनोत्थितवान् । यदि

प्रकृष्टोपसर्गेऽपि ध्यानमग्नता प्रदर्शनम् ।

तत्रान्तर्व्यवस्थितस्य कुतश्चिन्निद्राप्रमादः स्यात् ततस्तस्मान्निष्क्रम्यैकदा शीतकालरात्र्यादौ बहिश्चङ्क्रम्य मुहूर्तमात्रं निद्राप्रमादापनयनार्थं ध्याने स्थितवानिति । 'सयणेहिं 'ति-शय्यते स्थीयते उत्कटुकासनादिभिर्येष्विति शयनानि-आश्रयस्थानानि तेषु तस्य भगवत उपसर्ग्गाः, 'भीमाः' भयानका आसन् अनेकरूपाश्च शीतोष्णादिरूपतया । तथा संसर्प्पन्तीति संसर्प्पकाः शून्यगृहादावहिनकुलादयः प्राणिन उपचरन्ति, उप सामीप्येन मांसादिकमश्नन्ति । अथवा श्मशानादौ पक्षिणो गृद्धादय उपचरन्ति । अथवा कुत्सितं चरतीति कुचराः चौरपारदारिकादयः, ते च क्वचिच्छून्यगृहादावुपचरन्ति-उपसर्गयन्ति । तथा ग्रामरक्षकादयश्च त्रिकचत्वरादिव्यवस्थितं शक्तिकुन्तादिहस्ता उपचरन्तीति । अथ ग्रामिका ग्रामधर्म्माश्रिता उपसर्ग्गा एकाकिनः स्युः, तथाहि-काचित्स्त्री रूपदर्शनादध्युपपन्ना उपसर्गयेत् पुरुषो वेति । किञ्च—

" इहलोइयाइं परलोइयाइं भीमाइं अणेगरूवाइं । अवि सुब्भिदुब्भिगन्धाइं सद्दाइं अणेगरूवाइं ॥ ७३ ॥ अहियासए सया समिए फासाइं विरूवरूवाइं । अरइं रइं अभिभूय रीयइ माहणे अबहुवाई ॥ ७४ ॥ स जणेहिं तत्थ पुच्छिसु एगचरावि एगया राओ । अव्वाहिए कसाइत्था पेहमाणे समाहिं अपडिन्ने ॥ ७५ ॥ अयमंतरंसि को इत्थ ? अहमंसित्ति भिक्खु आहट्टु । अयमुत्तमे से धम्मे तुसिणीए कसाइए झाइ ॥ ७६ ॥ "

' इहलोइयाइं 'ति- इहलोके भवा ऐहलौकिकाः मनुष्यकृताः, के ते ?, स्पर्शा दुःखविशेषाः । दिव्याः तैरश्चाश्च पारलौकिकाः, तान् उपसर्ग्गापादितान् दुःखविशेषान् अध्यासयति-अधिसहते । किम्भूताः ?, भीमा भयानकाः । अनेकरूपाः-सुरभिगन्धाः स्रक्चन्दनादयः, दुर्गन्धाः कुथितकलेवरादयः, शब्दाश्चानेकरूपा वेणुवीणामृदङ्गादिजनितास्तान् अध्या-

सयति । सदा-सर्वकालं, समितः पञ्चसमितिभिर्युक्तः । ' फासाइं 'ति-स्पर्शान्-दुःखविशेषान्, अरतिः संयमे रतिर्भोगाभिष्वङ्गे ' अभिभूय '-तिरस्कृत्य ' परीयते '-गच्छते, क ?, संयमानुष्ठाने ' माहनो '-महावीरः, किम्भूतः ? अबहुवादी । ' स यणेहिं 'त्ति- स भगवान् छद्मस्थकालं यावदेकाकी विचरन् तत्र शून्यगृहादौ व्यवस्थितः सन् जनैर्लोकैः पृष्टः, तद्यथा-को भवान् ? किमत्र स्थितः ? इत्येवं पृष्टोऽपि तूष्णीभावमभजत । तथा उपपत्याद्या अपि एकचरा एकाकिन एकदा कदाचिद्रात्रौ अह्नि वा पप्रच्छुः । अव्याहृते च भगवता कषायितास्ते दण्डमुष्ट्यादिना ताडयन्ति । भगवांस्तु तत्समाधिं प्रेक्षमाणो धर्म्मध्यानचित्तः सन् सम्यक् तितिक्षते, किम्भूतो भगवान् ?, अप्रतिज्ञः-शत्रुभावप्रतिज्ञारहितः । कथं ते पप्रच्छुरित्याह-अयमंतरंसित्ति-अयमन्तर्मध्ये कोऽत्र व्यवस्थितः ? एवं सङ्केतागता दुश्चारिणः पृच्छन्ति, कर्म्मकरादयो वा, तत्र नित्यवासिनो दुष्प्रणिहितमानसाः पृच्छन्ति । तत्र चैवं पृच्छतां भगवांस्तूष्णीभावमेव भजते । क्वचिद् बहुतरदोषापनयनाय जल्पत्यपि, कथमित्याह-' अहमंसित्ति '-भिक्खुत्ति- अहं भिक्षुरस्मि । इत्येवमुक्ते यदि तेऽवधारयन्ति ततस्तिष्ठत्येव अथाभिप्रेतार्थव्याघातात् कषायिताः सन्त एवं ब्रूयुः, यथा तूर्णमस्मात्स्थानान्निर्गच्छ, ततो भगवान् अचियत्तावग्रह इति कृत्वा निर्ग्गच्छत्येव, यदिवा न निर्गच्छत्येव भगवान् । किन्तु सोयऽमुत्तमः प्रधानो धर्म्म आचार इति कृत्वा स कषायितेऽपि तस्मिन् गृहस्थे तूष्णीभावव्यवस्थितो यद्भविष्यत्तया ध्यायत्येव-न ध्यानात्प्रच्यवते । किञ्च—

" जंसिप्पेगे पवेयन्ति सिसिरे मारुए पवायन्ते । तंसिप्पेगे अणगारा हिमवाए निवायमेसन्ति ॥ ७७ ॥ संघाडीओ पवेसिस्सामो एहा य समादहमाणा । पिहिया व सक्खामो अइदुक्खे हिमगसंफासा ॥ ७८ ॥ तंसि भगवं अपडिन्ने अहे विगडे अहि-

उ० २

शून्यगृहादौ स्थितस्य प्रकृष्टोपसर्ग्गसहनता ।

यासए। दविए निक्खम एगया राओ ठाइए भगवं समियाए ॥ ७९ ॥ एस विही अणुक्कन्तो माहणेण मईमया। बहुसो अपडिण्णेण भगवया एवं रीयन्ति ॥ ८० ॥ त्ति बेमि" ९-२—

'जंसिप्पेगे' इत्यादि-यस्मिन् शिशिरादावप्येके त्वक्त्राणाभावतया 'पवेयंति'-प्रवेपन्ते-कम्पन्ते, दन्तवीणादिसमन्विताः कम्पन्त इत्यर्थः। तस्मिंश्च शिशिरे प्रवाति मारुति सति एके-अनगारा अन्यतीर्थिका न सर्वे, हिमवातेन पीडिताः, तदपनोदाय पावकं प्रज्वालयन्ति अङ्गारशकटिकामन्वेषयन्ति, प्रावारकं वा याचन्ते-प्रार्थयन्ति। यदिवा पार्श्वनाथतीर्थप्रव्रजिता गच्छवासिन एव शीतार्दिता निवातमेषयन्ति- घट्टशालादिका वसतीः प्रार्थयन्ति। 'संघाडीओ'ति-संघाटीशब्देन शीतापनोदक्षमं कल्पद्वयं त्रयं वा गृह्यते, ताः संघाटीः शीतार्दिता वयं प्रवेक्ष्यामः। एवं शीतार्दिता अनगारा अपि विदधति। तीर्थिकप्रव्रजितास्त्वेधाः-समिधः काष्ठानि समादहन्तः शीतस्पर्शं सोढुं शक्ष्यामः। तथा संघाट्या वा पिहिताः- कम्बलाद्यावृतशरीरा इति। किमर्थमेतत्कुर्वन्तीत्याह—यतोऽतिदुःखमेतत्- अतिदुःसहमेतद्, यदुत हिमसंस्पर्शा दुःखेन सह्यन्ते। तदेवम्भूते शिशिरे स्वयूथ्येतरेष्वनगारेषु यथोक्तानुष्ठानवत्सु सत्सु यद् भगवान् व्यधात्, तदाह-'तंसि भगवं'ति-तस्मिन्नेवम्भूते हीमवाते शीतस्पर्शे सर्वंकषे भगवान् तं शीतस्पर्शं सर्वमध्यासयेत्। किम्भूतो? अप्रतिज्ञः न विद्यते निर्वातवसतिप्रार्थनादिकाप्रतिज्ञा यस्य स तथा। क अध्यासयन्?, 'अहे'त्ति अधो विकटे अधः कुड्यादिरहिते, छन्नेऽप्युपरि तदभावे वेति। किम्भूतः-दविए-द्रविकः संयमवान् 'निक्खम्म'-निष्क्रम्य बहिरेकदा रात्रौ मुहूर्त्तमात्रं स्थित्वा पुनः प्रविश्य स भगवान् शमितया सम्यग् वा समतया वा व्यवस्थितः सन् तं शीतस्पर्शं रासभदृष्टान्तेन सोढुं

शक्नोति-अधिसहत इति । 'एसविही'-एष विधिरित्यादि पूर्ववत् । उपधानश्रुताध्ययने द्वितीयोद्देशकः ॥

अधुना तृतीय आरभ्यते, अस्यादिमं सूत्रम्—

" तणफासे सीयफासे य तेउफासे य दंसमसगे य । अहियासए सया समिए फासाइं विरूवरूवाइं ॥ ८१ ॥ अह दुच्चरलाढचारी वज्जभूमिं च सुब्भभूमिं च । पंतं सिज्जं सेविसु आसणगाणि चेव पंताणि ॥ ८२ ॥ लाढेहिं तस्सुवसग्गा बहवे जाणवया लूसिंसु । अह लूहदेसिए भत्ते कुकुरा तत्थ हिंसिंसु निवइंसु ॥ ८३ ॥ अप्पे जणे निवारेइ लूसणए सुणए दसमाणे । छुच्छुकारिंति आहंसु समणं कुक्कुरा दंसंतुत्ति ॥ ८४ ॥ "

'तणफासे'ति-तृणानां कुशादीनां स्पर्शास्तृणस्पर्शाः, तथा शीतिस्पर्शा उष्णस्पर्शा आतापनादिकाले आसन्, तथा दंशमशकादयश्च, एतांश्च तृणस्पर्शादीन् 'विरूपरूपान्'-नानाभूतान् भगवानध्यासयति, समितिभिः समितः । 'अह दुच्चर'त्ति-अथाऽनन्तरं दुःखेन चर्यत इति दुश्चरः स चासौ लाढश्च जनपदविशेषो दुश्चरलाढस्तं, वज्रभूमिं च विहृतवान् । स च द्विरूपो-वज्रभूमिः शुभ्रभूमिश्च । तत्र च प्रान्तां 'शय्यां'-वसतिं शून्यगृहादिकामनेकोपद्रवोपद्रुतां सेवितवान् । प्रान्तानि वा आसनानि पांशूत्करलोष्ठाद्युपचितानि काष्ठानि च दुर्घटानि आसेवितवान् । 'लाढेहिं'ति-तत्र लाढेषु देशेषु तस्य भगवतो बहव उपसर्गाः प्रायशः प्रतिकूलाः-आक्रोशश्वभक्षणादय आसन् । तानेव दर्शयति-जनपदे भवा जानपदाः, अनार्याचारिणो लोकाः ते भगवन्तं लूषितवन्तो-दन्तभक्षणोल्मुकदण्डप्रहारादिभिर्जिहिंसुः । 'अह लुक्खदेसीए भत्ते'-भक्तमपि रूक्षदेश्यं-रूक्षकल्पं अन्तप्रान्तं च, ते चानार्यतया प्रकृतिक्रोधनाः, कर्पासाद्यभावाच्च तृणप्रावरणाः सन्तो

भगवति विरूपमाचरन्ति । कुर्कुराः श्वानस्ते च जिहिंसुरुपरि निपेतुः । 'अप्पजणे 'त्ति–तत्राल्पजनो निवारयति शुनो लूषकान् दशतो निवारयति । अपि तु चण्डप्रहारादिभिर्भगवन्तं हत्वा तत्प्रेरणाय सीत्कुर्वन्ति । कथं तु नामैनं श्रमणं कुर्कुराः श्वानो दशन्तु ? । तत्र चैवंविधे जनपदे भगवान् षण्मासावधिं कालं स्थितवानिति । किञ्च—

" एलिक्खए जणा भुज्जो बहवे वज्जभूमिए फरुसासी । लट्ठिं गहाय नालियं समणा तत्थ य विहरिंसु ॥ ८५ ॥ एवंपि तत्थ विहरन्ता पुट्ठपुव्वा अहेसि सुणिएहिं । संलुचमाणा सुणएहिं दुच्चराणि तत्थ लाढेहिं ॥ ८६ ॥ निहाय दण्डं पाणेहिं तं कायं वोसिरिज्जमणगारे । अह गामकण्टए भगवन्ते अहियासए अभिसमिच्चा ॥ ८७ ॥ नागो संगामसीसे वा पारए तत्थ से महावीरे । एवं पि तत्थ लाढेहिं अलद्धपुव्वोवि एगया गामो ॥ ८८ ॥

'एलिक्खए 'ति–ईदृशः–पूर्वोक्तस्वरूपस्तत्रत्यजनः, तथालक्षणं जनपदं भगवान् पौनःपुन्येन विहृतवान् । तस्यां च वज्रभूमौ बहवो जनाः परुषाशिनो–रूक्षभोजिनः, रूक्षाशितया च प्रकृतिक्रोधनास्ततो यतिरूपमुपलभ्य कदर्थयन्ति । तत्रान्ये श्रमणाः–शाक्यादयो यष्टिं देहप्रमाणां चतुरङ्गुलाधिकप्रमाणां वा नालिकां गृहीत्वा श्वादिनिषेधनाय विजह्रुः । 'एवंपि ' त्ति–एवमपि यष्ट्यादिकया सामग्र्या श्रमणा विहरन्तः स्पृष्टपूर्वा–आरब्धपूर्वाः श्वभिरासन् । तथा संलुच्यमाना इतश्चेतश्च भक्ष्यमाणाः श्वभिरासन् दुर्निवारत्वात्तेषां, 'तत्र '–तेषु लाढेष्वार्यलोकानां दुःखेन चर्यन्त इति दुश्चराणि ग्रामादीनीति । तदेवम्भूतेष्वपि लाढेषु भगवान् कथं विहृतवान् ? इति दर्शयति–' निहाय दंडं 'ति–प्राणिषु दण्डः मनोवाक्कायादिकः प्राणिदण्डस्तं निधाय-त्यक्त्वा, तथा तच्छरीरमप्यनगारो व्युत्सृज्याथ 'ग्रामकण्टकान् '–नीचजनरूक्षालापानपि भगवांस्तां-

उ० ३
तत्र वज्रभूमौ घोराः परीषहाः सोढेति दर्शनम् ।

तिरस्कारादयो घोराः प्रकारा जाता इति प्रदर्शनम् ।

स्तान् सम्यक्करणतया निर्जरामभिसमेत्य–ज्ञात्वाऽध्यासयति । कथं ? यथा नागो–हस्ती संग्रामशिरसि परानीकं जित्वा तत्पारगो भवति, एवं भगवानपि श्रीवीरस्तत्र लाढेषु परीषहानीकं विजित्य पारगोऽभूत् । किञ्च–तत्र लाढेषु विरलत्वाद् ग्रामाणां क्वचिदेकदा वासायालब्धपूर्वो ग्रामोऽपि भगवता ॥ किञ्च–

" उवसंकमन्तमपडिन्नं गामंतियम्मि अप्पत्तं । पडिनिक्खमित्तु लूसिंसु एयाओ परं पलेहित्ति ॥ ८९ ॥ हयपुव्वो तत्थ दण्डेण अदुवा मुट्ठिणा अदु कुन्तफलेण । अदु लेलुणा कवालेण हन्ता हन्ता बहवे कन्दिंसु ॥ ९० ॥ मंसाणि छिन्नपुव्वाणि उट्ठंभिया एगया कायं । परीसहाइं लुंचिंसु अदुवा पंसुणा उवकरिंसु ॥ ९१ ॥ उच्चालइय निहणिंसु अदुवा आसणाउ खलइंसु । वोसट्ठकायपणयाऽऽसी दुक्खसहे भगवं अपडिन्ने ॥ ९२ ॥ "

" उवसंकमन्त "त्ति– ' उपसंक्रामन्तं '–भिक्षायै वासाय वा गच्छन्तं, ' अप्रतिज्ञं '–नियतवासादिप्रतिज्ञारहितं ग्रामान्तिकं प्राप्तमप्राप्तमपि तस्माद् ग्रामात्प्रतिनिर्गत्य ते जना भगवन्तमलूषिषुः । एतच्चोचुः–इतोऽपि स्थानात्परं दूरतरं स्थानं पर्येहि–गच्छेति । ' हयपुव्वो 'ति–तत्र ग्रामादेर्बहिर्व्यवस्थितः, पूर्वं हतो हतपूर्वः, केन ?, मुष्टिना दण्डेनाथवा लेष्टुना कपालेन वा घटकर्परादिनाऽथवा कुन्तादिफलेन वा ' हंता 'ति–हत्वा २ बहवोऽनार्याः चक्रन्दुः–पश्यत यूयं किम्भूतोऽयमित्येवं कलकलं चक्रुः । ' मंसाणि 'त्ति–मांसानि च तत्र भगवतश्छिन्नपूर्वाणि एकदा कायमवष्टभ्य–आक्राम्य नानाप्रकाराः परीषहाश्च भगवन्तमलुञ्चिषुः, अथवा पांसुनाऽवकीर्णवन्त इति । ' उच्चालय 'त्ति–भगवन्तमुर्ध्वमुत्क्षिप्य भूमौ निहतवन्तः–क्षिप्तवन्तः, अथवा आसनात्–वीरासनादिकात् स्खलितवन्तो–निपातितवन्तः । भगवांस्तु पुनर्व्युत्सृष्टकायः

॥ २३५ ॥

भगवतो दन्तप्रक्षालनाद्यनाचारवर्जन-निरूपणम्।

परीषहसहनं प्रति प्रयत्न आसीत्, परीषहोपसर्गकृतं दुःखं सहत इति दुःखसहो भगवान्। नास्य दुःखचिकित्साप्रतिज्ञा विद्यत इत्यप्रतिज्ञः। कथं भगवान् दुःखं सहत इत्येतद्दृष्टान्तद्वारेणाह—

"सूरो संगामसीसे वा संवुडे तत्थ से महावीरे। पडिसेवमाणे फरुसाइं अचले भगवं रीयित्था ॥ ९३ ॥ एस विही अणुक्कन्तो माहणेण मईमया। बहुसो अपडिण्णेणं भगवया रीयंति ॥ ९४ ॥ त्तेमि" ९–३–

'सूरो'–ऽइत्यादिपदं परीषहानीकतुद्यमानोऽपि, प्रतिसेवमानश्च परुषान् दुःखविशेषान्, मेरुरिवाऽचलो निःप्रकम्पो, यथा संग्राममस्तके महायोद्धाः सर्वं सहन्ते तथैव भगवानपि मेरुवदऽचलो निःप्रकम्पो रीयते स्म ज्ञानदर्शनचारित्रात्मके मोक्षाध्वनि पराक्रमते स्म। एसविहीत्यादि पूर्ववत्। इत्युपधानश्रुताध्ययनस्य तृतीयोद्देशकप्रदीपिका ॥ ९–३

अथ चतुर्थोद्देशक आरभ्यते, तस्यादिमं सूत्रम्—

"ओमोयरियं चाएइ अपुट्ठेऽवि भगवं रोगेहिं। पुट्ठे वा अपुट्ठे वा नो से साइज्जई तेइच्छं ॥ ९५ ॥ संसोहणं च वमणं च गायब्भंगणं च सिणाणं च। संबाहणं च न से कप्पे दन्तपक्खालणं च परिन्नाए ॥ ९६ ॥ विरए गामधम्मेहिं रीयइ माहणे अबहुवाई। सिसिरंमि एगया भगवं छायाए झाइ आसीय ॥ ९७ ॥ आयावइ य गिम्हाणं अच्छइ उक्कुडुए अभित्तावे। अदु जावइत्थ लूहेणं ओयणमंथुकुम्मासेणं ॥ ९८ ॥"

'ओमोयरियं'ति–अपि शीतोष्णदंशमशकाक्रोशताडनाद्याः शक्याः परीषहाः सोढुं, न पुनरवमोदरतां–न्यूनोदरतां शक्नोति कर्तुम्। लोको हि रोगैरभिद्रुतः सन् तदुपशमनायाऽवमोदरतां विधत्ते। भगवांस्तु तदभावेऽपि विधत्त इत्यपि

ओदनमन्थुकुल्माषेण शरीरयापनेति।

शब्दार्थः। 'पुट्ठो वा से'—स भगवान् स्पृष्टो वा श्वभक्षणादिभिरस्पृष्टो वा कासादिभिः, भगवतो न प्राकृतजनस्येव देहजाः कासादयो रोगा भवन्ति, आगन्तुकास्तु प्रहारजा भवेयुः। अतः स्पृष्टो वा नासौ चिकित्सामभिलषति। 'संसोहण'त्ति—गात्रस्य सम्यक् शोधनं—विरेचनं निःसोत्रादिभिः, गात्राभ्यङ्गनं च सहस्रपाकतैलादिभिः, स्नानं चोद्वर्त्तनादिभिः, संबाधनं च हस्तपादादिभिः तस्य भगवतो न कल्पते। सर्वमेव शरीरमशुच्यात्मकमित्येवं परिज्ञाय—ज्ञात्वा दन्तकाष्ठादिभिर्दन्तप्रक्षालनं च न कल्पते। 'विरए'त्ति—विरतो निवृत्तः केभ्यो?, ग्रामधर्म्मेभ्यः, चशब्दाद् विषयेभ्यः, रीयते-गच्छते संयमानुष्ठाने पराक्रमते। 'माहणे'त्ति—श्रीमन्महावीरः। किम्भूतः?, अबहुवादी—मितभाषी मौनी वेत्यर्थः। तथैकदा शिशिरसमये स भगवान् शुक्लध्यानध्यायी आसीत्। क्व?, 'छायायां' आतापयति ग्रीष्मेष्विति। 'अच्छइ'—तिष्ठति उत्कटासनः, 'अभितापे'—तापाभिमुखं 'अदु'त्ति—अथवा यापयति स्म धर्म्माधारं देहं, केन?, 'लूहेणं'ति—रूक्षेण स्नेहरहितेन ओदनमन्थुकुल्माषेण—ओदनं—कोद्रवौदनादि, मन्थु—बदरचूर्णादिकं, कुल्माषाः—माषविशेषा एवोत्तरापथे धान्यविशेषभूताः, पर्युषितमाषा वा, सिद्धमाषा वा, ओदनमन्थुकुल्माषमिति समाहारद्वन्द्वः, तेनात्मानं यापयतीति। एतदेव कालावधिविशेषणतो दर्शयितुमाह—

"एयाणि तिन्नि पडिसेवे अट्ठमासे अ जावयं भयवं। अपि इत्थ एगया भयवं अद्धमासं अदुवा मासंपि ॥ ९९ ॥ अपि साहिए दुवे मासे छप्पि मासे अदुवा विहरित्था। राओवरायं अपडिन्ने अन्नगिलायमेगया भुंजे ॥ १०० ॥ छट्ठेण एगया भुंजे अदुवा अट्ठमेण दसमेणं। दुवालसमेण एगया भुंजे पेहमाणे समाहिं अपडिन्ने ॥ १०१ ॥ णच्चा णं से महावीरे नोऽवि य पावगं सयमकासी। अन्नेहिं वा ण कारित्था कीरंतंपि नाणुजाणित्था ॥ १०२ ॥"

'एयाणि'त्ति-एतानि त्रीणि प्रतिसेवते-व्यस्तानि समस्तानि च यथालाभं प्रतिसेवते। कियन्तं कालं ?, 'अट्ठमासे'त्ति-अष्टौ मासान् ऋतुबद्धकान् आत्मानमयापयत्-तपस्सु वर्त्तितवान्। तथा पानकमप्यर्द्धमासं अथवा मासं भगवान्न पीतवान्। 'अपि साहिये'त्ति-मासद्वयमपि साधिकं, अथवा षडपि मासान् साधिकान्, भगवान् पानकमपीत्वा, रात्रोपरात्रं-अहर्निशं विहृतवान्। अप्रतिज्ञः-पानाभ्युपगमरहितः। 'अण्णगिलाइं'त्ति-पर्युषितं तदेकदा भुक्तवान्। 'छट्ठे'त्ति-षष्ठेनैकदा भुंक्ते, अथवाऽष्टमेन, दशमेन द्वादशेन एकदा-कदाचिद् भुक्तवान्। 'पेह'त्ति-शरीरसमाधिं प्रेक्षमाणः, न पुनर्भगवतः कदाचिद् दौर्मनस्यमुत्पद्यते। तत्राऽप्रतिज्ञः-प्रतिज्ञारहितः। तत्र ज्ञात्वा स महावीरः 'नोविय'त्ति-नैवाऽपि च पापकर्म्म स्वयमकार्षीत्, न चाऽन्यैरचीकरत्, न च क्रियमाणमपरैरनुज्ञातवान्। किञ्च-

"गामं पविसे नगरं वा घासमेसे कडं परट्ठाए। सुविसुद्धमेसिया भगवं आयतजोगयाए सेवित्था ॥ १०३ ॥ अदु वायसा दिगिंछत्ता जे अन्ने रसेसिणो सत्ता। घासेसणाए चिट्ठन्ति सययं निवइए य पेहाए ॥ १०४ ॥ अदुवा माहणं च समणं वा गामपिण्डोलगं च अतिहिं वा। सोवागमूसियारिं वा कुक्कुरं वावि विट्ठियं पुरओ ॥ १०५ ॥ वित्तिच्छेयं वज्जन्तो तेसिमप्पत्तियं परिहरन्तो। मन्दं परक्कमे भगवं अहिंसमाणो घासमेसित्था ॥ १०६ ॥"

'गाम'मित्यादि-ग्रामं वा नगरं वा प्रविश्य भगवान् ग्रासमन्वेषयत्। परार्थाय कृतं, तमप्युद्गमदोषरहितं, सुविशुद्धं-उत्पादनादोषरहितं, तथैषणादोषपरिहारेणैषित्वा-अन्वेष्य भगवान् आयतः-संयतो योगो मनोवाक्कायलक्षणः आयतयोगस्तस्य भाव आयतयोगता तया। ज्ञानचतुष्टयेन सम्यग् योगप्रणिधानं कृत्वा शुद्धाहारं गवेषितवानित्यर्थः। 'अदु वायस'त्ति-अथ भिक्षां पर्यटतो भगवतः पथि वायसाः-काकाः 'दिगिंछत्ति'-बुभुक्षा तया आर्त्ताः, ये चान्ये रसैषिणः-पानार्थिनः

कपोतपारापतचिटकादयः सत्त्वाः, ग्रासेषणार्थे–अन्वेषणार्थं वा ये तिष्ठन्ति, संततमनवरतं निपतितान् भूमौ प्रेक्ष्य तेषां वृत्तिव्यवच्छेदं वर्जयन्मन्दं मन्दं आहारार्थी पराक्रमते–गच्छत इत्यर्थः । 'अदु माहणं 'ति–अथ ब्राह्मणं लाभार्थमुपस्थितं दृष्ट्वा, तथा श्रमणं–शाक्याजीवकादिनिर्ग्रन्थाऽन्यतरं, ग्रामपिण्डोलको द्रमकः, 'अतिहिं 'ति–अतिथिं वा आगन्तुकं श्वपाकं–चाण्डालं मार्जारं कुर्कुरं श्वानं विविधं स्थितं पुरतो–अग्रतः समुपलभ्य तेषां वृत्तिच्छेदं वर्जयन् मनसो दुःप्रणिधानं वर्जयन् मन्दं मनाक् तेषां त्रासमकुर्वन् भगवान् पराक्रमते । अन्यांश्च कुन्थुकादीन् जन्तून् अहिंसन् ग्रासमन्वेषितवानिति । किञ्च–

"अवि सूइयं वा सुक्कं वा सीयं पिंडं पुराणकुम्मासं । अदु बुक्कसं पुलागं वा लद्धे पिंडे अलद्धे दविए ॥ १०७ ॥ अवि झाइ से महावीरे आसणत्थे अकुक्कुए झाणं । उड्ढं अहे तिरियं च पेहमाणे समाहिमपडिन्ने ॥ १०८ ॥ अकसाई विगयगेही य सद्दरूवेसु अमुच्छिए झाई । छउमत्थोऽवि परक्कममाणो न पमायं सइंपि कुव्वित्था ॥ १०९ ॥ सयमेव अभिसमागम्म आयतजोगमायसोहीए । अभिनिव्वुडे अमाइल्ले आवकहं भगवं समियासी ॥ ११० ॥ एस विही अणु० रीयइ ॥ १११ ॥ त्ति बेमि ॥"

९–४ पढमो सुयक्खंधो सम्मत्तो ॥ मूलसूत्रग्रन्थाग्रं ८०० शुभं भवतु ॥

'अवि सूइयत्ति'– अपि निश्चितं शूचिकं-दध्याद्योदनं च, शुष्कं वा, शीतलपिण्डं वा, 'पुराण 'त्ति–जीर्णकुल्माषं वा, 'बुक्कसं 'ति–रसरहितं पुलाकं यवनिष्पावादि, तदेवम्भूतं पिण्डमवाप्य रागद्वेषरहितः, 'लद्धे 'ति–लब्धे पर्याप्ते शोभने वा नोत्कर्षं याति, नाप्यलब्धेऽपर्याप्तेऽशोभने वाऽऽत्मानमाहारदातारं वा जुगुप्सते, किन्तु द्रविक एव । 'अविझाइ 'त्ति–तस्मिन्नाहारे लब्धेऽलब्धे वा ध्यायति स महावीरो, दुष्प्रणिधानादिना नापध्यानं विधत्ते । 'आसनस्थो '–उत्कटुकगोदोहिकावीरासनाद्यवस्थोऽकौत्कुचः सन्-मुखविकारादिरहितो ध्यानं धर्म्मशुक्लयोरन्यतरदारोहति । किं ध्येयं ध्यायति ? इत्याह–

उ० ४
निःसार शीतादि-पिण्डभोक्ता भगवान् विशुद्धध्यानवांश्च ।

'उड्ढं अहे'त्ति–उर्ध्वमधस्तिर्यग्वा लोकस्य, ये जीवपरमाण्वादिका भावा व्यवस्थितास्तान् द्रव्यपर्यायान् नित्यानित्यादिरूपतया ध्यायति। 'समाहिमपडिन्ने'त्ति–समाधिमन्तःकरणशुद्धिं च प्रेक्षमाणः अप्रतिज्ञो ध्यायति। 'अकसाइ'त्ति–अकषायी तदुदयापादितभ्रकुट्यादिकार्याभावात्। 'विगइ'त्ति विगता गृद्धिः–गार्ध्यं यस्याऽसौ विगतगृद्धिः, शब्दरूपादिष्विन्द्रियार्थेषु अमूर्छितो ध्यायति। ब्रह्मस्थोऽपि विविधमनेकप्रकारं सदनुष्ठाने पराक्रममाणो न प्रमादकषायादिकं सकृदपि कृतवान्। 'आययजोग'त्ति–आत्मशुद्ध्या कर्म्मक्षयोपशमादिरूपया आयतयोगं सुप्रणिहितमनोवाक्कायात्मकं विधाय विषयकषायाद्युपशमादिभिर्निर्वृत्तः–शीतीभूतः। अमायावी–मायारहितः। यावज्जीवं भगवान् पञ्चभिः समितिभिः समितः, तिसृभिर्गुप्तिभिर्गुप्त आसीत्। 'एसविही'त्ति–एषोऽनन्तरोक्तो विधिः शस्त्रपरिज्ञादेरारभ्य योऽभिहितः सोऽनुक्रान्तोऽनुष्ठित आसेवनपरिज्ञया सेवितः। केन? श्रीवर्द्धमानस्वामिना मतिमता–ज्ञानचतुष्टयसमन्वितेन बहुशोऽनेकशः। अप्रतिज्ञेन–अनिदानेन, भगवता–ऐश्वर्यादिगुणोपेतेन। अतोऽपरोऽपि मुमुक्षुरनेनैव भगवदाचीर्णेन मोक्षप्रगुणेन पथाऽऽत्महितमाचरन् रीयते–पराक्रमते। इति रधिकारसमाप्तौ, ब्रवीमीति सुधर्म्मस्वामी जम्बूस्वामिने कथयति–सोऽहं ब्रवीमि येन मया भगवद्वदनारविन्दादर्थजातं निर्यातमवधारितमिति, उपधानश्रुताध्ययनस्य चतुर्थोद्देशकः। प्रथमश्रुतस्कन्धः समाप्तः॥

इति श्रीचन्द्रगच्छाम्भोजदिनमणीनां श्रीमहेश्वरसूरिसर्वसूरिशिरोमणीनां पट्टे श्रीअजितदेवसूरिविरचितायां श्रीमदाचाराङ्गदीपिकायामुपधानश्रुताख्यमध्ययनं समाप्तं, तत्समाप्तौ च समाप्तो ब्रह्मचर्याख्यप्रथमश्रुतस्कन्धः॥

॥ श्रीआचाराङ्गसूत्रप्रथमश्रुतस्कन्धदीपिका ॥

उ० ४ भगवत्सेविताचारो मुमुक्षुणा सेवनीय इति।